# तैत्तिरीयसंहिता

भट्टभास्करमिश्रविरचितभाष्यसहिता

सम्पादकौ

ए० महादेव शास्त्री

के० रङ्गाचार्यश्च

प्राक्कथनलेखकः

प्रो० आर० एन० दाण्डेकरः

नवमो भागः

[ काण्डः ६; प्रश्नाः ५–६ एवं काण्डः ७; प्रश्नाः १–३ ]

मो ती ला ल ब ना र सी दा स

दिल्ली वाराणसी पटना मद्रास

THE

# TAITTIRĪYA SAṂHITĀ

OF THE

## BLACK YAJURVEDA

With the Commentary of
BHAṬṬA BHĀSKARA MIŚRA

*Edited by*
A. MAHADEVA SASTRI
and
K. RANGACHARYA

*Foreword by*
Prof. R. N. DANDEKAR

VOL. IX
[ Kāṇḍa VI : Praśnas 5-6 ]
[ Kāṇḍa VII : Praśnas 1-3 ]

Sa2V22
Tai/M.S.R

MOTILAL BANARSIDASS
*Delhi Varanasi Patna Madras*

## EDITOR'S NOTE.

No manuscript of Bhaṭṭa-Bháskara's commentary on the fourth káṇḍa having been as yet found, and our MSS. of the commentary on the fifth káṇḍa not having been sufficiently varied, we had to continue the printing of our edition of the commentary from the sixth káṇḍa onward, prepared with the aid of the following MSS. :—

(1) A Grantha Manuscript of the commentary on the sixth and seventh káṇḍas belonging to the Sarasvati Bhaṇḍára of H. H. the Mahárája of Mysore.

(2) A Telugu palm-leaf MS. of the commentary on the sixth and seventh káṇḍas, belonging to the Government Oriental Library, Mysore.

(3) A Grantha palm-leaf MS. of the commentary on the sixth and sevanth káṇḍas, belonging to the Government Oriental Library, Mysore.

(4) A Grantha palm-leaf MS. of the commentary on the fifth and sixth káṇḍas, belonging to S'rí S'ringeri Maṭṭ at Kúḍli.

Since commencing the printing of this portion, we have been able to collate our edition of the commentary on the fifth, sixth, and seventh káṇḍas with the MSS. found in the Madras Government Oriental MSS. Library and in the Sarasvatí-Mahal of the Tanjore Palace. By the time this collation was done the printing of Vols. X and XI was almost completed, these volumes comprising the sixth káṇḍa and the first three prapáṭhakas of the seventh. Important variations of readings found in the Tanjore and Madras MSS. are noted at the end of the volumes.

A. M. S.

Recd. from parimal publications, Delhi 7, Bill no. 163 dt. 12/9/87 Price Rs. 1100/- (for a set)

# विषयसूचिका.

## सौमिकब्राह्मणम्. ६—५, ६.

### षष्ठे काण्डे पञ्चमप्रपाठकः.



### षष्ठः प्रपाठकः.

अनु.

## सप्तमकाण्डम्.

### प्रथमः प्रपाठकः.



### द्वितीयः प्रपाठकः.

## तृतीयः प्रपाठकः.

हरिः ओं.

# तैत्तिरीयसंहिता

## भट्टभास्करमिश्रविरचितभाष्यसहिता.

### षष्ठकाण्डे

### पञ्चमप्रपाठकः.

इन्द्रो वृत्राय वज्रमुदयच्छत्स वृत्रो वज्रादुद्यतादबिभेत्सोऽब्रवीन्मा मे प्र हारस्ति वा इदं मयि वीर्यं तत्ते प्र दास्यामीति तस्मा उक्थ्यं प्रायच्छ-

[1]इन्द्रः । वृत्राय । वज्रम् । उदिति । अयच्छत् । सः । वृत्रः । वज्रात् । उद्यतादित्युत्-यतात् । अबिभेत् । सः । अब्रवीत् । मा । मे । प्रेति । हाः । अस्ति । वै । इदम् । मयि । वीर्यम् । तत् । ते । प्रेति । दास्यामि । इति । तस्मै । उक्थ्यम् ।

---

[1]इन्द्रो वृत्रायेत्यादि ॥ वृत्रं प्रहर्तुं वज्रमुदयच्छत् उद्यतवान् । स च तस्मादुद्यतात् अबिभेत् भीतवान् । अथ स वृत्रोऽब्रवीत् इन्द्रम् । मा मे प्रहाः मां मा प्रहार्षीः, अस्ति मयीदं वीर्यं तत्तुभ्यं

तस्मै द्वितीयमुद्यच्छथ्सोऽब्रवीन्मा मे प्र हारस्ति वा इदं मयि वीर्यं तत्ते प्र दास्यामीति ॥ १ ॥ तस्मा उक्थ्यमेव प्रायच्छत्तस्मै तृतीयमुद्यच्छत्तं विष्णुरन्वतिष्ठत जहीति सोऽब्रवीन्मा मे प्र हारस्ति वा इदं

प्रेति । अयच्छत् । तस्मै । द्वितीयम् । उदिति । अयच्छत् । सः । अब्रवीत् । मा । मे । प्रेति । हाः । अस्ति । वै । इदम् । मयि । वीर्यम् । तत् । ते । प्रेति । दास्यामि । इति ॥ १ ॥ तस्मै । उक्थ्यम् । एव । प्रेति । अयच्छत् । तस्मै । तृतीयम् । उदिति । अयच्छत् । तम् । विष्णुः । अन्विति । अतिष्ठत । जहि । इति । सः । अब्रवीत् । मा । मे । प्रेति । हाः । अस्ति । वै । इदम् । म-

प्रदास्यामीत्युक्त्वा तस्मै उक्थ्यं ग्रहं प्रायच्छत् । हरतेर्लुङि सिचि वृद्धौ 'बहुलं छन्दसि' इतीडभावे 'यस्य' इति लोपे 'रात्सस्य' इति स लोपः । तस्मै द्वितीयमित्यादि । गतम् । तृतीये पर्याये तमुद्यतवज्रमिन्द्रं अनुलक्ष्य इन्द्रकार्यमुद्दिश्य विष्णुरन्वतिष्ठत आत्मानं प्रकाशितवान् । प्रकाशने आत्मनेपदम् । कथं वदन्? जहीति । जह्येतं सहायस्तवाहमिति । यद्वा—

मयि वीर्यं तत्ते प्र दास्यामीति त-
स्मा उक्थ्यमेव प्रायच्छत्तं निर्मायं
भूतमहन् यज्ञो हि तस्य मायाऽऽसी-
द्यदुक्थ्यो गृह्यत इन्द्रियमेव ॥ २ ॥
तद्वीर्यं यजमानो भ्रातृव्यस्य वृङ्क्त
इन्द्राय त्वा बृहद्वते वयस्वत इत्या-

यि । वीर्यम् । तत् । ते । प्रेति । दास्यामि । इति । तस्मै । उक्थ्यम् । एव । प्रेति । अयच्छत् । तम् । निर्मायमिति निः—मायम् । भूतम् । अहन् । यज्ञः । हि । तस्य । माया । आसीत् । यत् । उक्थ्यः । गृह्यते । इन्द्रियम् । एव ॥ २ ॥ तत् । वीर्यम् । यजमानः । भ्रातृव्यस्य । वृङ्क्ते । इन्द्राय । त्वा । बृहद्वत इति बृहत्—वते । वयस्वते । इति । आह । इन्द्राय । हि । सः । तम् । प्रेति । अय-

---

जह्येनं मायावित्वमेवास्यैतत् यदिदं वीर्यप्रदानमिति । वृत्रोपि तत् पुनस्तृतीयमुक्थ्यं प्रायच्छत् । अथेन्द्रः त्रिषूक्थ्येषु वृत्तेषु निर्मायं भूतं मायारहितं संजातं सुखेन हतवान् वृत्रम् । का पुनरस्य मायेत्याह—यज्ञो हीति । यज्ञो हि तस्य मायास्थानीयः व्यामोहहेतुरासीत् । तेन भीतोभवत् । अतो निर्मायत्वात्तं हतवान् । यदुक्थ्य इत्यादि । गतम् । यदेवेत्यादि । यस्माद्विष्णुस्सह-

हैन्द्राय हि स तं प्रायच्छत्तस्मै त्वा
विष्णवे त्वेत्याह यदेव विष्णुरन्व-
तिष्ठत जहीति तस्माद्विष्णुमन्वा
भंजति त्रिर्निगृह्णाति त्रिर् हि स
तं तस्मै प्रायच्छदेष ते योनिः पु-
नर् हविरसीत्याह पुनःपुनः ॥ ३ ॥

च्छत् । तस्मै । त्वा । विष्णवे । त्वा । इति । आ-
ह । यत् । एव । विष्णुः । अन्वतिष्ठतेत्यनु–अति-
ष्ठत । जहि । इति । तस्मात् । विष्णुम् । अन्वा-
भंजतीत्यनु–आभंजति । [2]त्रिः । निरिति । गृह्णा-
ति । त्रिः । हि । सः । तम् । तस्मै । प्रेति । अ-
यच्छत् । एषः । ते । योनिः । पुनर्हविरिति पुनः–
हविः । असि । इति । आह । पुनःपुनरिति पुनः–
पुनः ॥ ३ ॥ हि । अस्मात् । निर्गृह्णातीति निः–

---

कारितया जहीत्यवदत् तस्मात्तमप्यत्रान्वाभजति इन्द्रेण सह भाग-
वन्तं करोत्यस्मिन् ग्रहे ॥

[2]त्रिरिति ॥ त्रेधा ग्रहं निर्भज्य गृह्णाति । 'एष ते योनिः पुनर् हविरसि' इति शाखान्तरपाठं व्याचष्टे—यत्र पुनरस्मान्निः-गृह्यते तत्रैव सामर्थ्यात् पुनर्हविरसीति भवितव्यमिति गम्यते ॥

ह्यस्मान्निर्गृह्णाति चक्षुर्वा एतद्यज्ञ-
स्य यदुक्थ्यस्तस्मादुक्थ्यꣳ हुतꣳ
सोमा अन्वायन्ति तस्मादात्मा च-
क्षुरन्वेति तस्मादेकं यन्तं बहवोनु
यन्ति तस्मादेको बहूनां भद्रो भव-
ति तस्मादेको बह्वीर्जाया विन्दते

गृह्णाति । [3]चक्षुः । वै । एतत् । यज्ञस्य । यत् । उक्थ्यः । तस्मात् । उक्थ्यम् । हुतम् । सोमाः । अन्वायन्तीत्यनु—आयन्ति । तस्मात् । आत्मा । चक्षुः । अन्विति । एति । तस्मात् । एकम् । यन्तम् । बहवः । अन्विति । यन्ति । तस्मात् । एकः । बहूनाम् । भद्रः । भवति । तस्मात् । एकः ।

---

[3]चक्षुर्वा इत्यादि ॥ अस्य चक्षुस्थानीयत्वात् अमुं हुतमनुलक्ष्य सोमाश्चमसा आयन्ति । तस्मादेव कारणात् आत्मा पुरुषश्चक्षुरन्वेति अनुगच्छति चक्षुषा दृष्टमेव प्रतिपद्यते । तस्मादेव कारणादेकं चक्षुष्मन्तं यन्तं बहवोचक्षुषोनुयन्ति अनुगच्छन्ति । यद्वा—एकं प्रधानं चक्षुस्थानीयं यन्तं बहवो राजानो[वोअनुजनाअ]नुयन्ति सेवन्ते । तस्मादेव कारणात् एकः पुरुषः चक्षुरिव प्रदर्शको बहूनां भद्रः कल्याणकारी भवति बहूनामुपजीव्यो भवति । तस्मादेव कारणात् चक्षुस्थानीय एकः स्वतन्त्रः पुमान् बह्वीर्जाया अस्वतन्त्रा विन्दते लभते ॥

यदि कामयेताध्वर्युरात्मानं यज्ञय-
शसेनार्पयेयमित्यन्तराऽऽहवनीयं च
हविर्धानं च तिष्ठन्नवं नयेत् ॥ ४ ॥
आत्मानमेव यज्ञयशसेनार्पयति य-
दि कामयेत यजमानं यज्ञयशसे-
नार्पयेयमित्यन्तरा सदोहविर्धाने ति-
ष्ठन्नवं नयेद्यजमानमेव यज्ञयशसे-

बह्वीः । जायाः । विन्दते । [4]यदि । कामयेत । अ-
ध्वर्युः । आत्मानम् । यज्ञयशसेनेति यज्ञ-यशसे-
न । अर्पयेयम् । इति । अन्तरा । आहवनीयमि-
त्या-हवनीयम् । च । हविर्धानमिति हविः-धानम् ।
च । तिष्ठन् । अवेति । नयेत् ॥ ४ ॥ आत्मानम् ।
एव । यज्ञयशसेनेति यज्ञ-यशसेन । अर्पयति ।
यदि । कामयेत । यजमानम् । यज्ञयशसेनेति यज्ञ-
यशसेन । अर्पयेयम् । इति । अन्तरा । सदोहवि-
र्धाने इति सदः-हविर्धाने । तिष्ठन् । अवेति । नयेत् ।
यजमानम् । एव । यज्ञयशसेनेति यज्ञ-यशसेन ।

---

[4]यदि कामयेतेत्यादि ॥ यज्ञस्य यशः फलं यज्ञयशसम्, 'अनस-न्तान्नपुंसकात्' इत्यच्समासान्तः । आहवनीयहविर्धानयोर्मध्ये तिष्ठन्

नार्पयति यदि कामयेत सदस्यान्
यज्ञयशसेनार्पयेयमिति सद आल-
भ्यावं नयेथ्सदस्यानेव यज्ञयशसे-
नार्पयति ॥ ५ ॥

आयुर्वा एतद्यज्ञस्य यद्ध्रुव उत्तमो

अर्पयति । यदि । कामयेत । सदस्यान् । यज्ञयशसेनेति यज्ञ-यशसेन । अर्पयेयम् । इति । सदः । आलभ्येत्या-लभ्य । अवेति । नयेत् । सदस्यान् । एव । यज्ञयशसेनेति यज्ञ-यशसेन । अर्पयति ॥५॥

इतीन्द्रियमेव पुनःपुनर्नयेत्तयस्त्रिंशच्च ॥१॥

[1]आयुः । वै । एतत् । यज्ञस्य । यत् । ध्रुवः । उत्तम इत्युत्-तमः । ग्रहाणाम् । गृह्यते । तस्मात् ।

---

होतृचमसमवनयेत् । गतमन्यत् । आलभ्यानुप्राप्यावनयेत् ॥

इति षष्ठे पञ्चमे प्रथमोनुवाकः.

---

[1]आयुर्वा इत्यादि ॥ ध्रुवो नाम यज्ञस्यायुस्थानीयः उत्तमोऽन्त्यो धाराग्रहाणां गृह्यते । तस्मात्कारणात्प्राणानां प्राणनकालानामायुरुत्तमं उद्गततमं जीवनकालसमम्बन्धित्वादायुषः । मूर्धानमेवेति । एनं यजमानं समानानां प्रधानं करोति । वैश्वानरं हीति । तत्स्थित्यधीनत्वात् । उभयतोवैश्वानर इति । ऋचि

ग्रहाणां गृह्यते तस्मादायुः प्राणा-
नामुत्तमं मूर्धानं दिवो अरतिं पृथि-
व्या इत्याह मूर्धानमेवैनꣳ समाना-
नां करोति वैश्वानरमृताय जातम-
ग्निमित्याह वैश्वानरꣳ हि देवतयाऽऽ-
युरुभयतोवैश्वानरो गृह्यते तस्मा-

आयुः । प्राणानामिति प्र-अनानाम् । उत्तममि-
त्युत्-तमम् । मूर्धानम् । दिवः । अरतिम् । पृथि-
व्याः । इति । आह । मूर्धानम् । एव । एनम् ।
समानानाम् । करोति । वैश्वानरम् । ऋताय ।
जातम् । अग्निम् । इति । आह । वैश्वानरम् । हि ।
देवतया । आयुः । उभयतोवैश्वानर इत्युभयतः-
वैश्वानरः । गृह्यते । तस्मात् । उभयतः । प्राणा
इति प्र-अनाः । अधस्तात् । च । उपरिष्टात् ।
च । अर्धिनः । अन्ये । ग्रहाः । गृह्यन्ते । अर्धी ।

---

यजुषि च वैश्वानरग्रहणात् । उभयत इति । अधस्तात्पायूपस्थं उपरिष्टाच्चक्षुरादि । अर्धिन इत्यादि । अन्येऽपि सर्वेऽपि ग्रहाः अर्धिनः अर्धवन्तः यज्ञार्धस्य वोढारः । ध्रुवः एक एवार्धी अर्धान्तरस्य वोढा तस्मादवाङ्प्राणः उपस्थ अर्धी देहकृतस्य अर्धस्य निर्वोढा पुरुषोत्पत्तिस्तत इति कृत्वा । अन्येषां प्राणानामिति ।

दुभयतः प्राणा अधस्ताच्चोपरिष्टा-
च्चार्धिनोऽन्ये ग्रहा गृह्यन्तेऽर्धी ध्रुव-
स्तस्मात् ॥ ६ ॥ अर्ध्यवाङ्गाणोऽन्ये-
षां प्राणानामुपोप्तेऽन्ये ग्रहास्साद्य-
न्तेऽनुपोप्ते ध्रुवस्तस्मादस्थ्नाऽन्याः
प्रजाः प्रतितिष्ठन्ति मा᳚ꣳसेनान्या

ध्रुवः । तस्मात् ॥ ६ ॥ अर्धी । अवाङ् । प्राण इति प्र—अनः । अन्येषाम् । प्राणानामिति प्र—अनानाम् । [2]उपोप्त इत्युप—उप्ते । अन्ये । ग्रहाः । साद्यन्ते । अनुपोप्त इत्यनुप—उप्ते । ध्रुवः । तस्मात् । अस्थ्ना । अन्याः । प्रजा इति प्र—जाः । प्रतितिष्ठन्तीति प्रति—तिष्ठन्ति । मा᳚ꣳसेन । अन्याः ।

---

सामर्थ्यादर्थान्तरं निर्वाह्यमिति गम्यते । यद्वा—अन्येषां प्राणानां यादृशोर्धो निर्वोढव्यः तादृशेनार्धेन तस्य निर्वोढृत्वात् ॥

[2]उपोप्त इति ॥ उपोप्ते मृदमुपोप्य खरीकृते अन्ये ग्रहास्साद्यन्ते, अनुपोप्ते भूम्यामेव ध्रुवस्साद्यते । तस्मादस्थ्ना खरेण खुरादिना अन्याः प्रजाः गवादयः प्रतितिष्ठन्ति भूम्यां स्थितिं कुर्वन्ति अन्यास्तु मनुष्यादयः प्रजाः मांसेन प्रतितिष्ठन्ति ॥

असुरा वा उत्तरतः पृथिवीं पर्या-
चिकीर्षन्तां देवा ध्रुवेणादृꣳहन्तद्ध्रु-
वस्य ध्रुवत्वं यद्ध्रुव उत्तरतस्साद्यते
धृत्या आयुर्वा एतद्यज्ञस्य यद्ध्रुव
आत्मा होता यद्धोतृचमसे ध्रुवमव
नयत्यात्मन्नेव यज्ञस्य ॥ ७ ॥ आ-

[3]असुराः । वै । उत्तरत इत्युत्-तरतः । पृथिवीम् । पर्याचिकीर्षन्निति परि-आचिकीर्षन् । ताम् । देवाः । ध्रुवेण । अदृꣳहन् । तत् । ध्रुवस्य । ध्रुवत्वमिति ध्रुव-त्वम् । यत् । ध्रुवः । उत्तरत इत्युत्-तरतः । साद्यते । धृत्यै । [4]आयुः । वै । एतत् । यज्ञस्य । यत् । ध्रुवः । आत्मा । होता । यत् । होतृचमस इति होतृ-चमसे । ध्रुवम् । अवनयतीत्यव-नयति । आत्मन् । एव । यज्ञस्य ॥ ७ ॥

---

[3]असुरा वा इत्यादि ॥ पर्याकर्तुमुत्तरत आक्रष्टुमैच्छन् । देवास्तु तां ध्रुवेण ग्रहेणादृंहन् दृढामकुर्वन् । तेनायं ध्रुवोभवत् । ध्रुवं करोतीति ध्रुवः, ण्यन्तात्पचाद्यच् । तस्मादुत्तरतोस्य सादनं पृथिव्याः धृत्यै धारणाय भवति ॥

[4]आयुर्वा इत्यादि ॥ गतम् । पुरस्तादुक्थस्य शस्त्रस्य च पूर्वस्मिन्नर्धे अवनीय अवनेतव्य इत्याहुः यज्ञविदः । आयुषः पूर्वभागे हि

युर्दधाति पुरस्तादुक्थस्यावनीय इ-
त्याहुः पुरस्ताद्ध्यायुषो भुङ्क्ते मध्य-
तोऽवनीय इत्याहुर्मध्यमेन ह्यायुषो
भुङ्क्त उत्तरार्धेऽवनीय इत्याहुरुत्तमेन
ह्यायुषो भुङ्क्ते वैश्वदेव्यामृचि शस्य-
मानायामवं नयति वैश्वदेव्यो वै

आयुः । दधाति । पुरस्तात् । उक्थस्य । अवनीय इत्यव-नीय । इति । आहुः । पुरस्तात् । हि । आयुषः । भुङ्क्ते । मध्यतः । अवनीय इत्यव-नीय । इति । आहुः । मध्यमेन । हि । आयुषः । भुङ्क्ते । उत्तरार्ध इत्युत्तर-अर्धे । अवनीय इत्यव-नीय । इति । आहुः । उत्तमेनेत्युत्-तमेन । हि । आयुषः । भुङ्क्ते । वैश्वदेव्यामिति वैश्व-देव्याम् । ऋचि । शस्यमानायाम् । अवेति । नयति । वैश्वदेव्य इति वैश्व-देव्यः । वै । प्रजा इति प्र-जाः । प्रजा-

स्वैरं भुङ्क्ते पुरुषः । तस्मादायुस्संबन्धाय पुरस्तादेवावनयनं कुर्यात् । मध्यतः मध्ये शस्त्रस्यावनेतव्य इत्यन्य आहुर्यज्ञविदः । आयुषो मध्यमे हि भागे प्रभूतं भुङ्क्ते । उत्तरार्धे शस्त्रस्यावने-

प्रजाः प्रजास्वेवायुर्दधाति ॥ ८ ॥

यज्ञेन वै देवास्सुवर्गं लोकमाय-
न्तेऽमन्यन्त मनुष्या नोन्वाभविष्य-
न्तीति ते संवथ्सरेण योपयित्वा

स्विति प्र–जासु । एव । आयुः । दधाति ॥ ८ ॥

अर्धी ध्रुवस्तस्मादेव यज्ञस्यैकान्न
चत्वारिꣳशच्च ॥ २ ॥

[1]यज्ञेन । वै । देवाः । सुवर्गमिति सुवः–गम् । लोकम् । आयन् । ते । अमन्यन्त । मनुष्याः । नः । अन्वाभविष्यन्तीत्यनु–आभविष्यन्ति । इति । ते । संवत्सरेणेति सं–वत्सरेण । योपयित्वा । सु-

---

तव्य इत्यपरे यज्ञविद आहुः । उत्तमे ह्यायुषो भागे श्रद्दधानो भुङ्क्ते । वैश्वदेव्यामित्यादि । गतम् ॥

इति षष्ठे पञ्चमे द्वितियोनुवाकः.

---

[1]यज्ञेन वा इत्यादि ॥ गतम्* । अस्मदनुसारेण स्वर्गमागमिष्यन्तीति । अथ ते संवत्सरेण योपयित्वा मोहयित्वा मनुष्यान् स्वर्गं गताः । संवत्सरमहिमाक्षिप्तचेतसो मनुष्याः स्वर्गं नाद्रियन्ते । युप विमोहने ।

---

*सं. ६-३-४, [22]

सुवर्गं लोकमायन्तमृषय ऋतुग्रहैरे-
वानु प्राजानन् यदृतुग्रहा गृह्यन्ते
सुवर्गस्य लोकस्य प्रज्ञात्यै द्वादश
गृह्यन्ते द्वादश मासास्संवथ्सरस्सं-
वथ्सरस्य प्रज्ञात्यै सह प्रथमौ गृह्ये-

वर्गमिति सुवः—गम् । लोकम् । आयन्न् । तम् । ऋषयः । ऋतुग्रहैरित्यृतु—ग्रहैः । एव । अनु । प्रेति । अजानन्न् । यत् । ऋतुग्रहा इत्यृतु—ग्रहाः । गृह्यन्ते । सुवर्गस्येति सुवः—गस्य । लोकस्य । प्रज्ञात्या इति प्र—ज्ञात्यै । द्वादश । गृह्यन्ते । द्वादश । मासाः । संवत्सर इति सं—वत्सरः । संवत्सरस्येति सं—वत्सरस्य । प्रज्ञात्या इति प्र—ज्ञात्यै ।

---

अथ ऋषयः तं स्वर्गं ऋतुग्रहैरेवानुप्राजानन् प्रज्ञातवन्तः । तस्मादृतुग्रहाणां ग्रहणं स्वर्गस्य प्रज्ञात्यै भवति । द्वादशानां ग्रहणं द्वादशमासात्मकसंवत्सरस्य प्रज्ञात्यै भवति । संवत्सरस्य हि प्रज्ञानेन मोहनिवृत्त्या स्वर्गः प्रज्ञातो भवति । प्रथमौ उत्तमौ च सह गृह्येते । सामर्थ्यादन्ये भेदेन गृह्यन्ते इति गम्यते । तस्माद्वौ द्वौ ऋतू ऋत्ववयवौ द्वौ मासौ एक ऋतुरिति यावत् । उभयत इत्यादि । को नाम तद्वेद । किम्? यतः प्रभृति ऋतूनां मुखमुपक्रमः ऋतुधर्माणां प्रवृत्त्यारम्भः केन चिदपि न ज्ञायते

ते सहोत्तमौ तस्माद्द्वौद्वावृतू उभय-
तोमुखमृतुपात्रं भवति कः ॥ १ ॥
हि तद्वेद यत ऋतूनां मुखमृतुना
प्रेष्येति षकृत्व आह षड्वा ऋतव
ऋतूनेव प्रीणात्यृतुभिरिति चतुश्चतु-

सह । प्रथमौ । गृह्येते इति । सह । उत्तमावित्युत्-तमौ । तस्मात् । द्वौद्वाविति द्वौ-द्वौ । ऋतू इति । उभयतोमुखमित्युभयतः-मुखम् । ऋतुपात्रमित्यृतु-पात्रम् । भवति । कः ॥ १ ॥ हि । तत् । वेद । यतः । ऋतूनाम् । मुखम् । [2]ऋतुना । प्रेति । इष्य । इति । षट् । कृत्वः । आह । षट् । वै । ऋतवः । ऋतून् । एव । प्रीणाति । ऋतुभि-

अत्रैव मुखं स्यादिति । तस्य च दुर्ज्ञानत्वादुभयतो मुखे ऋतुपात्रे भवतः ॥

[2]ऋतुनेत्यादि ॥ ऋतुना प्रेष्येति आद्येषु त्रिषु अध्वर्युराह । एवं त्रिषु प्रतिप्रस्थाता । एवं षट्कृत्व आह । षड्वा इत्यादि । गतम्* । ऋतुभिरित्यादि । पात्रयोर्मुखे अवाङ्मुखमपर्यावृत्य ऋतुभिः प्रेष्येति सप्तमादिषु द्वयोरध्वर्युराह । एवं द्वयोः प्रतिप्रस्थाता । एवं चतुराह । चतुष्पदः पशून् गवादीन् प्रीणाति । द्विः पुनरित्यादि ।

*सं. ६-२-३.[10]

ष्पद एव पशून्प्रीणाति द्विः पुनर्
ऋतुनाऽऽह द्विपदं एव प्रीणात्यृतु-
ना प्रेष्येति षट्कृत्व आहर्तुभिरिति
चतुस्तस्माच्चतुष्पादः पशव ऋतूनु-
पं जीवन्ति द्विः ॥ १० ॥ पुनर्
ऋतुनाऽऽह तस्माद्द्विपादश्चतुष्पदः

रित्यृतु–भिः । इति । चतुः । चतुष्पद इति चतुः–पदः । एव । पशून् । प्रीणाति । द्विः । पुनः । ऋतुना । आह । द्विपद इति द्वि–पदः । एव । प्रीणाति । [3]ऋतुना । प्रेति । इष्य । इति । षट् । कृत्वः । आह । ऋतुभिरित्यृतु–भिः । इति । चतुः । तस्मात् । चतुष्पाद इति चतुः–पादः । पशवः । ऋतून् । उपेति । जीवन्ति । द्विः ॥ १० ॥ पुनः । ऋतुना । आह । तस्मात् । द्विपाद इति द्वि–पादः । चतु-

---

पुनः पात्रयोर्मुखे पर्यावृत्य ऋतुना प्रेष्येति सकृदध्वर्युराह । एवं सकृत्प्रतिप्रस्थाता । एवं द्विराह । द्विपदः पशून् मनुष्यादीन् प्रीणाति ॥

[3]एवं षण्णां चतुर्णां द्वयोश्च पृथक्पृथक् स्तुतिः कृता । इदानीं संघातं स्तोतुमाह—ऋतुनेत्यादि ॥ यस्मादेवं षट्कृत्वः चतुष्कृत्वश्चाह तस्माच्चतुष्पादः पशवः गवादयः ऋतूनुपजीवन्ति

पशूनुप जीवन्त्यृतुना प्रेष्येति षट्कृ-
त्व आहर्तुभिरिति चतुर्द्विः पुनर् ऋ-
तुनाऽऽहाक्रमणमेव तथ्सेतुं यजमा-
नः कुरुते सुवर्गस्य लोकस्य सम-
ष्ट्यै नान्योन्यमनु प्र पद्येत यदन्यो-

ष्पद इति चतुः-पदः । पशून् । उपेति । जीव-
न्ति । [4]ऋतुना । प्रेति । इष्य । इति । षट् । कृत्वः ।
आह । ऋतुभिरित्यृतु-भिः । इति । चतुः । द्विः ।
पुनः । ऋतुना । आह । आक्रमणमित्या-क्रमण-
म् । एव । तत् । सेतुम् । यजमानः । कुरुते । सु-
वर्गस्येति सुवः-गस्य । लोकस्य । समष्ट्या इति
सं-अष्ट्यै । [5]न । अन्यः । अन्यम् । अनु । प्रेति ।

---

ऋतुधर्मान् शीतोष्णादीनुपजीवन्ति । ततः पुनश्च यस्मात् 'ऋतुना' इति द्विराह तस्माद्द्विपादः पशवः चतुष्पदश्च पशून् क्षीरादिभोगेनोपजीवन्ति ॥

[4]इदानीं संघातस्य स्तुत्यन्तरं क्रियते—ऋतुनेत्यादि ॥ ऋतुना ऋतुभिः ऋतुनेति षट्कृत्वः चतुः द्विश्च यद्वचनं तदाक्रमणं सोपानं सेतुं गमनमार्गं यजमानः कुरुते स्वर्गस्य समष्ट्यै प्राप्त्यर्थम् ॥

[5]नान्योन्यमित्यादि ॥ परस्परस्यानुप्रवृत्तिं न कुर्यातामध्वर्युप्रतिप्रस्थातारौ । यदैको हविर्धानान्निष्क्रामति नेतरस्तदा निष्क्रामेत् ।

न्यमनुप्रपद्येतर्तुर् ऋतुमनु प्र पद्ये-
तर्तवो मोहुकास्स्युः ॥ ११ ॥
प्रसिद्धमेवाध्वर्युर्दक्षिणेन प्र पद्यते
प्रसिद्धं प्रतिप्रस्थातोत्तरेण तस्मा-

पद्येत । यत् । अन्यः । अन्यम् । अनुप्रपद्येतेत्यनु-प्रपद्येत । ऋतुः । ऋतुम् । अनु । प्रेति । पद्येत । ऋतवः । मोहुकाः । स्युः ॥ ११ ॥[6]प्रसिद्धमिति प्र-सिद्धम् । एव । अध्वर्युः । दक्षिणेन । प्रेति । पद्यते । प्रसिद्धमिति प्र-सिद्धम् । प्रतिप्रस्थातेति प्रति-प्र-स्थाता । उत्तरेणेत्युत्-तरेण । [7]तस्मात् । आदि-

---

अपितु प्रविशेत् । यदैकः प्रविशति नेतरस्तदा प्रविशेत्, अपितु निष्क्रामेत् । द्वार्येव संभवति ततः प्रविशन्तमेवाध्वर्युं प्रति-प्रस्थाता ग्रहेण परिगृह्णाति । निष्क्रामन्तमध्वर्युं पात्रेण परि-गृह्णाति । यदान्योन्यमनुप्रपद्येत तदा ऋतुः ऋत्वन्तरमनुप्रपद्येत एकप्रवृत्ते इतरः प्रवर्तेत । ततश्च ऋतवो मोहुका मोहनशीलाः संकीर्णस्वभावास्स्युः । छान्दस उकञ् ॥

[6]प्रसिद्धमेवेत्यादि ॥ गमनसिद्धेरारम्भः प्रसिद्धं, उपक्रमतः प्रभृति अव्यवधानेन दक्षिणेन प्रतिपद्यते अध्वर्युः । अतः प्रभृति प्रतिप्रस्थाता च उत्तरेण प्रसिद्धमेव प्रतिपद्यते । यद्वा—प्रसिद्धं प्रथमसिद्धं मार्गं दक्षिणेनोत्तरं उत्तरमार्गं प्रतिपद्यते दक्षिणतोपक्रम्य गच्छेत् ॥

[7]तस्मादिति ॥ आदित्यः आषाढादीन् षण्मासान् दक्षिणेनैति

दादित्यष्षण्मासो दक्षिणेनैति षडु-
त्तरेणोपयामगृहीतोसि सꣳसर्पो-
स्यꣳहस्पत्याय त्वेत्याहास्ति त्रयो-
दशो मास इत्याहुस्तमेव तत्प्री-
णाति ॥ १२ ॥

त्यः । षट् । मासः । दक्षिणेन । एति । षट् । उ-
त्तरेणेत्युत्-तरेण । उपयामगृहीत इत्युपयाम-
गृहीतः । असि । सꣳसर्प इति सं-सर्पः । असि ।
अꣳहस्पत्यायेत्यꣳहः-पत्याय । त्वा । इति । आ-
ह । अस्ति । त्रयोदश इति त्रयः-दशः । मासः ।
इति । आहुः । तम् । एव । तत् । प्रीणाति ॥१२॥

को जीवन्ति द्विस्स्युश्चतुस्त्रिꣳशच्च ॥ ३ ॥

---

दक्षिणस्यां दिशि गच्छति । 'एनबन्यतरस्याम्' इत्येनप्प्रत्ययः । अथ तैषादीन् षण्मासान् उत्तरेणादित्यो गच्छति । स एव प्रत्ययः । उपयामगृहीतोसीत्यादि । गतम्* । तद्ग्रहणं योधिकमासस्तमेव मासं प्रीणाति प्रीणयति त्रयोदशेन ग्रहणेन ॥

इति षष्ठे पञ्चमे तृतीयोनुवाकः.

---

*सं. १-४-१४,[13]

सुवर्गाय वा एते लोकाय गृह्यन्ते
यदृतुग्रहा ज्योतिरिन्द्राग्नी यदैन्द्राग्न-
मृतुपात्रेण गृह्णाति ज्योतिरेवास्मा
उपरिष्टाद्दधाति सुवर्गस्य लोकस्या-
नुख्यात्या ओजोभृतौ वा एतौ दे-
वानां यदिन्द्राग्नी यदैन्द्राग्नो गृह्यत

[1]सुवर्गायेति सुवः—गाय । वै । एते । लोकाय । गृह्यन्ते । यत् । ऋतुग्रहा इत्यृतु—ग्रहाः । ज्योतिः । इन्द्राग्नी इतीन्द्र—अग्नी । यत् । ऐन्द्राग्नमित्यैन्द्र—अग्नम् । ऋतुपात्रेणेत्यृतु—पात्रेण । गृह्णाति । ज्योतिः । एव । अस्मै । उपरिष्टात् । दधाति । सुवर्गस्येति सुवः—गस्य । लोकस्य । अनुख्यात्या इत्यनु—ख्यात्यै । [2]ओजोभृताविल्योजः—भृतौ । वै । एतौ । देवानाम् । यत् । इन्द्राग्नी इतीन्द्र—अग्नी । यत् । ऐन्द्राग्न इत्यैन्द्र—अग्नः । गृह्यते । ओजः ।

[1]सुवर्गायेत्यादि ॥ गतम् । स्वर्गं गच्छतो हि प्रकाशेन ज्योतिषा भाव्यं, तस्माद्दतुपात्रेणैन्द्राग्नस्य ग्रहणात् यजमानार्थं ज्योतिर्दधाति उत्पादयति, उपरिष्टात्स्वर्गप्राप्तिकाले स्वर्गस्यानुक्रमेण प्रकाशनार्थम् ॥

[2]ओजोभृतावित्यादि ॥ देवानां मध्येऽतिशयेन ओजोभृतावेतौ । गतमन्यत् ॥

ओजं एवावं रुन्धे वैश्वदेवꣳ शुक्र-
पात्रेणं गृह्णाति वैश्वदेव्यो वै प्रजा
असावांदित्यश्शुक्रो यद्वैश्वदेवꣳ शु-
क्रपात्रेणं गृह्णाति तस्मांदसावांदित्यः
॥ १३ ॥ सर्वाः प्रजाः प्रत्यङ्ङुदेति
तस्माथ्सर्वं एव मंन्यते मां प्रत्युदं-
गादितिं वैश्वदेवꣳ शुक्रपात्रेणं गृह्णा-

एव । अवेतिं । रुन्धे । [3]वैश्वदेवमितिं वैश्व—
देवम् । शुक्रपात्रेणेतिं शुक्र—पात्रेणं । गृह्णाति ।
वैश्वदेव्यं इतिं वैश्व—देव्यः । वै । प्रजा इतिं
प्र—जाः । असौ । आदित्यः । शुक्रः । यत् । वैश्व-
देवमितिं वैश्व—देवम् । शुक्रपात्रेणेतिं शुक्र—पात्रेणं ।
गृह्णातिं । तस्मात् । असौ । आदित्यः ॥ १३ ॥ स-
र्वाः । प्रजा इतिं प्र—जाः । प्रत्यङ् । उदितिं । एति ।
तस्मात् । सर्वः । एव । मन्यते । माम् । प्रतिं ।
उदितिं । अगात् । इतिं । वैश्वदेवमितिं वैश्व—देवम् ।

---

[3]वैश्वदेवमित्यादि ॥ आदित्यात्मनः शुक्रस्य पात्रेण विश्वग्रह-
संबन्धिवैश्वदेवग्रहणात् सर्वाः प्रजाः प्रत्यङ् प्रतिमुखमादित्य उदेति ।
तस्मात्सर्वोपि जनो मन्यते मां प्रत्युदगादिति मां प्रत्युदगादयमिति

ति वैश्वदेव्यो वै प्रजास्तेजश्शुक्रो
यद्वैश्वदेवꣳ शुक्रपात्रेण गृह्णाति प्रजा-
स्वेव तेजो दधाति ॥ १४ ॥

इन्द्रो मरुद्भिस्सांविद्येन माध्यंन्दिने
सवने वृत्रमहन् यन्माध्यंन्दिने सर्व-

शुक्रपात्रेणेति शुक्र—पात्रेण । गृह्णाति । वैश्वदेव्य इति वैश्व—देव्यः । वै । प्रजा इति प्र—जाः । तेजः । शुक्रः । यत् । वैश्वदेवमिति वैश्व—देवम् । शुक्रपात्रेणेति शुक्र—पात्रेण । गृह्णाति । प्रजास्विति प्र—जासु । एव । तेजः । दधाति ॥ १४ ॥

तस्मादसावादित्यस्त्रिꣳशश्च ॥ ४ ॥

[1]इन्द्रः । मरुद्भिरिति मरुत्—भिः । सांविद्येनेति सां—विद्येन । माध्यंन्दिने । सवने । वृत्रम् । अहन् ।

---

मदर्थसाधनायैवायमुदित इति सर्वो मन्यते सर्वाभिमतोदय उदेतीति यावत् । वैश्वदेवविधानं गुणान्तरार्थम् । तेजआत्मनः शुक्रस्य पात्रेण वैश्वदेवग्रहणात् प्रजासु तेजः स्थापयति ॥

इति षष्ठे पञ्चमे चतुर्थोनुवाकः.

---

[1]इन्द्रो मरुद्भिरित्यादि ॥ सांविद्यं ऐकमत्यं मित्रभावः ।

ने मरुत्वतीया गृह्यन्ते वार्त्रघ्ना एव
ते यजमानस्य गृह्यन्ते तस्य वृत्रं
जघ्नुष ऋतवोमुह्यन्त्स ऋतुपात्रेण
मरुत्वतीयानगृह्णात्ततो वै स ऋतू-
न्प्राजानाद्यदृतुपात्रेण मरुत्वतीया
गृह्यन्त ऋतूनां प्रज्ञात्यै वज्रं वा

यत् । माध्यन्दिने । सवने । मरुत्वतीयाः । गृह्य-
न्ते । वार्त्रघ्ना इति वार्त्र–घ्नाः । एव । ते । यज-
मानस्य । गृह्यन्ते । तस्य । वृत्रम् । जघ्नुषः । ऋ-
तवः । अमुह्यन् । सः । ऋतुपात्रेणेत्यृतु–पात्रेण ।
मरुत्वतीयान् । अगृह्णात् । ततः । वै । सः । ऋ-
तून् । प्रेति । अजानात् । यत् । ऋतुपात्रेणेत्यृतु–
पात्रेण । मरुत्वतीयाः । गृह्यन्ते । ऋतूनाम् । प्र-
ज्ञात्या इति प्र–ज्ञात्यै । [2]वज्रम् । वै । एतम् । यज-

मरुत्वतीयाः, मरुद्भिस्तद्वान् । 'तसौ मत्वर्थे' इति भत्वम्, ततो देवतायां 'द्यावापृथिवीशुनासीर' इत्यादिना छः । वार्त्रघ्ना इति । वृत्रादेर्हन्तुस्स्वभूता भवन्ति तदर्था भवन्तीति यावत् ; उत्सादित्वादञ् । तस्येत्यादि । तस्य ऋतवोमुह्यन् मूढा अज्ञातस्वभावा अभवन् । स इत्यादि । गतम् ॥

[2]वज्रं वा इत्यादि ॥ प्रथमेन मरुत्वतीयेन वज्रमुद्यच्छते,

एतं यजमानो भ्रातृव्याय प्र हरति
यन्मरुत्वतीया उदेव प्रथमेन ॥ १५
यच्छति प्र हरति द्वितीयेन स्तृणुते
तृतीयेनायुधं वा एतद्यजमानस्सं-
स्कुरुते यन्मरुत्वतीया धनुरेव प्रथ-
मो ज्या द्वितीय इषुस्तृतीयः प्रत्ये-

मानः । भ्रातृव्याय । प्रेति । हरति । यत् । मरु-
त्वतीयाः । उदिति । एव । प्रथमेन ॥ १५ ॥
यच्छति । प्रेति । हरति । द्वितीयेन । स्तृणुते ।
तृतीयेन । [3]आयुधम् । वै । एतत् । यजमानः ।
समिति । कुरुते । यत् । मरुत्वतीयाः । धनुः ।
एव । प्रथमः । ज्या । द्वितीयः । इषुः । तृतीयः ।
प्रतीति । एव । प्रथमेन । धत्ते । वीति । सृजति ।

---

द्वितीयेन भ्रातृव्यं ताडयति, तृतीयेन स्तृणुते मारयति भ्रातृव्यं, तस्मान्मरुत्वतीया यद्गृह्यन्ते तेन यजमानो भ्रातृव्यवधार्थं वज्रं प्रहरति प्रहिणोति ॥

[3]प्रकारान्तरेण रूपयति—आयुधं वा इत्यादि ॥ प्रथमेन मरुत्वतीयेन वज्रमुद्यच्छते आयुधं धनुस्संस्कुरुते संभरति । प्रथमो मरुत्वतीयो धनुः, द्वितीयो ज्या, तृतीय इषुः । तत्र प्रथमेन प्रतिधत्ते ज्यायां बाणं संधत्ते । द्वितीयन बाणं विसृजति भ्रातृव्यसकाशं प्रापयति । तृतीयेन भ्रातृव्यं विध्यति ताडयति ॥

व प्रथमेन धत्ते वि सृजति द्वितीये-
न विध्यति तृतीयेनेन्द्रो वृत्रꣳ हत्वा
परां परावतमगच्छदपाराधमिति
मन्यमानस्स हरितोभवथ्स एतान्म-
रुत्वतीयानात्मस्परणानपश्यत्तानगृ-
ह्णीत ॥ १६ ॥ प्राणमेव प्रथमेना-
स्पृणुतापानं द्वितीयेनात्मानं तृती-

द्वितीयेन । विध्यति । तृतीयेन । [4]इन्द्रः । वृत्रम् । हत्वा । पराम् । परावतमिति परा-वतम् । अगच्छत् । अपेति । अराधम् । इति । मन्यमानः । सः । हरितः । अभवत् । सः । एतान् । मरुत्वतीयान् । आत्मस्परणानित्यात्म-स्परणान् । अपश्यत् । तान् । अगृह्णीत ॥ १६ ॥ प्राणमिति प्र-अनम् । एव । प्रथमेन । अस्पृणुत । अपानमि-

[4]इन्द्रो वृत्रमित्यादि ॥ परां परावतं दूराद्दूरम् । गतम्* अपाराधमिति मन्यमानः विषक्तस्सन् स च तेन विषादेन हरितः नष्टच्छायोभवत् । स एतानित्यादि । आत्मस्परणान् आत्मनः प्रीणयितॄन् मरुत्वतीयान् ग्रहानपश्यत् । स्पृ प्रीतौ । प्रथमेन प्राणमस्पृणुत अप्रीणयत्, द्वितीयेनापानं, तृतीयेनात्मानमेवाप्रीणयत् । आत्मस्परणा वा इत्यादि । गतम् ॥

*सं. २-५-३.[8]

येनात्मस्परणा वा एते यजमानस्य गृह्यन्ते यन्मरुत्वतीयाः प्राणमेव प्रथमेन स्पृणुतेऽपानं द्वितीयेनात्मानं तृतीयेनेन्द्रो वृत्रमहन्तं देवा अब्रुवन्महान् वा अयमभूद्यो वृत्रमवधीदिति तन्महेन्द्रस्य महेन्द्रत्वꣳ स एतं माहेन्द्रमुद्धारमुदहरत वृत्रꣳ ह-

त्यप–अनम् । द्वितीयेन । आत्मानम् । तृतीयेन । आत्मस्परणा इत्यात्म–स्परणाः । वै । एते । यजमानस्य । गृह्यन्ते । यत् । मरुत्वतीयाः । प्राणमिति प्र–अनम् । एव । प्रथमेन । स्पृणुते । अपानमित्यप–अनम् । द्वितीयेन । आत्मानम् । तृतीयेन । [5]इन्द्रः । वृत्रम् । अहन् । तम् । देवाः । अब्रुवन् । महान् । वै । अयम् । अभूत् । यः । वृत्रम् । अवधीत् । इति । तत् । महेन्द्रस्येति महा–इन्द्रस्य । महेन्द्रत्वमिति महेन्द्र–त्वम् । सः । एतम् । माहेन्द्रमिति माहा–इन्द्रम् । उद्धारमि-

---

[5]इन्द्रो वृत्रमहन्नित्यादि ॥ गतम् । स एतमित्यादि । वृत्रवधानन्तरं अन्यासु देवतास्वधि अन्येभ्यो देवताभ्योधिकं अभ्यारू-

त्वाऽन्यासु देवतास्वधि यन्माहेन्द्रो
गृह्यते उद्धारमेव तं यजमान उद्ध-
रतेऽन्यासु प्रजास्वधि शुक्रपात्रेण
गृह्णाति यजमानदेवत्यो वै माहेन्द्र-
स्तेजःशुक्रो यन्माहेन्द्रः शुक्रपात्रे-
ण गृह्णाति यजमान एव तेजो

त्युत्-हारम् । उदिति । अहरत । वृत्रम् । हत्वा । अन्यासु । देवतासु । अधीति । यत् । माहेन्द्र इति माहा-इन्द्रः । गृह्यते । उद्धारमित्युत्-हारम् । एव । तम् । यजमानः । उदिति । हरते । अन्यासु । प्रजास्विति प्र-जासु । अधीति । शुक्रपात्रेणेति शुक्र-पात्रेण । गृह्णाति । यजमानदेवत्य इति यजमान-देवत्यः । वै । माहेन्द्र इति माहा-इन्द्रः । तेजः । शुक्रः । यत् । माहेन्द्रमिति माहा-इन्द्रम् । शुक्रपात्रेणेति शुक्र-पात्रेण । गृह्णाति । यजमाने ।

---

दमेतं माहेन्द्रं ग्रहमुद्धारमूर्ध्वहरणमुच्छ्रायं उदहरत उद्धृतवान् । 'यस्मादधिकम्' इत्यधियोगे सप्तमी । यन्माहेन्द्र इत्यादि । गतम् । शुक्रपात्रेणेत्यादि । यजमानदेवत्यस्य महेन्द्रग्रहस्य तेज-

दधाति ॥ १७ ॥

अदितिः पुत्रकामा साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत्तस्या उच्छेषणमददु-स्तत्प्राश्नात्सा रेतोधत्त तस्यै चत्वार

एव । तेजः । दधाति ॥ १७ ॥

प्रथमेनागृह्णीत देवतास्त्वष्टा-
विंशतिश्च ॥ ५ ॥

[1]अदितिः । पुत्रकामेति पुत्र-कामा । साध्येभ्यः । देवेभ्यः । ब्रह्मौदनमिति ब्रह्म-ओदनम् । अपचत् । तस्यै । उच्छेषणमित्युत्-शेषणम् । अददुः । तत् । प्रेति । आश्नात् । सा । रेतः । अधत्त । तस्यै ।

---

आत्मनश्शुक्रग्रहस्य पात्रेण ग्रहणात् यजमान एव तेजो दधाति स्थापयति ॥

इति षष्ठे पञ्चमे पञ्चमोनुवाकः.

---

[1]अदितिरित्यादि ॥ आदित्यग्रहविधेरर्थवादः । उच्छेषणं हुत-शिष्टं तस्यै देवा अददुः । सा च तत्प्राशनेन रेतोधारयत् । तस्याश्चत्वार आदित्याः पुत्रा जाताः । अथ सा अदितिः

आदित्या अजायन्त सा द्वितीयम-
पचथ्साऽमन्यतोच्छेषणान्म इमेऽ-
ज्ञत यदग्रे प्राशिष्यामीतो मे वसी-
याꣳसो जनिष्यन्त इति साऽग्रे
प्राश्नाथ्सा रेतोऽधत्त तस्यै व्यृद्धमा-
ण्डमजायत साऽऽदित्येभ्य एव ॥

चत्वारः । आदित्याः । अजायन्त । सा । द्विती-
यम् । अपचत् । सा । अमन्यत । उच्छेषणादि-
त्युत्-शेषणात् । मे । इमे । अज्ञत । यत् । अग्रे ।
प्राशिष्यामीति प्र-अशिष्यामि । इतः । मे । व-
सीयाꣳसः । जनिष्यन्ते । इति । सा । अग्रे ।
प्रेति । आश्नात् । सा । रेतः । अधत्त । तस्यै ।
व्यृद्धमिति वि-ऋद्धम् । आण्डम् । अजायत । सा ।
आदित्येभ्यः । एव ॥ १८ ॥ तृतीयम् । अपचत् ।

---

द्वितीयं पुनरपि ब्रह्मौदनमपचत्, पक्त्वा चामन्यत इमे आदित्याः उच्छेषणान्मम पुत्रा अज्ञत जाताः । 'मन्त्रे घस' इति च्ले-र्लुक् । अथ यद्यहमग्रे प्राशिष्यामि इत एभ्योपि वसीयांसः उत्कृष्टतरा जनिष्यन्ते तस्मादग्रे प्राशितव्यं नोच्छिष्टमिति पश्यन्ती साऽग्रे प्राश्नात्, रेतश्चाधत्त । तस्यास्तथाकृतवत्या आण्डं रेतो-धिकरणं गर्भस्थानं व्यृद्धं ऋद्धिशून्यमजायत न काचित्प्रजा ऋद्धि-

॥ १८ ॥ तृतीयमपचद्भोगाय म इदꣳ श्रान्तमस्त्विति तेऽब्रुवन्वरं वृणामहै योतो जायात अस्माकꣳ स एकोसद्योस्य प्रजायामृध्याता अस्माकं भोगाय भवादिति ततो विवस्वानादित्योजायत तस्य वा इयं

भोगाय । मे । इदम् । श्रान्तम् । अस्तु । इति । [2]ते । अब्रुवन् । वरम् । वृणामहै । यः । अतः । जायातै । अस्माकम् । सः । एकः । असत् । यः । अस्य । प्रजायामिति प्र-जायाम् । ऋध्यातै । अ-स्माकम् । भोगाय । भवात् । इति । ततः । विव-स्वान् । आदित्यः । अजायत । तस्य । वै । इय-

---

मती तत्राजनिष्ट । अथ साऽऽदित्येभ्य एव तृतीयमपचत् इदमाण्डं श्रान्तं प्रतितप्तं मम भोगार्थं प्रजासमृद्धमस्त्विति कामयमाना भूयोप्यपचत् ॥

[2]अथ ते आदित्या अब्रुवन्—त्वत्तो वरं वृणामहै—योतः आण्डात् व्यपेतदोषात् जायातै जायेत सोस्माकं मध्ये एकोऽसत् अस्माकमादित्यानामन्यतम एव जायताम् । अस्तेर्लेटि अडागमः । अथ योस्य जातस्य प्रजायां प्रजासु मध्ये ऋध्यातै ऋद्धोभवत् सोस्माकं भोगायास्त्विति । तत इत्यादि । तस्मा-

प्रजा यन्मंनुष्यांस्तास्वेकं एवर्द्धो यो
यजंते स देवानां भोगांय भवति
देवा वै यज्ञात् ॥ ११ ॥ रुद्रमन्त-
रांयन्त्स आंदित्यानन्वाक्रंमत ते द्वि-
देवत्यांन्प्रापंद्यन्त तान्न प्रति प्रायंच्छ-

न्। प्रजेति प्र-जा। यत्। मनुष्यांः। तासु। एकंः।
एव। ऋद्धः। यः। यजंते। सः। देवानांम्।
भोगांय। भवति। [3]देवाः। वै। यज्ञात्॥ ११॥
रुद्रम्। अन्तः। आयन्। सः। आदित्यान्। अ-
न्वाक्रंमतेत्यंनु-आक्रंमत। ते। द्विदेवत्यांनिति
द्वि-देवत्यान्। प्रेति। अपद्यन्त। तान्। न। प्र-

---

दाण्डात् विवस्वान्नामादित्यो जातः। तस्य खल्वियं प्रजा येऽमी मनु-
ष्याः; मनुष्याणां वर्षादिनोत्पाद्यत्वात्। एतेन योऽस्य प्रजायामित्येतत्प्र-
कृतं, तासु च एक एव यजमान ऋद्धो भवति। स च देवानामादि-
त्यानां भोगाय भवति॥

[3]देवा वा इत्यादि॥ अन्तरायन् अन्तर्हितमकुर्वन् अवहितं
धृतवन्तः। अथ स रुद्र आदित्यानन्वक्रामत अनुप्राप्य अवष्ट-
ब्धवान्। अथ ते द्विदेवत्यान् ऐन्द्रवायवादीन् प्रापद्यन्त प्रपन्नाः
शरणं गताः। ते च तान् न प्रतिप्रायच्छन्। यस्मान्न प्रत्य-
र्पितवन्तः तस्माद्द्यत्वेऽपि प्रपन्नं शरणागतं वध्यं न प्रतिप्रय-

न्तस्मादपि वध्यं प्रपन्नं न प्रति प्र
यच्छन्ति तस्माद्द्विदेवत्येभ्य आदित्यो
निर्गृह्यते यदुच्छेषणादजायन्त तस्मा-
दुच्छेषणाद्गृह्यते तिसृभिर् ऋग्भिर्गृ-
ह्णाति माता पिता पुत्रस्तदेव तन्मि-

ति । प्रेति । अयच्छन् । तस्मात् ।अपीति । वध्य-म् । प्रपन्नमिति प्र-पन्नम् । न । प्रति । प्रेति । यच्छन्ति । तस्मात् । द्विदेवत्येभ्य इति द्वि-देवत्ये-भ्यः । आदित्यः । निरिति । गृह्यते । यत् । उच्छे-षणादित्युत्-शेषणात् । अजायन्त । तस्मात् । उ-च्छेषणादित्युत्-शेषणात् । गृह्यते । [4]तिसृभिरिति तिसृ-भिः । ऋग्भिरित्यृक्-भिः । गृह्णाति । माता ।

---

च्छन्ति । यज्ञेनैवं विस्मरन्तः वध्या एवेति वध्यग्रहणेन दर्श-यति । तस्मादित्यादि । गतम् । द्विदेवत्येभ्यो ग्रहेभ्य आदित्यो ग्रहो निर्गृह्यते निष्कृष्य गृह्यते, तेषां चोच्छेषणादुत्पन्नत्वात् तस्मादादित्यस्योच्छेषणाद्ग्रहणम् ॥

[4]तिसृभिरिति ॥ 'कदा चन'* इत्यादिभिः । तदेवेति । यदेव मात्रादिलक्षणं मिथुनं तदेव ऋक्त्रयलक्षणम् । यदेव चतुष्पदादि-लक्षणम् । पशवो वा इत्यादि । वर्षादिना पशुहेतुत्वात् ताच्छ-ब्द्यम् । मध्यतः मध्ये । गतमन्यत्† । शृतातङ्क्येनेति । शृते-

---

*सं. १-४-२२. †सं ६-३-१०.[2]

थुनमुल्बं गर्भो जरायु तदेव तत्
॥ २० ॥ मिथुनं पशवो वा एते य-
दादित्य ऊर्ग्दधि दध्ना मध्यतश्श्री-
णात्यूर्जमेव पशूनां मध्यतो दधाति
शृतातङ्क्येन मेध्यत्वाय तस्मादामा
पक्वं दुहे पशवो वा एते यदादित्यः
परिश्रित्य गृह्णाति प्रतिरुध्यैवास्मै

पिता । पुत्रः । तत् । एव । तत् । मिथुनम् । उल्बम् । गर्भः । जरायु । तत् । एव । तत् ॥ २० ॥ मिथुनम् । पशवः । वै । एते । यत् । आदित्यः । ऊर्क् । दधि । दध्ना । मध्यतः । श्रीणाति । ऊर्जम् । एव । पशूनाम् । मध्यतः । दधाति । शृतातङ्क्येनेति शृत—आतङ्क्येन । मेध्यत्वायेति मेध्य—त्वाय । तस्मात् । आमा । पक्वम् । दुहे । [5]पशवः । वै । एते । यत् । आदित्यः । परिश्रित्येति परि—श्रित्य ।

नातञ्चनीयं यद्दधि तेन श्रीणाति मेधार्हत्वाय तद्भवति । तस्मादित्यादि । पश्चात्मन आदित्यग्रहस्य मध्ये शृतातङ्क्यदधिश्रयणादामा अपक्वा गौः पक्वं परिपक्वं पयो दुहे दुग्धे । पूर्ववत्तल्लोपः ॥

[5]पशवो वा इत्यादि ॥ परिश्रित्य प्रच्छाद्य गृह्णाति । प्रति-

पशून्गृह्णाति पशवो वा एते यदादि-
त्य एष रुद्रो यदग्निः परिश्रित्य गृह्णा-
ति रुद्रादेव पशूनन्तर्दधाति ॥२१॥
एष वै विवस्वानादित्यो यदुपांशु-
सवनस्स एतमेव सोमपीथं परि
शय आ तृतीयसवनाद्विवस्व आदि-

गृह्णाति । प्रतिरुध्येति प्रति-रुध्य । एव । अस्मै । पशून् । गृह्णाति । पशवः । वै । एते । यत् । आ-दित्यः । एषः । रुद्रः । यत् । अग्निः । परिश्रित्ये-ति परि-श्रित्य । गृह्णाति । रुद्रात् । एव । पशून् । अन्तः । दधाति ॥ २१ ॥ [6]एषः । वै । विवस्वान् । आदित्यः । यत् । उपांशुसवन इत्युपांशु-स-वनः । सः । एतम् । एव । सोमपीथमिति सोम-पीथम् । परीति । शये । एति । तृतीयसवनादिति तृतीय-सवनात् । विवस्वः । आदित्य । एषः ।

---

रुद्ध्य वारयित्वा पशवो गृहीता भवन्ति यजमानार्थम् । पशवो वा इत्यादि । अन्तर्धानार्थम्, व्यवधानार्थं वा ॥

[6]एष वा इत्यादि ॥ योयमुपांशुसवनोसावेष खलु विवस्वा-नादित्यः स च तमेव सोमपीथं आदित्यग्रहणलक्षणमुद्दिश्य आ

त्यैष ते सोमपीथ इत्याह विवस्व-
न्तमेवादित्यꣳ सोमपीथेन समर्धय-
ति या दिव्या वृष्टिस्तया त्वा श्री-
णामीति वृष्टिकामस्य श्रीणीयाद्वृ-
ष्टिमेवाव रुन्धे यदि ताजक्प्र स्क-
न्देद्वर्षुकः पर्जन्यस्स्याद्यदि चिर-

ते । सोमपीथ इति सोम–पीथः । इति । आह ।
विवस्वन्तम् । एव । आदित्यम् । सोमपीथेनेति
सोम–पीथेन । समिति । अर्धयति । [7]या । दिव्या ।
वृष्टिः । तया । त्वा । श्रीणामि । इति । वृष्टिका-
मस्येति वृष्टि–कामस्य । श्रीणीयात् । वृष्टिम् ।
एव । अवेति । रुन्धे । यदि । ताजक् । प्रस्कन्देदिति
प्र–स्कन्देत् । वर्षुकः । पर्जन्यः । स्यात् । यदि ।

---

तृतीयसवनात्परिशये परिशेते । उक्तस्तल्लोपः । विवस्व आदित्येति । सोममुपांशुसवनं दधाति । तेन सोमपीथेन विवस्वानादित्यस्समृद्धः कृतो भवति ॥

[7]या दिव्या इत्यादि ॥ वृष्टिकामस्य सोमे उपांशुसवनं प्रक्षिप्य श्रीणीयात्सोमं, तत्र प्रक्षेपकाले यदि ताजक् तदानीमेव क्षिप्रमेव बिन्दुः प्रस्कन्देत् पात्रात् पर्जन्यो वर्षुकः वर्षणशील-

मवर्‌षुको न सादयत्यसन्नाद्धि प्र-
जाः प्रजायन्ते नानु वषट्कुरोति यद-
नुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेन्न
हुत्वाऽन्वीक्षेत यदन्वीक्षेत चक्षुर-
स्य प्रमायुकꣳ स्यात्तस्मान्नान्वी-

क्षिरम् । अवर्‌षुकः । [8]न । सादयति । असन्नात् । हि । प्रजा इति प्र–जाः । प्रजायन्त इति प्र–जायन्ते । न । अन्विति । वषट् । करोति । यत् । अनुवषट्कुर्यादित्यनु–वषट्कुर्यात् । रुद्रम् । प्रजा इति प्र–जाः । अन्ववसृजेदित्यनु–अवसृजेत् । न । हुत्वा । अन्विति । ईक्षेत । यत् । अन्वीक्षेतेत्यनु–ईक्षेत । चक्षुः । अस्य । प्रमायुकमिति प्र–मायुकम् । स्यात् । तस्मात् । न । अन्वीक्ष्य इत्यनु–

---

स्स्यात् । यदि चिरं चिरकालेन स्कन्दति अवर्षुकस्स्यात्पर्जन्यः । 'लषपत' इत्यादिनोक्तम् ॥

[8]न सादयतीत्यादि ॥ असन्नादपतितात् उच्छ्रिताद्धि प्रजननात् प्रजाः प्रजायन्ते । यद्वा—असादितात्कचित्क्षिप्तात्प्रजननात्प्रजाना मुत्पत्तिः । नानुवषट्करोतीत्यादि । प्रजा अनु प्रजा लक्षीकृत्य रुद्रमवसृजेत् प्रजासु रुद्रं प्रवेशयेदित्यर्थः । प्रजात्वादादित्यग्रहस्य । न हु-

क्ष्यः ॥ २२ ॥

अन्तर्यामपात्रेण सावित्रमाग्रयणा-
द्गृह्णाति प्रजापतिर्वा एष यदाग्रयणः
प्रजानां प्रजननाय न सादयत्यसं-
न्नाद्धि प्रजाः प्रजायन्ते नानु वष-
ईक्ष्यः ॥ २२ ॥

एव यज्ञाज्जरायु तदेव तदन्तर्दधाति न सप्तविꣳ-
शतिश्च ॥ ६ ॥

[1]अन्तर्यामपात्रेणेत्यन्तर्याम-पात्रेण। सावित्रम्। आग्रयणात्। गृह्णाति। प्रजापतिरिति प्रजा-प-तिः। वै। एषः। यत्। आग्रयणः। प्रजानामिति प्र-जानाम्। प्रजननायेति प्र-जननाय। न। सादयति। असंन्नात्। हि। प्रजा इति प्र-जाः। प्र-

त्वेति। हुत्वाऽन्वीक्षमाणस्य अध्वर्योश्चक्षुः प्रमायुकं विनाशशीलं स्यात्, तस्मान्नान्वीक्ष्योहुतस्सोमः ॥

इति षष्ठे पञ्चमे षष्ठोनुवाकः.

[1]अन्तर्यामपात्रेणेत्यादि ॥ प्रजापतिरिति। प्रजानां पाता आग्रयणग्रहः। तस्मात्सावित्रस्य ग्रहणं प्रजानां प्रजननाय भवति। न सादयतीत्यादि। व्याख्यातम् ॥

*सं ६-५-६.४

कुरोति यदनुवषट्कुर्याद्रुद्रं प्रजा अ-
न्ववसृजेदेष वै गायत्रो देवानां
यथ्सवितैष गायत्रियै लोके गृह्यते
यदाग्रयणो यदन्तर्यामपात्रेण सावि-
त्रमाग्रयणाद्गृह्णाति स्वादेवैनं योने-
र्निर्गृह्णाति विश्वे ॥ २३ ॥ देवास्त-

जायन्त इति प्र—जायन्ते । न । अन्विति । वषट् । करोति । यत् । अनुवषट्कुर्यादित्यनु—वषट्कुर्यात्।रुद्र-म् । प्रजा इति प्र—जाः । अन्ववसृजेदित्यनु—अवसृजेत् ।[2]एषः । वै । गायत्रः । देवानाम् । यत्। सविता । एषः । गायत्रियै । लोके । गृह्यते । यत् । आग्रयणः।यत्। अन्तर्यामपात्रेणेत्यन्तर्याम—पात्रेण । सावित्रम् । आग्रयणात् । गृह्णाति । स्वात् । एव । एनम् । योनेः । निरिति । गृह्णाति । विश्वे ॥

[2]एष वा इत्यादि ॥ देवानां मध्ये सविता गायत्रः गायत्री-सम्बन्धी; 'तत्सवितुर्वरेण्यम्'* इत्यादिकाया गायत्र्यास्सावित्रत्वात् आग्रयणश्चायं गायत्र्या लोके स्थाने प्रातस्सवने गृह्यते तस्मात्सोपि गायत्रः तस्मादाग्रयणात् सावित्रस्य ग्रहणं कुर्वता स्वादेव योनेः एतस्य सावित्रस्य निर्ग्रहणं निष्कृष्य ग्रहणं कृतं भवति ॥

*सं. १-५-६.12

तीयꣳ सवनं नोदयच्छन्ते सवितारं
प्रातस्सवनभागꣳ सन्तं तृतीयस-
वनमभि पर्यणयन्ततो वै ते तृती-
यꣳ सवनमुदयच्छन् यत्तृतीयसवने
सावित्रो गृह्यते तृतीयस्य सवन-
स्योद्यत्यै सवितृपात्रेण वैश्वदेवं क-

[3] देवाः । तृतीयम् । सवनम् । न । उदिति । अयच्छन्न् । ते । सवितारम् । प्रातस्सवनभागमिति प्रातस्सवन–भागम् । सन्तम् । तृतीयसवनमिति तृतीय–सवनम् । अभि । परीति । अनयन् । ततः । वै । ते । तृतीयम् । सवनम् । उदिति । अयच्छन्न् । यत् । तृतीयसवन इति तृतीय–सवने । सावित्रः । गृह्यते । तृतीयस्य । सवनस्य । उद्यत्या इत्युत्–यत्यै । [4] सवितृपात्रेणेति सवितृ–पात्रेण । वैश्वदेव-

[3] विश्वे देवा इत्यादि ॥ विश्वेदेवाः आत्मीयं तृतयिसवनं उद्वोढुं शक्ता न बभूवुः, तस्मात्तृतीयसवने सावित्रस्य ग्रहणं तृतीयसवननिर्वहणाय भवति ॥

[4] सवितृपात्रेणेत्यादि ॥ सावित्रमाग्रयणाद्गृह्णाति सावित्रेण गृहीत्वा हुतत्वात्सवितृपात्रमन्तर्यामपात्रम् । गतमन्यत् ॥

लशाद्गृह्णाति वैश्वदेव्यो वै प्रजा वैश्वदेवः कलशस्सविता प्रसवानामीशे यथ्सवितृपात्रेण वैश्वदेवं कलशाद्गृह्णाति सवितृप्रसूत एवास्मै प्रजाः प्र ॥ २४ ॥ जनयति सोमे सोममभि गृह्णाति रेत एव तद्दधाति सुशर्माऽसि सुप्रतिष्ठान इत्याह

मिति वैश्व–देवम् । कलशात् । गृह्णाति । वैश्वदेव्य इति वैश्व–देव्यः । वै । प्रजा इति प्र–जाः । वैश्वदेव इति वैश्व–देवः । कलशः । सविता । प्रसवानामिति प्र–सवानाम् । ईशे । यत् । सवितृपात्रेणेति सवितृ–पात्रेण । वैश्वदेवमिति वैश्व–देवम् । कलशात् । गृह्णाति । सवितृप्रसूत इति सवितृ–प्रसूतः । एव । अस्मै । प्रजा इति प्र–जाः । प्रेति ॥ २४ ॥ जनयति । [5]सोमे । सोमम् । अभीति । गृह्णाति । रेतः । एव । तत् । दधाति । सुशर्मेति सु–शर्मा । असि । सुप्रतिष्ठान इति

[5]सोमे सोममित्यादि ॥ सावित्रस्य अनुवषट्काराभावादाहुतिशेषे अभिगृह्णाति शेषस्योपरि गृह्णाति रेतसो निषेकस्थानीयं तद्भवति । सोमे ही-

सोमे हि सोमम॒भिगृ॒ह्णाति प्रति॑-
ष्ठित्या ए॒तस्मि॒न्वा अपि॒ ग्रहे॑ मनु॒-
ष्येभ्यो दे॒वेभ्यः॑ पि॒तृभ्यः॑ क्रियते
सु॒शर्मा॑ऽसि सुप्रति॒ष्ठान इत्या॑ह
मनुष्ये॑भ्य ए॒वैतेन॑ करोति बृ॒हदि-
त्या॑ह दे॒वेभ्य॑ ए॒वैतेन॑ करोति॒ नम॒
इत्या॑ह पि॒तृभ्य॑ ए॒वैतेन॑ करो॒त्ये॒ताव-

सु॒–प्र॒ति॒ष्ठानः॑ । इति॑ । आ॒ह॒ । सोमे॑ । हि । सो-
म॑म् । अ॒भि॒गृ॒ह्णातीत्य॑भि–गृ॒ह्णाति॑ । प्रति॑ष्ठित्या॒
इति॒ प्रति॑–स्थि॒त्यै॒ । [6]ए॒तस्मि॒न्न् । वै । अपीति॑ ।
ग्रहे॑ । म॒नु॒ष्ये॑भ्यः । दे॒वेभ्यः॑ । पि॒तृभ्य॒ इति॑ पि॒तृ–
भ्य॒ः । क्रि॒य॒ते॒ । सु॒शर्मेति॑ सु॒–शर्मा॑ । अ॒सि॒ । सु॒-
प्र॒ति॒ष्ठान इति॑ सु॒–प्र॒ति॒ष्ठानः॑ । इति॑ । आ॒ह॒ ।
म॒नु॒ष्ये॑भ्यः । ए॒व । ए॒तेन॑ । क॒रो॒ति॒ । बृ॒हत् । इति॑।
आ॒ह॒ । दे॒वेभ्यः॑ । ए॒व । ए॒तेन॑ । क॒रो॒ति॒ । नमः॑ ।

---

त्यादि । यस्मात्सोमोभिगृह्यते सोमस्योपरि तस्मात्सुप्रतिष्ठान उ-
च्यते इति मन्त्रपदव्याख्या । तत्प्रातिष्ठित्यै प्रतिष्ठितत्वाय भवति
यजमानस्य ॥

[6]एतस्मिन्वा इति त्रिभ्यो ॥ मनुष्यादिभ्य एतस्मिन् ग्रहे वैश्वदेवे
क्रियते । कथमित्याह—मनुष्येभ्य एवेत्यादि शोभनं शरणं

तावै देवतास्ताभ्य एवैनꣳ सर्वाभ्यो
गृह्णात्येष ते योनिर्विश्वेभ्यस्त्वा देवे-
भ्य इत्याह वैश्वदेवो ह्येषः ॥ २५ ॥

प्राणो वा एष यदुपाꣳशुर्यदुपाꣳ-

इति । आह । पितृभ्य इति पितृ-भ्यः । एव । एतेन । करोति । एतावतीः । वै । देवताः । ताभ्यः । एव । एनम् । सर्वाभ्यः । गृह्णाति । एषः । ते । योनिः । विश्वेभ्यः । त्वा । देवेभ्यः । इति । आह । वैश्वदेव इति वैश्व-देवः । हि । एषः ॥ २५ ॥

विश्वे प्र पितृभ्य एवैतेन करोत्येकान्न विꣳ-
शतिश्च ॥ ७ ॥

[1]प्राण इति प्र-अनः । वै । एषः । यत् । उपा-

---

सेचनं सुखं वा अस्येति कृत्वा । बृहत्त्वं देवा अर्हन्तीति* कृत्वा । नमस्कारप्रियाः पितर इति कृत्वा । एतावतीर्वा इत्यादि । गतम्† ॥

इति षष्ठे पञ्चमे सप्तमोनुवाकः.

---

[1]प्राणो वा एष इत्यादि ॥ प्राणापानाभ्यामेवोपांश्वन्तर्यामा-

---

* देवानामस्तीति. †सं. ६-४-११.[3]

शुपात्रेण प्रथमश्चोत्तमश्च ग्रहौ गृह्ये-
ते प्राणमेवानु प्रयन्ति प्राणमनूद्यं-
न्ति प्रजापतिर्वा एष यदाग्रयणः
प्राण उपाꣳशुः पत्नीः प्रजाः प्र
जनयन्ति यदुपाꣳशुपात्रेण पात्नीव-
तमाग्रयणाद्गृह्णाति प्रजानां प्रजनं-

ꣳशुरित्युप-अꣳशुः । यत् । उपाꣳशुपात्रेणेत्युपाꣳ-
शु-पात्रेण । प्रथमः । च । उत्तम इत्युत्-तमः ।
च । ग्रहौ । गृह्येते इति । प्राणमिति प्र-अनम् ।
एव । अन्विति । प्रयन्तीति प्र-यन्ति । प्राणमिति
प्र-अनम् । अनु । उदिति । यन्ति । प्रजापतिरि-
ति प्रजा-पतिः । वै । एषः । यत् । आग्रयणः ।
प्राण इति प्र-अनः । उपाꣳशुरित्युप-अꣳशुः ।
पत्नीः । प्रजा इति प्र-जाः । प्रेति । जनयन्ति ।
यत् । उपाꣳशुपात्रेणेत्युपाꣳशु-पात्रेण । पात्नीव-
तमिति पात्नी-वतम् । आग्रयणात् । गृह्णाति ।

---

वित्युक्तत्वात् । प्रथमः उपांशुरुत्तमः पात्नीवतः । अग्निष्टोमं प्रकृ-
त्योच्यते । प्राणमेवेत्यादि । प्राणमनु प्राणेन सह प्रयन्ति
प्रारभन्ते, प्राणेन सहोद्यन्ति समापयन्ति । 'तृतीयार्थे' इत्यनोः

नाय तस्मात्प्राणं प्रजा अनु प्र जा-
यन्ते देवा वा इतइतः पत्नीस्सुव-
र्गम् ॥ २६ ॥ लोकमजिगाꣳसन्ते
सुवर्गं लोकं न प्राजानन्त एतं पा-
त्नीवतमपश्यन्तमगृह्णत ततो वै ते
सुवर्गं लोकं प्राजानन् यत्पात्नीवतो

प्रजानामिति प्र—जानाम् । प्रजननायेति प्र—जन-
नाय । तस्मात् । प्राणमिति प्र—अनम् । प्रजा
इति प्र—जाः । अनु । प्रेति । जायन्ते । [2]देवाः ।
वै । इतइत इतीतः—इतः । पत्नीः । सुवर्गमिति
सुवः—गम् ॥ २६ ॥ लोकम् । अजिगाꣳसन् । ते ।
सुवर्गमिति सुवः—गम् । लोकम् । न । प्रेति ।
अजानन् । ते । एतम् । पात्नीवतमिति पात्नी—
वतम् । अपश्यन् । तम् । अगृह्णत । ततः । वै ।
ते । सुवर्गमिति सुवः—गम् । लोकम् । प्रेति ।

कर्मप्रवचनीयत्वम् । प्रजापतिर्वा इत्यादि । गतम् । तस्मादिति ।
प्राणमनु प्राणेन सहैव प्रजा जायन्ते ॥

[2]देवा वा इत्यादि ॥ इतइतः स्थापयित्वा पत्नीस्ता अना-
दृत्य स्वर्गं गन्तुमैच्छन्, सामर्थ्यलभ्यार्थात् । यद्वा—वर्जयित्वे-

गृह्यते सुवर्गस्य लोकस्य प्रज्ञात्यै
स सोमो नातिष्ठत स्त्रीभ्यो गृह्य-
माणस्तं घृतं वज्रं कृत्वाऽघ्नन्तं नि-
रिन्द्रियं भूतमगृह्णन्तस्मात्स्त्रियो नि-

अजानन् । यत् । पात्नीवत इति पात्नी–वतः । गृह्यते । सुवर्गस्येति सुवः–गस्य । लोकस्य । प्रज्ञात्या इति प्र–ज्ञात्यै । [3]सः । सोमः । न । अतिष्ठत । स्त्रीभ्यः । गृह्यमाणः । तम् । घृतम् । वज्रम् । कृत्वा । अ-घ्नन् । तम् । निरिन्द्रियमिति निः–इन्द्रियम् । भू-तम् । अगृह्णन् । तस्मात् । स्त्रियः । निरिन्द्रिया

---

त्यस्यार्थे इतइत इति वर्तते । गमेस्सनि 'अज्झनगमां सनि' इति दीर्घत्वम्, छान्दस इडभावः । ते स्वर्गं न प्राजानन् न प्रज्ञातवन्तः । त एतमित्यादि । गतम् ॥

[3]स सोम इत्यादि ॥ स स्त्रीभ्यो गृह्यमाणस्सोमः नातिष्ठत नात्मानं प्रकाशितवान् स्त्रीभ्यो ग्रहणमसहमानः । प्रकाशने आत्मनेपदम् । घृतं वज्रं कृत्वा तेन तमघ्नन् । ततस्तेन घृतवधेन निरिन्द्रियं गतसारं भूतं संजातमगृह्णन् ग्रहत्वेन संपादितवन्तः पत्नीभ्यः । तस्मात् स्त्रियो निरिन्द्रियाः निरिन्द्रियसोमसंबन्धात् अदायादीः अदायाद्यः अदायभुजः । निरिन्द्रियत्वादेव पापात्पति-तादेः पुंसोपि उपस्तितरं वदन्ति निरिन्द्रियं सोमम् । तस्मात्ता-दृशसोमसंबन्धात् स्त्रियो दायभाजो न भवन्ति । उप भवति

रिन्द्रिया अदायादीरपि पापात्पुꣳस उपस्तितरम् ॥ २७ ॥ वदन्ति यद्घृतेन पात्नीवतꣳ श्रीणाति वज्रेणैवैनं वशे कृत्वा गृह्णात्युपयामगृहीतोसीत्याहेयं वा उपयामस्तस्मादिमां प्रजा अनु प्र जायन्ते बृहस्पतिसुत-

इति निः–इन्द्रियाः । अदायादीरित्यदाय–अदीः । अपीति । पापात् । पुꣳसः । उपस्तितरमित्युपस्ति–तरम् ॥ २७ ॥ वदन्ति । यत् । घृतेन । पात्नीवतमिति पात्नी–वतम् । श्रीणाति । वज्रेण । एव । एनम् । वशे । कृत्वा । गृह्णाति । [4]उपयामगृहीत इत्युपयाम–गृहीतः । असि । इति । आह । इयम् । वै । उपयाम इत्युप–यामः । तस्मात् । इमाम् । प्रजा इति प्र–जाः । अनु । प्रेति । जायन्ते । बृहस्पतिसुत-

---

गुणभावेन वर्तते इति उपस्तिः, उपपूर्वादस्तेः 'क्तिच्क्तौ च' इति क्तिच्, 'छन्दस्युभयथा' इति तस्य सार्वधातुकत्वाड्भावाभावः, अह्लोपश्च । यद्घृतेनेत्यादि । गतम् ।

[4]इयं वा इति ॥ पृथिव्यात्मकेनोपयामेन प्रजात्मकस्य पात्नीवतस्य ग्रहणादिमां पृथिवीमनु प्रजाः प्रजायन्ते । बृहस्पतिसु-

स्य त इत्याह ब्रह्म वै देवानां बृह-
स्पतिर्ब्रह्मणैवास्मै प्रजाः प्र जनय-
तीन्दो इत्याह रेतो वा इन्दू रेत
एव तद्दधातीन्द्रियाव इति ॥ २८ ॥
आह प्रजा वा इन्द्रियं प्रजा एवा-
स्मै प्र जनयत्यग्ना३ इत्याहाग्निर्वै
रेतोधाः पत्नीव इत्याह मिथुनत्वाय

स्येति बृहस्पति—सुतस्य । ते । इति । आह । ब्र-
ह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव ।
अस्मै । प्रजा इति प्र—जाः । प्रेति । जनयति ।
इन्दो इति । इति । आह । रेतः । वै । इन्दुः ।
रेतः । एव । तत् । दधाति । इन्द्रियाव इतीन्द्रिय—
वः । इति ॥ २८ ॥ आह । प्रजा इति प्र—जाः ।
वै । इन्द्रियम् । प्रजा इति प्र—जाः । एव । अस्मै ।
प्रेति । जनयति । अग्ना३इ । इति । आह । अग्निः ।
वै । रेतोधा इति रेतः—धाः । पत्नीव इति पत्नी—
वः । इति । आह । मिथुनत्वायेति मिथुन—त्वाय ।

---

तस्येत्यादि । ग्रहणमन्त्रस्य व्याख्या । पत्नीव इति । प्रथमेना-
मन्त्रितेन दूराद्धूतत्वस्य गतत्वात् इदमप्लुतमेवोपादीयते ॥

सजूर्देवेन त्वष्ट्रा सोमं पिबेत्याह त्वष्टा वै पशूनां मिथुनानाꣳ रूपकृद्रूपमेव पशुषु दधाति देवा वै त्वष्टारमजिघाꣳसन्त्स पत्नीः प्रापद्यत तं न प्रति प्रायच्छन्तस्मादपि ॥२१॥ वध्यं प्रपन्नं न प्रति प्र यच्छन्ति तस्मात्पात्नीवते त्वष्ट्रेऽपि गृह्यते न सादयत्यसन्नाद्धि प्रजाः प्रजायन्ते

सजूरिति स–जूः । देवेन । त्वष्ट्रा । सोमम् । पिब । इति । आह । त्वष्टा । वै । पशूनाम् । मिथुनानाम् । रूपकृदिति रूप–कृत् । रूपम् । एव । पशुषु । दधाति । [5]देवाः । वै । त्वष्टारम् । अजिघाꣳसन्न् । सः । पत्नीः । प्रेति । अपद्यत । तम् । न । प्रति । प्रेति । अयच्छन्न् । तस्मात् । अपीति ॥ २१ ॥ वध्यम् । प्रपन्नमिति प्र–पन्नम् । न । प्रति । प्रेति । यच्छन्ति । तस्मात् । पात्नीवत इति पात्नी–वते । त्वष्ट्रे । अपीति । गृह्यते । न । सादयति । असन्नात् । हि । प्रजा इति प्र–जाः ।

---

[5]देवा वा इत्यादि ॥ त्वष्टारं हन्तुमैच्छन् देवाः । स च त्वष्टा पत्नीः प्रापद्यत शरणं गतः । तमित्यादि । व्याख्यात-

नानु वषट्करोति यदनुवषट्कुर्याद्रुद्रं प्रजा अन्ववसृजेद्यन्नानुवषट्कुर्याद-शान्तमग्नीथ्सोमं भक्षयेदुपाꣳश्वनु व-षट्करोति न रुद्रं प्रजा अन्ववसृजति

प्रजायन्त इति प्र—जायन्ते । न । अन्विति । व-षट् । करोति । यत् । अनुवषट्कुर्यादित्यनु—वषट्कुर्यात् । रुद्रम् । प्रजा इति प्र—जाः । अन्ववसृजेदित्यनु—अवसृजेत् । यत् । न । अनुवषट्कुर्यादित्यनु—वषट्कुर्यात् । [6]अशान्तम् । अग्नीदित्यग्नि—इत् । सोमम् । भक्षयेत् । उपाꣳश्वित्युप—अꣳशु । अन्विति । वषट् । करोति । न । रुद्रम् । प्रजा इति प्र—जाः । अन्ववसृजतीत्यनु—अवसृजति । शा-

प्रायम्* । तस्मात्पात्नीवते त्वष्ट्रेऽपिगृह्यते 'त्वष्ट्रा सोमं पिब'† इति मन्त्रलिङ्गात् । न सादयतीत्यादि । गतम्* ॥

[6]अशान्तमिति ॥ अनिष्टकारणमशान्तमभक्षितं स्यात्; तस्मादुपांश्विति विधिः । न रुद्रमित्यादि । गतम्‡ ॥

*सं. ६-५-६.[3,4] †सं १-४-२७.[2] ‡सं. ६-५-८.[5]

शान्तमग्नीध्सोमं भक्षयत्यग्नीन्नेष्टुरु-
पस्थमा सीद ॥ ३० ॥ नेष्टः पत्नी-
मुदानयेत्याहाग्नीदेव नेष्टरि रेतो दधा-
ति नेष्टा पत्नियामुद्गात्रा सं ख्यांप-
यति प्रजापतिर्वा एष यदुद्गाता प्र-
जानां प्रजननायाप उप प्र वर्तयति

न्तम् । [7]अग्नीदित्यग्नि–इत् । सोमम् । भक्षयति । अग्नीदित्यग्नि–इत् । नेष्टुः । उपस्थमित्युप–स्थम् । एति । सीद ॥ ३० ॥ नेष्टः । पत्नीम् । उदानयेत्युत्–आनय । इति । आह । अग्नीदित्यग्नि–इत् । एव । नेष्टरि । रेतः । दधाति । नेष्टा । पत्नियाम् । [8]उद्गात्रेत्युत्–गात्रा । समिति । ख्यापयति । प्रजापतिरिति प्रजा–पतिः । वै । एषः । यत् । उद्गातेत्युत्–गाता । प्रजानामिति प्र–जानाम् । प्रजननायेति प्र–जननाय । अपः । उप ।

---

[7]अग्नीदित्यादिः प्रैषः, तदेकदेशं व्याचष्टे—नेष्टरि रेतो दधात्याग्नीध्रः तदुपस्थानेन, नेष्टा च पत्न्यां रेतो दधाति तदुदानयनेन ॥

[8]उद्गात्रेत्यादि ॥ गतम् । स्वयं प्रजापतिरेवोद्गाता, तस्मात्तेन संख्यापनाप्रदर्शनं प्रजानां प्रजननाय भवति । उपप्रवर्तयतीति । समीपे तस्यास्स्रावयति रेतस्सेकस्थानीयं तत् भवति ॥

रेतं एव तथ्सिंञ्चत्यूरुणोप प्र वर्तय-
त्यूरुणा हि रेतंस्सिच्यतें नग्नंकृत्यो-
रुमुप प्र वर्तयति यदा हि नग्न ऊरु-
र्भवत्यथं मिथुनी भंवतोथ रेतंस्सि-
च्यतेऽथं प्रजाः प्र जांयन्ते ॥ ३१ ॥

प्रेति । वर्तयति । रेतः । एव । तत् । सिञ्चति । [9]ऊरुणा । उपं । प्रेति । वर्तयति । ऊरुणा । हि । रेतः । सिच्यतें । नग्नङ्कृत्येति नग्नं-कृत्यं । ऊरुम् । उपं । प्रेति । वर्तयति । यदा । हि । नग्नः । ऊरुः । भवंति । अथं । मिथुनी । भवतः । अथं । रेतः । सिच्यते । अथं । प्रजा इति प्र-जाः । प्रेति । जायन्ते ॥

पत्नींस्सुवर्गमुपंस्तितरमिन्द्रियाव इत्यपिं
सीद मिथुन्यंष्टौ चं ॥ ८ ॥

---

[9]ऊरुणेति विधिः ॥ ऊरुत्वोपलक्षिते देशे उपप्रवर्तयाति । ऊरुणा हीति । ऊरूपबृंहितेन प्रजननेनेत्यर्थः । नग्नंकृत्य वास उद्घाट्य । ऊर्यादिर्मकारान्तो द्रष्टव्यः । ल्यपि गतित्वात्कृदुत्तरपदप्रकृतिस्वरत्वम् । यदा हीत्यादि । ऊरुः ऊरुमान् प्रजननप्रदेशो यदा नग्नो भवति उद्घाटितवसनः क्रियते अथानन्तरमेव स्त्रीपुंसौ मिथुनिभवतः मैथुनं गच्छतः, अथानन्तरमेव रेतास्सिच्यते, अथ ततः पतितं निषिक्तं रेतः प्रजात्वेन परिणतं भवति । तस्मान्महाफलत्वान्नग्नकरणस्य नग्नंकृत्योरुमुपप्रवर्तयतीति ॥

इति षष्ठे पञ्चमे अष्टमोनुवाकः.

इन्द्रो वृत्रमहन्तस्य शीर्षकपाल-
मुदौब्जथ्स द्रोणकलशोऽभवत्तस्मा-
थ्सोमस्समस्रवथ्स हारियोजनोऽभव-
त्तं व्यचिकिथ्सज्जुहवानी३ मा हौ-
षा३मिति सोऽमन्यत यद्धोष्याम्यामः॥

[1]इन्द्रः । वृत्रम् । अहन् । तस्य । शीर्षकपालमिति शीर्ष—कपालम् । उदिति । औब्जत् । सः । द्रोणकलश इति द्रोण—कलशः । अभवत् । तस्मात् । सोमः । समिति । अस्रवत् । सः । हारियोजन इति हारि—योजनः । अभवत् । [2]तम् । वीति । अचिकित्सत् । जुहवानी३ । मा । हौषा३म् । इति । सः । अमन्यत । यत् । होष्यामि ।

---

[1]इन्द्रो वृत्रमहन्नित्यादि ॥ शीर्षकपालं शिरःकपालमुदौब्जत् उत्तानं व्यवर्तत । तस्माद्द्रोणकलशभूतात् संस्रुतस्सोमो हारियोजनो ग्रहोऽभवत् । हरयो युज्यन्ते यस्य रथे स हरियोजनः, तद्देवत्यो हारियोजनः ॥

[2]तमित्यादि ॥ व्यचिकित्सत् विचारितवान् इमं किं जुहवानि मा हौषमिति । 'विचार्यमाणानाम्' इत्युदात्तः प्लुतः । कुतः पुनस्संशय इत्याह—सोमन्यतेत्यादि । यदि होष्यामि आममपक्कं असंस्कृतं हविर्हुतं स्यात् । अथ यदि न होष्यामि यज्ञवेशसं

74267

होंष्यामि यन्न होष्यामिं यज्ञवेशसं कं-
रिष्यामीति तमंध्रियत होतुꣳ सोऽग्नि-
रंब्रवीन्न मय्यामꣳ होंष्यसीति तं धा-
नाभिंरश्रीणात् ॥ ३२ ॥ तꣳ शृतं भूत-
मंजुहोद्यद्धानाभिंर् हारियोजनꣳ श्री-

आमम् । होष्यामि । यत् । न । होष्यामिं । यज्ञ-वेशसमितिं यज्ञ–वेशसम् । करिष्यामि । इतिं । तम् । अध्रियत । होतुम् । [3]सः । अग्निः । अब्रवीत् । न । मयिं । आमम् । होष्यसि । इतिं । तम् । धानाभिंः । अश्रीणात् ॥ ३२ ॥ तम् । शृतम् । भूतम् । अजुहोत् । यत् । धानाभिंः । हारियोजनमितिं हारि–योजनम् । श्रीणातिं । शृत-

करिष्यामि यज्ञविनाशकारी स्याम् । 'अनसन्तान्नपुंसकात्' इत्यच्समासान्तः । यज्ञार्थं गृहीतस्याविनियोगो यज्ञविनाशः । प्रवृत्तयज्ञस्येन्द्रस्य हारियोजनार्थिनो हतवृत्रशिरसः स्रुतस्सोमो हारियोजनात्मा समवस्थित इति कृत्वा अथ तं सोमं होतुमेवाध्रियत अवातिष्ठत होष्याम्येवेति कृतावधारणोभवत् । धृङ् अवस्थाने, तौदादिकः, 'रिङ्शयग्लिङ्क्षु' ॥

[3]अथ सोऽग्निरब्रवीत्—मा मय्यामं अपक्कं हौषीरिति । अथ तं ग्रहं धानाभिरश्रीणात् पक्कमकरोत् । अथ तं शृतं भूतं पक्कं संजातं अजुहोत् । यदित्यादि । गतम् ॥

णाति शृतत्वाय शृतमेवैनं भूतं जुहोति बह्वीभिश्श्रीणात्येतावतीरेवास्यामुष्मिन्लोके कामदुघा भवन्त्यथो खल्वाहुरेता वा इन्द्रस्य पृश्नयः कामदुघा यद्धारियोजनीरिति तस्माद्बह्वीभिश्श्रीणीयादृक्सामे वा

त्वायेति शृत–त्वाय । शृतम् । एव । एनम् । भूतम् । जुहोति । [4]बह्वीभिः । श्रीणाति । एतावतीः । एव । अस्य । अमुष्मिन्न् । लोके । कामदुघा इति काम–दुघाः । भवन्ति । अथो इति । खलु । आहुः । एताः । वै । इन्द्रस्य । पृश्नयः । कामदुघा इति काम–दुघाः । यत् । हारियोजनीरिति हारि–योजनीः । इति । तस्मात् । बह्वीभिः । श्रीणीयात् । [5]ऋक्सामे इत्यृक्–सामे । वै । इन्द्रस्य । हरी इति ।

---

[4]बह्वीभिरित्यादि ॥ 'बह्वादिभ्यश्च' 'नित्यं छन्दसि' इति ङीष् । बह्वीभिर्धानाभिः श्रयणादेतावत्यः बह्वचः पृश्नयः अस्य अमुष्मिन् भोगभूमौ कामदुघा भवन्ति । 'दुहः कब्घश्च' इति कप् । अथो इत्यादि । गतम् । हारियोजनसंबन्धिन्यो धाना हारियोजन्यः । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम् ॥

[5]ऋक्सामे वा इत्यादि ॥ ऋक्सामे वा इन्द्रस्याश्वौ सोमपा-

इन्द्रस्य हरी सोमपानौ तयोः परिधयं आधानं यदप्रहृत्य परिधीञ्जुहुयादन्तराधानाभ्याम् ॥ ३३ ॥ घासं प्र यच्छेत्प्रहृत्य परिधीञ्जुहोति निराधानाभ्यामेव घासं प्र यच्छत्युन्नेता जुहोति यातयामेव ह्येतर्हि-

सोमपानाविति सोम-पानौ । तयोः । परिधय इति परि-धयः । आधानमित्या-धानम् । यत् । अप्रहृत्येत्यप्र-हृत्य । परिधीनिति परि-धीन् । जुहुयात् । अन्तराधानाभ्यामित्यन्तः-आधानाभ्याम् । ॥ ३३ ॥ घासम् । प्रेति । यच्छेत् । प्रहृत्येति प्र-हृत्य । परिधीनिति परि-धीन् । जुहोति । निराधानाभ्यामिति निः-आधानाभ्याम् । एव । घासम् । प्रेति । यच्छति । [6]उन्नेतेत्युत्-नेता । जुहो-

नौ सोमस्य पाता याभ्यामिन्द्रः । करणे ल्युट् । तयोः हर्योः परिधयः आधानं आधानस्थानीया अस्य गतखलीनकल्पाः । तस्माद्यदि परिधीन् अप्रहृत्य हारियोजनं जुहुयात् अथान्तराधानाभ्यां आस्यान्तर्गताधानाभ्यां घासप्रदानतुल्यं स्यात् । अदनीयस्तृणादिर्घासः । प्रहृत्येत्यादि । परिधीन् प्रहृत्य हारियोजनहोमः निर्गताधानाभ्यां घासप्रदानसमं भवति ॥

[6]उन्नेतेति ॥ गतसार इवाध्वर्युरस्मिन् काले स्वगाकृतत्वात् अनु-

ध्वर्युस्स्वगाकृतो यदध्वर्युर्जुहुयाद्य-
था विमुक्तं पुनर्युनक्ति तादृगेव त-
च्छीर्‌षन्नधि निधार्य जुहोति शीर्‌-
षतो हि स समभवद्विक्रम्य जुहोति
विक्रम्य हीन्द्रो वृत्रमहन्त्समृद्ध्यै प-

ति । यातयामेति यात-यामा । इव । हि । एत-र्हि । अध्वर्युः । स्वगाकृत इति स्वगा-कृतः । यत् । अध्वर्युः । जुहुयात् । यथा । विमुक्तमिति वि-मुक्तम् । पुनः । युनक्ति । तादृक् । एव । तत् । शीर्‌षन् । अधिनिधायेत्यधि-निधार्य । जुहोति । शीर्‌षतः । हि । सः । समभवदिति सं-अभवत् । विक्रम्येति वि-क्रम्य । जुहोति । विक्रम्येति वि-क्रम्य । हि । इन्द्रः । वृत्रम् । अहन्न् ।

---

ज्ञातस्वैरगतित्वात् । तस्माद्यदध्वर्युर्जुहुयात् विमुक्तस्य पुनर्योगसमं तत्स्यात् । शीर्षन्नित्यादि । गतम् । वृत्रस्य शिरसः हारियोजनस्संभूतः । 'हि च' इति निघाताभावः । विक्रम्येति । अवष्टभ्यैव जुहोति, विक्रम्य खल्विन्द्रः वृत्रं हतवान् तस्मात्समृद्ध्यै भवति । पूर्ववन्निघाताभावः ॥

शवो वै हारियोजनीर्यथ्संभिन्द्या-
दल्पाः ॥ ३४ ॥ एनं पशवो भुञ्ज-
न्त उप तिष्ठेरन् यन्न संभिन्द्याद्बह-
वं एनं पशवोऽभुञ्जन्त उप तिष्ठेर-
न्मनसा सं बाधत उभयं करोति ब-
हवं एवैनं पशवो भुञ्जन्त उप ति-
ष्ठन्त उन्नेतर्युपहवमिच्छन्ते य एव

समृद्ध्या इति सं-ऋद्ध्यै । [7]पशवः । वै । हारियो-जनीरिति हारि-योजनीः । यत् । संभिन्द्यादिति सं-भिन्द्यात् । अल्पाः ॥ ३४ ॥ एनम् । पशवः । भुञ्जन्तः । उपेति । तिष्ठेरन् । यत् । न । सम्भि-न्द्यादिति सं-भिन्द्यात् । बहवः । एनम् । पशवः । अभुञ्जन्तः । उपेति । तिष्ठेरन् । मनसा । समिति । बाधते । उभयम् । करोति । बहवः । एव । ए-नम् । पशवः । भुञ्जन्तः । उपेति । तिष्ठन्ते । उन्ने-तरीत्युत्-नेतरि । उपहवमित्युप-हवम् । इच्छन्ते ।

---

[7]पशवो वा इत्यादि ॥ तद्धेतुत्वात्ताच्छब्द्यम् । ताः धाना भक्षणकाले यदि संभिन्द्यात् दन्तैः स्पृशेत् कुट्टयेद्वा अल्पाः पशवः क्षीरादिना एनं भुञ्जन्तः पालयन्तः उपतिष्ठेरन् संगच्छेयुः । संग-

तत्र सोमपीथस्तमेवाव रुन्धत उत्तर-
वेद्यां नि वपति पशवो वा उत्तरवे-
दिः पशवो हारियोजनीः पशुष्वेव
पशून्प्रतिष्ठापयन्ति ॥ ३५ ॥

यः । एव । तत्र । सोमपीथ इति सोम-पीथः । तम् । एव । अवेति । रुन्धते । उत्तरवेद्यामित्युत्तर-वद्याम् । नीति । वपति । पशवः । वै । उत्तर-वेदिरित्युत्तर-वेदिः । पशवः । हारियोजनीरिति हारि-योजनीः । पशुषु । एव । पशून् । प्रतीति । स्थापयन्ति ॥ ३५ ॥

अश्रीणादन्तराधानाभ्यामल्पा-
स्स्थापयन्ति ॥ ९ ॥

---

तिकरण आत्मनेपदम् । असंभेदने बहवः पशवः अभुञ्जन्तः क्षीरादिशून्या उपतिष्ठेरन् । मनसेत्यादि । संबाधते संपीडयति । तथा कुर्वन् उभयं करोति संभेदनमसंभेदनं च । ततश्च बहवः पशव एनं भुञ्जन्त एवोपतिष्ठन्ते । उन्नेतरीत्यादि । उपहवोनुज्ञा । गतमन्यत् ॥

इति षष्ठे पञ्चमे नवमोनुवाकः.

ग्रहान् वा अनु प्रजाः पशवः प्र जायन्त उपाꣳश्वन्तर्यामावजावयश्शुक्रामन्थिनौ पुरुषा ऋतुग्रहानेकशफा आदित्यग्रहं गाव आदित्यग्रहो भूयिष्ठाभिर् ऋग्भिर्गृह्यते तस्मा-

[1]ग्रहान् । वै । अन्विति । प्रजा इति प्र-जाः । पशवः । प्रेति । जायन्ते । उपाꣳश्वन्तर्यामावित्युपाꣳशु-अन्तर्यामौ । अजावय इत्यजा-अवयः । शुक्रामन्थिनाविति शुक्रा-मन्थिनौ । पुरुषाः । ऋतुग्रहानित्यृतु-ग्रहान् । एकशफा इत्येक-शफाः । आदित्यग्रहमित्यादित्य-ग्रहम् । गावः । आदित्यग्रह इत्यादित्य-ग्रहः । भूयिष्ठाभिः । ऋ-

---

[1]ग्रहान् वा इत्यादि ॥ ग्रहान् हुतान् अनु प्रजाः पशवश्च प्रजायन्ते । 'अनुर्लक्षणे' इति हेतुत्वे कर्मप्रवचनीयत्वम् । एवं सामान्येनोक्त्वा एकैकस्याह—उपांश्वन्तर्यामावित्यादि । उपांश्वन्तर्यामावनु अजाश्चावयश्च प्रजायन्ते। शुक्रामन्थिनावनु पुरुषाः प्रजायन्ते। एवं सर्वत्र। ऋतुग्रहानन्वेकशफाः अश्वादयः । आदित्यग्रहमनु गावः । आदित्यग्रह इत्यादि। भूयिष्ठाभिः बहुतमाभिः 'कदा चन'* इत्यादिभिः। तस्मात्पशूनां मध्ये गावः भूयिष्ठाः । यस्मादुपांशुग्रहं हस्तेन त्रि-

---

*सं. १-४-२२.

द्वावः पशूनां भूयिष्ठा यत्त्रिरुपांशुं हस्तेन विगृह्णाति तस्माद्वौ त्रीनजा जनयत्यथावयो भूयसीः पिता वा एष यदाग्रयणः पुत्रः कलशो यदाग्रयण उपदस्येत्कलशाद्गृह्णीयाद्यथा पिता ॥ ३६ ॥

ग्भिरित्यृक्-भिः । गृह्यते । तस्मात् । गावः । पशूनाम् । भूयिष्ठाः । यत् । त्रिः । उपांशुमित्युप-अंशुम् । हस्तेन । विगृह्णातीति वि-गृह्णाति । तस्मात् । द्वौ । त्रीन् । अजा । जनयति । अथ । अवयः । भूयसीः । [2]पिता । वै । एषः । यत् । आग्रयणः । पुत्रः । कलशः । यत् । आग्रयणः । उपदस्येदित्युप-दस्येत् । कलशात् । गृह्णीयात् ।

---

विगृह्णाति तस्मादजा द्वौ त्रीन्वा जनयति, त्रिषु द्वयोस्त्रयाणां चैव संभवात्, न तु त्रिभ्योधिकान् । अथावयस्त्रिभ्यो भूयसीर्बहुतराः अपि चतस्रः अपि पञ्चावीन् जनयति; अव्युत्पत्तिहेतौ अन्तर्यामे तादृशसंकोचसंख्याविशेषाभावात् ॥

[2]पिता वा इति ॥ पितृस्थानीय आग्रयणः; प्रथमोत्पन्नत्वात् । पुत्रस्थानीयो द्रोणकलशः; तत्र पश्चादुत्पन्नत्वात् । तत्र यद्याग्रयण उपदस्येत् उपक्षीयेत तदा द्रोणकलशात् गृह्णीयात् पुत्रस्थानीयत्वात् । तस्येति विधिः । यथा पिता क्षीणः क्षीणवृत्तिः

पुत्रं क्षित उपधावति तादृगेव तद्य-
त्कलशं उपदस्येदाग्रयणाद्गृह्णीयाद्य-
था पुत्रः पितरं क्षित उपधावति
तादृगेव तदात्मा वा एष यज्ञस्य
यदाग्रयणो यद्ग्रहो वा कलशो वो-

यथा । पिता ॥ ३६ ॥ पुत्रम् । क्षितः । उपधावतीत्युप-धावति । तादृक् । एव । तत् । यत् । कलशः । उपदस्येदित्युप-दस्येत् । आग्रयणात् । गृह्णीयात् । यथा । पुत्रः । पितरम् । क्षितः । उपधावतीत्युप-धावति । तादृक् । एव । तत् । [3]आत्मा । वै । एषः । यज्ञस्य । यत् । आग्रयणः । यत् । ग्रहः । वा । कलशः । वा । उपदस्येदित्यु-

---

पुत्रमुपधावति जीवनार्थमुपसर्पति तत्तुल्यमेव तत्, एवं कलशोपक्षये आग्रयणाद्ग्रहणं क्षीणस्य पुत्रस्य पितृधनसंभजनस्य स्थानीयं भवति ॥

[3]आत्मा वा इत्यादि ॥ यज्ञस्यात्मीयस्थानीय आग्रयणः, अन्तरवस्थानाद्यज्ञस्य । तस्माद्ग्रहकलशोपक्षये आग्रयणाद्ग्रहणं आत्मन एव यज्ञस्य साक्षान्निष्क्रयणं भवति, विच्छिन्नस्य पुनरप्यात्मन एवोत्पत्तेः । अधिरनर्थकः ॥

पदस्यैदाग्रयणाद्गृह्णीयादात्मन एवाधि यज्ञं निष्करोत्यविज्ञातो वा एष गृह्यते यदाग्रयणस्स्थाल्या गृह्णाति वायव्येन जुहोति तस्मात् ॥ ३७ ॥

प—दस्यैत् । आग्रयणात् । गृह्णीयात् । आत्मनः । एव । अधीति । यज्ञम् । निरिति । करोति । [4]अविज्ञात इत्यवि—ज्ञातः । वै । एषः । गृह्यते । यत् । आग्रयणः । स्थाल्या । गृह्णाति । वायव्येन । जुहोति । तस्मात् ॥ ३७ ॥ गर्भेण । अविज्ञातेनेत्य-

---

[4]अविज्ञातो वा इत्यादि ॥ आग्रयणो नामाविज्ञातो गृह्यते अविज्ञातयागदेवताविशेषनामधेयत्वात् । ऐन्द्रवायवादिवत् देवताविशेषसंबन्धस्याविज्ञातत्वात् । तस्मादाग्रयणस्स्थाल्या गृह्णाति सोमं वायव्येन त्वन्तर्यामपात्रादिना जुहोति । तस्मादित्यादि । यस्मादेवमविज्ञातस्वभाव आग्रयणः त्यक्त इव भवति तस्माद्गर्भेणाविज्ञातेन केवलेन ब्रह्महा भवति ब्रह्महत्याभाग्भवति आत्मत्यागित्वात् अविज्ञातगर्भस्य (तद्वदस्यापि) त्याज्यत्वात् । त्यागप्रकर्षज्ञापनार्थं ब्रह्मग्रहणम् । यद्वा—ब्रह्महतुल्यप्रायश्चित्तत्वात् ब्रह्महेत्युच्यते । यथाऽऽह मनुः—'हत्वागर्भमविज्ञातमेतदेव व्रतं चरेत्' इति । केचिदाहुः—आत्मत्यागी ब्रह्महेत्युच्यते । हन्तेर्विच्, 'सुपां सुलुक्' इति सोर्लुक्, आकारो वा ॥

गर्भेणाविज्ञातेन ब्रह्महाऽवभृथमव
यन्ति परा स्थालीरस्यन्त्युद्वायव्या-
नि हरन्ति तस्मात्स्त्रियं जातां पराऽ-
स्यन्त्युत्पुमाꣳसꣳ हरन्ति यत्पुरोरु-
चमाह यथा वस्यस आहरति ता-

वि-ज्ञातेन । ब्रह्महेति ब्रह्म-हा । [5]अवभृथमित्यव-
भृथम् । अवेति । यन्ति । परेति । स्थालीः । अ-
स्यन्ति । उदिति । वायव्यानि । हरन्ति । तस्मात् ।
स्त्रियम् । जाताम् । परेति । अस्यन्ति । उदिति ।
पुमाꣳसम् । हरन्ति । [6]यत् । पुरोरुचमिति पुरः-
रुचम् । आह । यथा । वस्यसे । आहरतीत्या-ह-

---

[5]अवभृथमव यन्तीत्यादि ॥ स्थालीस्सर्वाः पराऽस्यन्ति उत्सृजन्ति । वायव्यादिपात्राणि उद्धरन्ति अपनयन्ति अवभृथे देशे । यद्वा— अवभृथदेशे स्थालीः पराऽस्यन्तीति । वायव्यानि तूद्धरान्ति । तस्मात् स्त्रियं जातां परिपक्वां पराऽस्यन्ति परस्मिन् कुले प्रक्षिपन्ति परस्मै ददाति, पुमांसमुद्धरन्ति सन्तत्यर्थं धारयन्ति ॥

[6]यदित्यादि ॥ उपयामात्पूर्वं रोचते इति पुरोरुक् 'आ वायो भूष'* इत्यादिका । तां यदाह यथा वस्यसे श्रेयसे जनाय आहरति तत्तुल्यं तच्छ्रेयसः कीर्तनार्थत्वात् । तस्माल्लोके हि

---

*सं. १-४-४.

दृगेव तद्यद्ग्रहं गृह्णाति यथा वस्यंस आहृत्य प्राह ताद्दृगेव तद्यथ्सादयति यथा वस्यंस उपनिधायापक्रामंति तादृगेव तद्यद्वै यज्ञस्य साम्ना यजुषा क्रियते शिथिलं तद्यदृचा तद्दृढं

रंति । तादृक् । एव । तत् । यत् । ग्रहम् । गृह्णाति । यथा । वस्यंसे । आहृत्येत्या—हृत्य । प्रेति । आह । तादृक् । एव । तत् । यत् । सादयंति । यथा । वस्यंसे । उपनिधायेत्युप—निधाय । अपक्रामतीत्यप—क्रामति । तादृक् । एव । तत् । [7]यत् । वै । यज्ञस्य । साम्ना । यजुषा । क्रियते । शिथिलम् । तत् । यत् । ऋचा । तत् । दृढम् । पुर-

श्रेयांसं संकीर्त्य अस्मा इत्युद्दिशति । एवमिदं पुरोरुग्वचनं द्रष्टव्यम् । अथ यद्ग्रहस्य ग्रहणं 'उपयामगृहीतोसि'* इति यथा वस्यसे उपहारादिकमुपनिधाय समीपे स्थापयित्वा स्वयमपक्रामति तत्तुल्यमिदं सादनम् । लोके हि फलादिकं श्रेयसे आहृत्य दर्शयित्वा निधायापक्रामन्तीति ॥

[7]यद्वा इत्यादि ॥ पुरस्तात्पूर्वत्र 'उपयामगृहीतोसि'* इत्येतद्येषां ते पुरस्तादुपयामाः ग्रहाः, विपरीताः उपरिष्टादुपयामाः, तत्र ये यजुषा गृह्यन्ते ते पुरस्तादुपयामगृहीतास्स्युः यजुषो दुर्बलत्वात् ।

*सं १-४-२.

पुरस्तादुपयामा यजुषा गृह्यन्त उप-
रिष्टादुपयामा ऋचा यज्ञस्य धृत्यै ॥

प्रान्यानि पात्राणि युज्यन्ते नान्या-
नि यानि पराचीनानि प्रयुज्यन्तेऽ-

स्तादुपयामा इति पुरस्तात्–उपयामाः । यजुषा । गृह्यन्ते । उपरिष्टादुपयामा इत्युपरिष्टात्–उपयामाः । ऋचा । यज्ञस्य । धृत्यै ॥ ३८ ॥

यथा पिता तस्मादपक्रामति तादृगेव
तद्यदष्टादश च ॥ १० ॥

[1]प्रेति । अन्यानि । पात्राणि । युज्यन्ते । न । अन्यानि । यानि । पराचीनानि । प्रयुज्यन्त इति

---

यथा—'उपयामगृहीतोस्यन्तर्यच्छ मघवन्'* इत्यादयः । अथ ये ऋचा गृह्यन्ते 'आ वायो भूष'* इत्यादयः ते उपरिष्टादुपयामा गृह्यन्ते, ऋचस्स्वयमेव दृढत्वात् । तदुभयमपि यज्ञस्य धृत्यै दार्ढ्याय भवति ॥

इति षष्ठे पञ्चमे दशमोनुवाकः.

---

[1]प्रान्यानीत्यादि ॥ अन्यानि कानिचित्पात्राणि उपांशुपात्रादीनि प्रयुज्यन्ते नान्यानीति वचनात् प्रयोगविशेषोभिप्रेत इति गम्यते ।

---

*सं. १-४-३,४.

मुमेव तैर्लोकमभि जयति पराङिव
ह्यसौ लोको यानि पुनः प्रयुज्यन्ते
इममेव तैर्लोकमभि जयति पुनः-
पुनरिव ह्ययं लोकः प्रान्यानि पा-
त्राणि युज्यन्ते नान्यानि यानि प-

प्र-युज्यन्ते । अमुम् । एव । तैः । लोकम् । अभीति । जयति । पराङ् । इव । हि । असौ । लोकः । यानि । पुनः । प्रयुज्यन्त इति प्र-युज्यन्ते । इमम् । एव । तैः । लोकम् । अभीति । जयति । पुनःपुनरिति पुनः-पुनः । इव । हि । अयम् । लोकः । [2]प्रेति । अन्यानि । पात्राणि । युज्यन्ते । न । अन्यानि । यानि । पराचीनानि ।

---

पुनः प्रयुज्यन्त इति यावत् । पात्राणि द्विदेवत्यपात्रादीनि पुनः प्रयुज्यन्ते सकृदेव प्रयुक्तानि आतृतीयसवनात्परिशेरते । तत्र यानि-पराचीनानि पुनरावृत्तप्रयोगाणि सकृदेव प्रयुक्तानि कार्यं कुर्वन्ति अमुमेव परलोकमेव तैरभिजयति । हेतुमाह—पराङिव अपुनरावृत्त इव ह्यसौ लोकः पुनःपुनः प्राप्यः मृतस्य पुनरागमात् । यानि पुनःपुनः प्रयुज्यन्ते पात्राणि इमं लोकं तैरभिजयति पुनःपुनरावृत्त इव ह्ययं लोको भवति, कर्मार्जनस्थानत्वात् ॥

[2]किंचेत्याह—प्रान्यानीत्यादि ॥ पूर्ववत् । तत्र पराचीनैः पात्रैर्हेतुभिः ओषधयः पराभवन्ति विनश्यन्ति ग्रीष्मपक्का न पुनरावर्तन्ते ।

राचीनानि प्रयुज्यन्ते तान्यन्वोषं-
धयः परा भवन्ति यानि पुनः॥३१
प्रयुज्यन्ते तान्यन्वोषधयः पुनरा
भवन्ति प्रान्यानि पात्राणि युज्य-
न्ते नान्यानि यानि पराचीनानि
प्रयुज्यन्ते तान्यन्वारण्याः पशवो-
रण्यमप यन्ति यानि पुनः प्रयुज्य-

प्रयुज्यन्त इति प्र—युज्यन्ते । तानि । अन्विति । ओषधयः । परेति । भवन्ति । यानि । पुनः ॥३१॥ प्रयुज्यन्त इति प्र—युज्यन्ते । तानि । अन्विति । ओषधयः । पुनः । एति । भवन्ति । [3]प्रेति । अ-न्यानि । पात्राणि । युज्यन्ते । न । अन्यानि । यानि । पराचीनानि । प्रयुज्यन्त इति प्र—युज्यन्ते । तानि । अन्विति । आरण्याः । पशवः । अरण्यम् । अपेति । यन्ति । यानि । पुनः । प्रयुज्यन्त इति

---

यानि पुनःपुनः प्रयुज्यन्ते तैर्हेतुभिराभवन्ति वर्षादौ पुनःपुन-रुत्पद्यन्ते ओषधयः । हेतावनोः कर्मप्रवचनीयत्वम् ॥

[3]पुनश्च किंचेत्याह—प्रान्यानीत्यादि ॥ समानम् । पराचीनैः पात्रैः हेतुभिः आरण्याः पशवः अरण्यमपयन्ति अरण्यं प्राप्य अपुनरावृत्त्या अपगता एव च भवन्ति न पुनर्ग्राममागच्छन्ति। अ-

न्ते तान्यनु ग्राम्याः पशवो ग्राम-
मुपावर्यन्ति यो वै ग्रहाणां निदा-
नं वेद निदानवान्भवत्याज्यमित्यु-
क्थं तद्वै ग्रहाणां निदानं यदुपाꣳशु
शꣳसति तत् ॥४०॥ उपाꣳश्वन्तर्या-
मयोर्यदुच्चैस्तदितरेषां ग्रहाणामेतद्वै

प्र—युज्यन्ते । तानि । अन्विति । ग्राम्याः । पश-
वः । ग्रामम् । उपावर्यन्तीत्युप—अवर्यन्ति । [4]यः ।
वै । ग्रहाणाम् । निदानमिति नि—दानम् । वेद ।
निदानवानिति निदान—वान् । भवति । आज्यम् ।
इति । उक्थम् । तत् । वै । ग्रहाणाम् । निदान-
मिति नि—दानम् । यत् । उपाꣳश्वित्युप—अꣳशु ।
शꣳसति । तत् ॥४०॥ उपाꣳश्वन्तर्यामयोरित्यु-
पाꣳशु—अन्तर्यामयोः । यत् । उच्चैः । तत् । इत-

---

थान्यैः पात्रैः हेतुभिः ग्राम्याः पशवोरण्ये चरित्वा पुनःपुनर्ग्राम-
मुपावयन्ति उपागच्छन्ति । 'गतौ' इति उपशब्दो निहन्यते, स-
गतिना च 'उदात्तवता तिङा' इति समासः ॥

[4]यो वै ग्रहाणामित्यादि ॥ निन्दास्तुतिरिति केचित् । शक्ति-
मत्त्वनिबन्धनमित्यन्ये । आज्यमित्युक्थमिति । इतिशब्दः प्रकार-

ग्रहाणां निदानं य एवं वेद निदान-
वान्भवति यो वै ग्रहाणां मिथुनं
वेद प्र प्रजया पशुभिर्मिथुनैर्जायते
स्थालीभिरन्ये ग्रहा गृह्यन्ते वायव्यै-
रन्य एतद्वै ग्रहाणां मिथुनं य एवं
वेद प्र प्रजया पशुभिर्मिथुनैर्जायत

रेषाम्। ग्रहाणाम्। एतत्। वै। ग्रहाणाम्। निदानमिति नि—दानम्। यः। एवम्। वेद। निदानवानिति निदान—वान्। भवति। [५]यः। वै। ग्रहाणाम्। मिथुनम्। वेद। प्रेति। प्रजयेति प्र—जया। पशुभिरिति पशु—भिः। मिथुनैः। जायते। स्थालीभिः। अन्ये। ग्रहाः। गृह्यन्ते। वायव्यैः। अन्ये। एतत्। वै। ग्रहाणाम्। मिथुनम्। यः। एवम्। वेद। प्रेति। प्रजयेति प्र—जया। पशुभिरिति पशु—भिः। मि-

---

वचने। आज्यं नाम स्तोत्रविशेषः। आज्यप्रकारमुक्थं स्तोत्रं सर्वेषां ग्रहाणां निदानम्। केचिदाहुः—इतिशब्दोवच्छेदे। आज्याख्यमेव स्तोत्रं निदानमिवेति। एवं सामान्यनिदानमुक्त्वा ग्रहविशेषे विशेषमाह—यदित्यादि। गतम्॥

[५]यो वै ग्रहाणां मिथुनमित्यादि॥ ‘एकान्याम्याम्’ इत्याख्यातं न निहन्यते॥

इन्द्रस्त्वष्टुस्सोमंमभीषहां ऽपिबथ्स
विष्वङ्ङ् ॥ ४१ ॥ व्यार्छथ्स आत्म-
न्नारमंणं नाविन्दथ्स एतानंनुसवनं
पुरोडाशांनपश्यत्तान्निरंवपत्तैर्वैस आ-
त्मन्नारमंणमकुरुत तस्मांदनुसवनं
पुरोडाशा निरुंप्यन्ते तस्मांदनुसवनं

थुनैः । जायते । [6]इन्द्रः । त्वष्टुः । सोमंम् । अभी-षहेत्यंभि-सहां । अपिबत् । सः । विष्वङ् ॥४१॥ वीति । आर्छत् । सः । आत्मन्न् । आरमंणमित्यां-रमंणम् । न । अविन्दत् । सः । एतान् । अनुस-वनमित्यंनु-सवनम् । पुरोडाशान् । अपश्यत् । तान् । निरिति । अवपत् । तैः । वै । सः । आ-त्मन्न् । आरमंणमित्यां-रमंणम् । अकुरुत । त-स्मांत् । अनुसवनमित्यंनु-सवनम् । पुरोडाशाः । निरिति । उप्यन्ते । तस्मांत् । अनुसवनमित्यंनु-

[6] इन्द्रस्त्वष्टुरित्यादि ॥ अभीषहा अभिभवेन प्रसह्यापिबत् । सहतेः क्विपि 'नहिवृति' इत्यादिना दीर्घत्वम् । विष्वङ् विषूचीनगतिः ऊर्ध्वाधोगतिभ्यां सह सोमो व्यार्च्छत् विविधमगच्छत् आर्तमकरोदिन्द्रम् । अथ स इन्द्रः आत्मन्यारमणं अनुकूलरमणं सुखं ना-

पुरोडाशानां प्राश्नीयादात्मन्नेवारम्भ-
णं कुरुते नैनꣳ सोमोऽति पवते
ब्रह्मवादिनो वदन्ति नर्चा न यजुषा
पङ्क्तिराप्यतेऽथ किं यज्ञस्य पाङ्क्त्व-
मिति धानाः करम्भः परिवापः

सवनम् । पुरोडाशानाम् । प्रेति । अश्नीयात् । आत्मन्न् । एव । आरम्भणमित्या—रम्भणम् । कुरुते । न । एनम् । सोमः । अतीति । पवते । [7]ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । न । ऋचा । न । यजुषा । पङ्क्तिः । आप्यते । अथ । किम् । यज्ञस्य । पाङ्क्त्वमिति पाङ्क्—त्वम् । इति । धानाः । करम्भः । परिवाप इति परि—वापः । पुरोडाशः ।

---

विन्दत् नालभत । स एतानित्यादि । अनुसवनं सवनेसवने । वीप्सायामनोः कर्मप्रवचनीयत्वम् । गतमन्यत् । नैनमिति । अतिपवनं ऊर्ध्वमधश्चातिप्रवृत्तिः ॥

[7]ब्रह्मवादिन इत्यादि ॥ ऋग्यजुषविषयं संख्याविशेषं पङ्क्तिरूपं न पश्यामः । तयोरपङ्क्त्वात् यज्ञस्य पाङ्क्त्वे अतिप्रसंगः । तस्मात्किंविषयेण पञ्चत्वेन यज्ञस्य पाङ्क्त्वमिति प्रश्नः । धानादिविषयेणेत्युत्तरम् । तस्मात्तत्रतत्र पाङ्क्तो यज्ञ इत्युच्यते इति । सक्तुप्रभवा

पुरोडाशः पयस्या तेन पङ्क्तिराप्यते
तद्यज्ञस्य पाङ्क्तत्वम् ॥४२॥

पयस्या । तेन । पङ्क्तिः । आप्यते । तत् । यज्ञस्य । पाङ्क्तत्वमिति पाङ्क्त—त्वम् ॥ ४२ ॥

भवन्ति यानि पुनश्शश्ँसंति तद्विष्व-
क्लिं चतुर्दश च ॥ ११ ॥

इन्द्रो वृत्रायायुर्वै यज्ञेन सुवर्गाय यद्दतुग्रहा इन्द्रो मरुद्भिरदितिरन्तर्यामपात्रेण प्राण उपाश्ँशुपात्रे-णेन्द्रो वृत्रमहन्तस्य ग्रहा न्प्रान्यान्येकादश॥

इन्द्रो वृत्राय पुनर् ऋतुनाऽऽह मिथुनं प-
शवो नेष्टः पत्नीमुपाश्ँश्वन्तर्यामयो-
र्द्विचत्वारिश्ँशत् ॥ ४२ ॥

हरिः ओम्.

---

लाजा धानाः । आज्यसंयुक्तास्सक्तवः करम्भः । परिवापो व्रीहिप्रभवा लाजाः । पुरोडाशः पिष्टविकारः । पयस्या क्षीरविकारः ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये
षष्ठे काण्डे पञ्चमे प्रश्ने एकादशोनुवाकः.

प्रश्नश्च संपूर्णः.

हरिः ओम्.

सुवर्गाय वा एतानि लोकाय हूय-
न्ते यद्दाक्षिणानि द्वाभ्यां गार्हपत्ये
जुहोति द्विपाद्यजमानः प्रतिष्ठित्या
आग्नीध्रे जुहोत्यन्तरिक्ष एवा क्रमते
सदोभ्यैति सुवर्गमेवैनं लोकं गम-
यति सौरीभ्यामृग्भ्यां गार्हपत्ये
जुहोत्यमुमेवैनं लोकꣳ समारोहय-

[1]सुवर्गायेति सुवः—गाय । वै । एतानि । लोकाय । हूयन्ते । यत् । दाक्षिणानि । द्वाभ्याम् । गार्हपत्य इति गार्ह—पत्ये । जुहोति । द्विपादिति द्वि—पात् । यजमानः । प्रतिष्ठित्या इति प्रति—स्थित्यै । आग्नीध्र इत्याग्नि—इध्रे । जुहोति । अन्तरिक्षे । एव । एति । क्रमते । सदः । अभि । एति । एति । सुवर्गमिति सुवः—गम् । एव । एनम् । लोकम् । गमयति । सौरीभ्याम् । ऋग्भ्यामित्यृक्—भ्याम् । गार्हपत्य इति गार्ह—पत्ये । जुहोति । अमुम् । एव । एनम् । लोकम् । समारोह-

[1]सुवर्गाय वा इत्यादि ॥ द्वाभ्यामिति । हिरण्यं प्रतिबद्ध्य घृतेऽवधाय जुहोति 'उदु त्यं चित्रम्' इति* । आग्नीध्र इति । 'अग्ने नय'*

*सं. १-४-४३[1—3]

ति नयवत्यर्चाऽऽग्नीध्रे जुहोति सुव-
र्गस्य लोकस्याभिनीत्यै दिवं गच्छ
सुवः पतेति हिरण्यम् ॥ १ ॥ हु-
त्वोद्गृह्णाति सुवर्गमेवैनं लोकं गम-
यति रूपेण वो रूपमभ्यैमीत्याह रू-
पेण ह्यासाꣳ रूपमभ्यैति यद्धिरण्ये-

यतीति सं–आरोहयति । नयवत्येति नय–वत्या । ऋचा । आग्नीध्र इत्याग्नि–इध्रे । जुहोति । सुवर्गस्येति सुवः–गस्य । लोकस्य । अभिनीत्या इत्यभि–नीत्यै । दिवम् । गच्छ । सुवः । पत । इति । हिरण्यम् ॥ १ ॥ हुत्वा । उदिति । गृह्णाति । सुवर्गमिति सुवः–गम् । एव । एनम् । लोकम् । गमयति । रूपेण । वः । रूपम् । अभि । एति । एमि । इति । आह । रूपेण । हि । आसाम् । रूपम् ।

---

इति सदोभ्यैति आभिमुख्येनागच्छति तेन स्वर्गमेनं गमयति । रूपेण* घृतं हिरण्यं चोद्गृहीतं धारयन् 'रूपेण वः'† इति दक्षिणा अभ्येति । तत्रासामनेन रूपेण इदमाभिगमनम् यदिदं हिरण्येन । तस्माद्रूपेणेत्युच्यते इत्यर्थः ॥

---

*रूपेणेति नास्ति कोशान्तरे. † सं. १-४-४३[5]

न तुथो वो विश्ववेदा वि भजत्वि-
त्याह तुथो ह स्म वै विश्ववेदा दे-
वानां दक्षिणा वि भजति तेनैवैना
वि भजत्येतत्ते अग्ने राधः ॥ २ ॥
ऐति सोमच्युतमित्याह सोमच्यु-

अभि । एति । एति । यत् । हिरण्येन । [2]तुथः । वः ।
विश्ववेदा इति विश्व-वेदाः । वीति । भजतु ।
इति । आह । तुथः । ह । स्म । वै । विश्ववेदा इति
विश्व-वेदाः । देवानाम् । दक्षिणाः । वीति । भ-
जति । तेन । एव । एनाः । वीति । भजति ।
एतत् । ते । अग्ने । राधः ॥ २ ॥ एति । एति ।
सोमच्युतमिति सोम-च्युतम् । इति । आह ।

---

[2]तुथो व इति ॥ दक्षिणा यजमानो विभजति चतुर्धा । तुथो नाम कश्चिद्विश्ववेदास्सर्वदेवविदितसर्वधनः देवानां दक्षिणा विभजति स्म । तस्मादेतद्वदन् तेनैवैना विभजति । 'एतत्ते अग्ने'* इति दक्षिणानयनम् । सोमच्युतं हीति । सोमेन च्युतं च्यावितं रायो धनं तस्य सकाशमेति आगच्छति सोमयागफलं प्राप्नोति । 'तृतीयाकर्मणि' इति सोमच्युतशब्दे पूर्वपदप्रकृतिस्वरत्वम्, 'हि च' इत्याख्यातस्य निघाताभावः । 'मित्रस्य पथा नय'* इति वचनं शान्त्यै सुखाय भवति; सुखकारित्वान्मित्रस्य ॥

---

* सं. १-४-४३

तꣳ ह्यस्य राध ऐति तन्मित्र-
स्यं पथा नयेत्याह शान्त्यां ऋत-
स्यं पथा प्रेतं चन्द्रदक्षिणा इत्याह
सत्यं वा ऋतꣳ सत्येनैवैना ऋतेन
वि भंजति यज्ञस्यं पथा सुंविता
नयन्तीरित्याह यज्ञस्य ह्येताः पथा
यन्ति यद्दक्षिणा ब्राह्मणमद्य राध्या-

सोमंच्युतमिति सोमं—च्युतम् । हि । अस्य । राधंः । एतिं । एतिं । तत् । मित्रस्यं । पथा । नय । इतिं । आह । शान्त्यै । [3]ऋतस्यं । पथा । प्रेतिं । इत । चन्द्रदंक्षिणा इतिं चन्द्र—दक्षिणाः । इतिं । आह । सत्यम् । वै । ऋतम् । सत्येनं । एव । एनाः । ऋतेनं । वीतिं । भजति । यज्ञस्यं । पथा । सुविता । नयंन्तीः । इतिं । आह । यज्ञस्यं । हि । एताः । पथा । यन्ति । यत् । दक्षिणाः ।

[3]ऋतस्येत्यादि ॥ गतम् *। यज्ञस्य हि पथा मार्गेण उत्तरेण यान्ति गच्छन्ति । दक्षिणादानं—ब्राह्मणमित्यादि । आत्रेयाय प्रथमाय हिरण्य ददाति एष वै ब्राह्मण ऋषिश्च द्रष्टा च । आर्षेयः ऋषेर्द्रष्टुश्चापत्यम् । कः? यश्शुश्रुवान् । श्रुतार्थ इत्येके । षडङ्गविदित्यन्ये ।

*सं ६-३-६,[8]

सम् ॥ ३ ॥ ऋषिमार्षेयमित्याहैष
वै ब्राह्मण ऋषिरार्षेयो यश्शुश्रुवा-
न्तस्मादेवमाह वि सुवः पश्य व्य-
न्तरिक्षमित्याह सुवर्गमेवैनं लोकं
गमयति यतस्व सदस्यैरित्याह मि-
त्रत्वायास्मद्दात्रा देवत्रा गच्छत म-

ब्राह्मणम् । अद्य । राध्यासम् ॥ ३ ॥ ऋषिम् । आर्षेयम् । इति । आह । एषः । वै । ब्राह्मणः । ऋषिः । आर्षेयः । यः । शुश्रुवान् । तस्मात् । एवम् । आह । वीति । सुवः । पश्य । वीति । अन्तरिक्षम् । इति । आह । सुवर्गमिति सुवः-गम् । एव । एनम् । लोकम् । गमयति । यतस्व । सदस्यैः । इति । आह । मित्रत्वायेति मित्र-त्वाय । अस्मद्दात्रा इत्यस्मत्-दात्राः । देवत्रेति देव-त्रा । गच्छत । मधुमतीरिति मधु-मतीः ।

'इतश्चानिञः' इति ठक् । विसुव इत्यादि । गतम् । मित्रत्वायेति । 'यतस्व सदस्यैः'* इति वचनं सदस्यैर्मित्रत्वाय भवति । 'अस्मद्दात्राः'* इति नीतानुमन्त्रणम् । वयमिहेत्यादि । इहास्मिन् लोके वयं स्मः प्रदातारः । अमुत्र परलोके अस्मान् मधुमतीः मधुरफलवत्यः

* सं. १-४-४३ 10—11

धुमतीः प्रदातारमा विशतेत्याह वयमिह प्रदातारस्स्मोऽस्मानमुत्र मधुमतीरा विशतेति ॥ ४ ॥ वावैतदाह हिरण्यं ददाति ज्योतिर्वै हिरण्यं ज्योतिरेव पुरस्ताद्धत्ते सुवर्गस्य लोकस्यानुख्यात्या अग्नीधे ददात्य-

प्रदातारमिति प्र—दातारम् । एति । विशत । इति । आह । वयम् । इह । प्रदातार इति प्र—दातारः । स्मः । अस्मान् । अमुत्र । मधुमतीरिति मधु—मतीः । एति । विशत । इति ॥ ४ ॥ वाव । एतत् । आह । [4]हिरण्यम् । ददाति । ज्योतिः । वै । हिरण्यम् । ज्योतिः । एव । पुरस्तात् । धत्ते । सुवर्गस्येति सुवः—गस्य । लोकस्य । अनुख्यात्या इत्यनु—ख्यात्यै । अग्नीध इत्यग्नि—इधे । ददाति ।

---

आविशतेत्येतदनेन प्रतिपाद्यते इति दर्शयति । अस्मद्दात्रा अस्मद्दातृका यूयं देवत्रा देवीभूता अस्मानमुत्रागच्छतेति दर्शनात् ॥

[4]हिरण्यमित्यादि ॥ पुरस्तादग्रतो धत्ते धारितं भवति स्वर्गस्य प्रकाशनार्थम् । एवं वाक्यशेषत्वात् पूर्वं हिरण्यं ददातीति गम्यते । अग्नीध इत्यादि । अग्निमुखानग्निप्रथमान् अग्निना सहि-

ग्निर्मुखानेवर्तून्प्रीणाति ब्रह्मणे ददा-
ति प्रसूत्यै होत्रे ददात्यात्मा वा एष
यज्ञस्य यद्धोताऽऽत्मानमेव यज्ञस्य
दक्षिणाभिस्समर्धयति ॥ ५ ॥

समिष्टयजूꣳषि जुहोति यज्ञस्य स-

अग्निर्मुखानित्यग्नि–मुखान् । एव । ऋतून् । प्री-
णाति । ब्रह्मणे । ददाति । प्रसूत्या इति प्र–सूत्यै ।
होत्रे । ददाति । आत्मा । वै । एषः । यज्ञस्य ।
यत् । होता । आत्मानम् । एव । यज्ञस्य । दक्षि-
णाभिः । समिति । अर्धयति ॥ ५ ॥

हिरण्यꣳराधो राध्यासममुत्र मधुमतीरा
विंशतेत्यष्टात्रिꣳशच्च ॥ १ ॥

[1]समिष्टयजूꣳषीति समिष्ट–यजूꣳषि । जुहोति ।

तानित्यर्थः । ऋतावुत्पद्यतेऽग्निः तेन सह तदाधारानृतून्प्रीणयति । ब्र-
ह्मणे दानं प्रसूत्यै अनुज्ञानाय भवति । यज्ञस्यात्मा होता । तस्मादस्मै
दानात् यज्ञस्यात्मानमेव दक्षिणाभिस्समृद्धं करोति ॥

इति षष्ठे षष्ठे प्रथमोनुवाकः.

---

[1]समिष्टयजूंषीत्यादि ॥ यज्ञस्य समिष्टत्वार्थाय यागहोमाः "धाता रा-

मिंष्ट्यै यद्वै यज्ञस्यं क्रूरं यद्विलिंष्टं
यदुत्येति यन्नात्येति यदंतिकरोति
यन्नापिं करोति तदेव तैः प्रींणाति
नवं जुहोति नव वै पुरुंषे प्राणाः

यज्ञस्यं । सामिंष्ट्या इति सं-इष्ट्यै । यत् । वै । यज्ञस्यं । क्रूरम् । यत् । विलिंष्टमिति वि-लिष्टम् । यत् । अत्येतीत्यंति-एतिं । यत् । न । अत्येतीत्यंति-एतिं । यत् । अतिकरोतीत्यंति-करोतिं । यत् । न । अपीतिं । करोतिं । तत् । एव । तैः । प्रीणाति । [2]नवं । जुहोति । नवं । वै । पुरुंषे ।

तिः"* इत्याद्याः समिष्टयजूंषि । तेषां होमो यज्ञस्य समिष्टयै सम्यगिष्टत्वाय भवति । यद्वा इत्यादि । यज्ञस्य संबन्धि क्रूरादिकं ततस्समिष्टयजुर्भिः प्रीणाति सुखहेतुमेव करोति शमयतीति यावत् । यद्वा— प्रीणातिः क्रूरपूरणकर्मा क्रूरादिदोषगर्तं पूरणेन समीकरोति यज्ञं ततः क्रूरं हिंसायुक्तं विलिष्टं संकुचितम् । लिश अल्पीभावे । अत्यय उत्कर्षः कालोत्कर्षः प्रमाणोत्कर्षश्च । अनत्ययश्चोदितस्यात्ययस्य द्विप्रकारस्याभावः । अतिकरणं अतिरिक्तं करणम् । अकरणं लोपः प्राप्तस्यानुष्ठानविस्मरणम् । अपिशब्दस्समुच्चये ॥

[2]नवेत्यादि ॥ गतम् । षडृग्मियाणीति । ऋक्प्रभवाणि षट्समिष्टयजूंषि आद्यानि । 'एकाचो नित्यं मयट्वा छन्दसि' इति

*सं. १-४-४४[1—6]

पुरुषेण यज्ञस्सम्मितो यावानेव य-
ज्ञस्तं प्रीणाति षडृग्मियाणि जुहो-
ति षड्वा ऋतवं ऋतूनेव प्रीणाति
त्रीणि यजूꣳषि ॥ ६ ॥ त्रयं इमे
लोका इमानेव लोकान्प्रीणाति यज्ञं
यज्ञं गच्छ यज्ञपतिं गच्छेत्याह यज्ञ-
पतिमेवैनं गमयति स्वां योनिं ग-
च्छेत्याह स्वामेवैनं योनिं गमयत्ये-

प्राणा इति प्र–अनाः । पुरुषेण । यज्ञः । संमित इति सं–मितः । यावान् । एव । यज्ञः । तम् । प्रीणाति । षट् । ऋग्मियाणि । जुहोति । षट् । वै । ऋतवः । ऋतून् । एव । प्रीणाति । त्रीणि । यजूꣳषि ॥ ६ ॥ त्रयः । इमे । लोकाः । इमान् । एव । लोकान् । प्रीणाति । यज्ञ । यज्ञम् । गच्छ । यज्ञपतिमिति यज्ञ–पतिम् । गच्छ । इति । आह । यज्ञपतिमिति यज्ञ–पतिम् । एव । एनम् । गमयति । स्वाम् । योनिम् । गच्छ । इति । आह ।

---

मयट्, वर्णविकारश्छान्दसः, अयस्मयादित्वेन पदत्वात्कुत्वम्, भत्वात् जस्त्वाभावः । यजूंषि 'यज्ञ यज्ञं गच्छ'* इत्यादीनि त्रीणि सामि-

---

*सं. १-४-४४.[7-9]

ष ते यज्ञो यज्ञपते सहसूक्तवाक-
स्सुवीर इत्याह यजमान एव वीर्यं
दधाति वासिष्ठो ह सात्यहव्यो देव-
भागं पप्रच्छ यथ्सृञ्जयान्बहुयाजि-

स्वाम् । एव । एनम् । योनिम् । गमयति । एषः । ते । यज्ञः । यज्ञपत इति यज्ञ–पते । सहसूक्तवाक इति सहसूक्त–वाकः । सुवीर इति सु–वीरः । इति । आह । यजमाने । एव । वीर्यम् । दधाति । [3]वासिष्ठः । ह । सात्यहव्य इति सात्य–हव्यः । देवभागमिति देव–भागम् । पप्रच्छ । यत् । सृ-

---

ष्टयजूंषि । यज्ञपतिमेवेति । यज्ञमेनं यज्ञपतिं यजमानं गमयति प्रापयति स्वां योनिं यजमानमेव यज्ञं गमयति । वीर्यं दधातीति । सुवीर इति लिङ्गात् ॥

[3]वासिष्ठ इत्यादि ॥ वासिष्ठो वसिष्ठगोत्रः । ऋष्यण् । सत्यहव्यस्यापत्यं सात्यहव्यः । स एवाण्, शिवादिर्वा द्रष्टव्यः । स देवभागं नाम पप्रच्छ पृष्टवान् । कथमित्याह—यदित्यादि ॥ यदा त्वं सृंजयान् देशविशेषवासिनो बहुयाजिनः बहुभिः क्रतुभिरिष्टवतः । यद्वा—सोमयाजिनो बहुयाजिनः तान् बहुश आहृतसोमान् साध्वाचारान् अयीयजः याजितवानसि । यजतेर्ण्यन्ताल्लुङि चङादि । तदानीं किं त्वं यज्ञे यज्ञं प्रत्यतिष्ठिपः?

नोऽयीयजो यज्ञे ॥ ७॥ यज्ञं प्रत्यतिष्ठिपा३ यज्ञपता३विति स होवाच यज्ञपताविति सत्याद्वै सृञ्जयाः परा बभूवुरिति होवाच यज्ञे वाव

ञ्जयान् । बहुयाजिन इति बहु—याजिनः । अयीयजः । यज्ञे ॥७॥ यज्ञम् । प्रतीति । अतिष्ठिपा३ः । यज्ञपता३विति यज्ञ—पता३उ । इति । [4]सः । ह । उवाच । यज्ञपताविति यज्ञ—पतौ । इति । सत्यात् । वै । सृञ्जयाः । परेति । बभूवुः । इति । ह । उवाच । [5]यज्ञे । वाव । यज्ञः । प्रतिष्ठाप्य इति प्रति—

---

आहोस्वित् यज्ञपतौ यज्ञं प्रत्यतिष्ठिपः ? इति । स्थापयतेर्लुङि चङादौ 'तिष्ठतेरित्' इतीत्वम् । उभयत्रापि 'विचार्यमाणानाम्' इति प्लुतः । उत्तरत्र 'एचोप्रगृह्यस्य' इत्याकारोकारौ ॥

[4]स होवाचेत्यादि ॥ यज्ञपतौ यज्ञमहं प्रत्यतिष्ठिपमिति स देवभाग उवाच । अथ वासिष्ठ उवाच—तर्हि तेनैव कारणेन ते सृंजयाः साध्वाचारा अपि त्वया अयथाकारिणा याज्यमानाः सत्यात्पराबभूवुः विनष्टास्सत्यात्प्रच्युताः । यद्वा—सत्यं कारणम् । सत्यात्कारणादेव सृंजयाः, पराभूताः सृंजया इति श्रुतम् । तत्र समीचीनमिदं कारणमिति ॥

[5]क्क तर्हि यज्ञः प्रतिष्ठाप्य इति? आह—स एव वासिष्ठः । यज्ञ

यज्ञः प्रतिष्ठाप्यं आसीद्यजमानस्या-
पराभावायेति देवा गातुविदो गातुं
वित्वा गातुमितेत्याह यज्ञ एव यज्ञं
प्रतिष्ठापयति यजमानस्यापराभा-
वाय ॥ ८ ॥

स्थाप्यः । आसीत् । यजमानस्य । अपराभावा-
येत्यपरा-भावाय । इति । [6]देवाः । गातुविद इति
गातु-विदः । गातुम् । वित्वा । गातुम् । इत ।
इति । आह । यज्ञे । एव । यज्ञम् । प्रतीति ।
स्थापयति । यजमानस्य । अपराभावायेत्यपरा-
भावाय ॥ ८ ॥

यजूंषि यज्ञ एकचत्वारिंशच्च ॥ २ ॥

---

एव यज्ञः प्रतिष्ठाप्य आसीत् भवति । छान्दसो लुङ् । यद्वा—एवं पूर्वैश्शिष्टैराचरितमासीत् । तत्खलु यजमानस्याविनाशाय भवति ॥

[6]अथ कः पुनस्स प्रकारः येन यज्ञे यज्ञस्स्थापितो भवतीत्याह—देवा इत्यादि ॥ अनेन समिष्टयजुषा यज्ञे समापिते यज्ञ एव यज्ञः प्रतिष्ठापितो भवति, 'वाते धाः'* इति लिङ्गात् । वातो हीश्वरस्य क्रियासमष्टिरूपो† यज्ञात्मा विष्णुरिति ॥

इति षष्ठे षष्ठे द्वितीयोनुवाकः.

---

*सं. १-४-४४.[9]

†क्रियाशक्तिः सर्वरूपकर्मसमिष्टरूपः इति कोशान्तरे.

अवभृथयजूꣳषि जुहोति यदेवार्वा-
चीनमेकंहायनादेनः करोति तदेव
तैरव यजतेऽपोवभृथमवैत्यप्सु वै

[1]अवभृथयजूꣳषीत्यवभृथ–यजूꣳषि । जुहोति । यत् । एव । अर्वाचीनम् । एकहायनादित्येक–हायनात् । एनः । करोति । तत् । एव । तैः । अवेति । यजते । [2]अपः । अवभृथमित्यव–भृथम् । अवेति । एति । अप्स्वित्यप्–सु । वै । वरुणः ।

[1]अवभृथयजूंषीत्यादि ॥ शाकलमन्त्रैः 'देवकृतस्य'* इत्यादिभिः । यदेवेति । एकहायनात् एकवर्षादेकसंवत्सरानुवृत्तौ एनसः पापात् अर्वाचीनं यदेनः करोति तत्सर्वं तैरवयजते सर्वं नाशयतीत्यर्थः । संवत्सराद[व]धिकत्वात् कर्मणां शुभाशुभानाम् । यद्वा—एक एव हायन एकहायनः । दासीभारादिर्द्रष्टव्यः । निषेकादारभ्य एकहायनो जन्मकालः । तत ऊर्ध्वमितोर्वाचीनं इतः प्राक् यदेनः करोति तत्सर्वं नाशयति; गर्भे न कर्तृत्वमस्वतन्त्रत्वादित्याहुः ॥

[2]अपोवभृथमित्यादि ॥ तादर्थ्यात्ताच्छब्द्यम् । अवभृथार्था अपो गच्छन्ति । अवभृथार्थं वा अपोवैति विभक्तिव्यत्ययो वा । अप्सु अवभृथाख्यं कर्म प्रतिपद्यते इति । अप्सु वा इत्यादि । साक्षादव्यवधानेनैव वरुणं वारकं पाप्मादिकं अवयजते नाशयति । यद्वा—वरुणमपांपतिं देवं साक्षादेवाव्यवधानेनैव अवयजते अध स्तात्पूजयति, अपामन्तरिति यावत् ॥

*सं. १-२-५.[२१—२२]

वरुणस्साक्षादेव वरुणमवं यजते
वर्त्मना वा अन्वित्यं यज्ञꣳ रक्षाꣳ-
सि जिघाꣳसन्ति साम्ना प्रस्तोताऽ-
न्ववैति साम वै रक्षोहा रक्षसा-
मपहत्यै त्रिर्निधनमुपैति त्रयं इमे
लोका एभ्य एव लोकेभ्यो रक्षाꣳ-
सि ॥ १ ॥ अप हन्ति पुरुषः-

साक्षादिति स—अक्षात् । एव । वरुणम् । अवेति । यजते । [3]वर्त्मना । वै । अन्वित्येत्यनु—इत्यं । यज्ञम् । रक्षाꣳसि । जिघाꣳसन्ति । साम्ना । प्रस्तोतेति प्र—स्तोता । अन्ववैतीत्यनु—अवैति । साम । वै । रक्षोहेति रक्षः—हा । रक्षसाम् । अपहत्या इत्यप—हत्यै । त्रिः । निधनमिति नि—धनम् । उपेति । एति । त्रयः । इमे । लोकाः । एभ्यः । एव । लोकेभ्यः । रक्षाꣳसि ॥ १ ॥ अपेति । हन्ति ।

---

[3]वर्त्मना वा इत्यादि ॥ येन वर्त्मना यज्ञकारिणः ऋत्विग्यजमाना अवभृथार्थं गच्छन्ति तेनान्वित्य अनुगम्य तं यज्ञं रक्षांसि हन्तुमिच्छन्ति तस्मात्तदपघातार्थं प्रस्तोता साम्नाऽन्वगीत्थंभूतो*न्ववैत्यनुगच्छति साम च रक्षसां हन्तृ । लिङ्गव्यत्ययश्छान्दसः । त्रिरित्यादि । साम्नो

---

*साहित्यार्थभूतो इत्यपि क्वचित्पाठः.

पुरुषो निधनमुपैति पुरुषःपुरुषो
हि रक्षस्वी रक्षसामपहत्या उरुꣳ
हि राजा वरुणश्चकारेत्याह प्रति-
ष्ठित्यै शतं ते राजन्भिषजस्सहस्र-
मित्याह भेषजमेवास्मै करोत्य-

पुरुषःपुरुष इति पुरुषः-पुरुषः । निधनमिति नि-धनम् । उपेति । एति । पुरुषःपुरुष इति पुरुषः-पुरुषः । हि । रक्षस्वी । रक्षसाम् । अपहत्या इत्यप-हत्यै । [4]उरुम् । हि । राजा । वरुणः । चकार । इति । आह । प्रतिष्ठित्या इति प्रति-स्थित्यै । शतम् । ते । राजन् । भिषजः । सहस्रम् । इति । आह । भेषजम् । एव । अस्मै । करोति । अभि-

निधनं त्रिरुपैति उपगच्छति । त्रित्वान्वयात् लोकत्रयसंबन्धिनां रक्षसामपघाताय भवति । पुरुषःपुरुष इति । सर्वः पुरुषः ऋत्विग्वा यजमानो वा साम्नो निधनमुपैतीति । वीप्सायां द्विर्वचने 'अनुदात्तं च' इत्यादिना द्वितीयस्यानुदात्तत्वम् । सर्वो हि पुरुषो रक्षस्वी रक्षसा बाधकेन तद्वान् तेन बाध्यते इति यावत् । तस्मात्सर्वस्य रक्षसामपघाताय भवति ॥

[4]उरुं हि राजेत्यादि ॥ वेद्या अभिप्रयान्तो वदन्ति, प्रतिष्ठित्यै भवति, उरु प्रज्ञातं च करोति लिङ्गात् । भेषजमनिष्टोपशमनं करोति, वरुणपाशमभितिष्ठति आक्रामति । बर्हिरभि बर्हिष

भिष्ठितो वरुणस्य पाश इत्याह वरुणपाशमेवाभि तिष्ठति बर्हिरभि जुहोत्याहुतीनां प्रतिष्ठित्या अथो अग्निवत्येव जुहोत्यपबर्हिषः प्रयाजान् ॥ १० ॥ यजति प्रजा वै बर्हिः प्रजा एव वरुणपाशान्मु-

ष्ठित इत्यभि—स्थितः। वरुणस्य । पाशः । इति । आह । वरुणपाशमिति वरुण—पाशम् । एव । अभीति । तिष्ठति । बर्हिः । अभीति । जुहोति । आहुतीनामित्या—हुतीनाम् । प्रतिष्ठित्या इति प्रति—स्थित्यै । अथो इति । अग्निवतीत्यग्नि—वति । एव । जुहोति । अपबर्हिष इत्यप—बर्हिषः । प्रयाजानिति प्र—याजान् ॥१०॥ यजति । प्रजा इति प्र—जाः । वै । बर्हिः । प्रजा इति प्र—जाः । एव। वरुणपाशादिति—वरुण—पाशात् । मुञ्चति । आ-

उपरि जुहोति आहुतीनां प्रतिष्ठित्यै ज्ञानलाभाय, अप्सु ह्याहुतयो न तिष्ठेयुः । अपि च अग्निवत्येव स्थाने हुता भवन्ति 'अग्निवान् वै दर्भस्तम्बः'* इति । अपबर्हिष इति बर्हिर्वर्जितान् । प्रजा वा इत्यादि । गतम् । नान्तरेति न तिरोदधाति चक्षुषी आज्यभागौ । 'चक्षुषी वा एते यज्ञस्य यदाज्यभागौ '† इति ॥

* तै. ब्रा. २-२-१. † सं. २-६-२,१

ङ्क्त्याज्यभागौ यजति यज्ञस्यैव च-
क्षुंषी नान्तरैति वरुणं यजति वरु-
णपाशादेवैनं मुञ्चत्यग्नीवरुणौ यज-
ति साक्षादेवैनं वरुणपाशान्मुञ्चत्यपं-
बर्हिषावनूयाजौ यंजति प्रजा वै

ज्यभागावित्याज्य–भागौ । यजति । यज्ञस्य । एव । चक्षुंषी इति । न । अन्तः । एति । [5]वरुणम् । यजति । वरुणपाशादिति वरुण–पाशात् । एव । एनम् । मुञ्चति । अग्नीवरुणावित्यग्नी–वरुणौ । यजति । साक्षादिति स–अक्षात् । एव । एनम् । वरुणपाशादिति वरुण–पाशात् । मुञ्चति । अपंबर्हिषावित्यपं–बर्हिषौ । अनूयाजावित्यनु–याजौ । यजति । प्रजा इति प्र–जाः । वै । बर्हिः ।

[5]वरुणं यजतीत्यादि ॥ अग्नीवरुणाविति । 'ईदग्नेः' इतीत्वम्, 'देवताद्वन्द्वे च' इति युगपत्प्रकृतिस्वरत्वम् । साक्षादिति। अग्निसंबन्धात्साक्षात्तदानीमेव वरुणपाशान्मुञ्चति यजमानम् । अपबर्हिषावित्यादि । गतम्* । चतुरः । 'चतुरश्शसि' इत्यन्तोदात्तत्वम् । समुद्रे ते हृदयमिति ऋजीषमप्सु मारयति । केचित्तु—मन्त्राम्नानक्रममुल्लङ्घ्य ब्राह्मणे प्रथममुपादानात् 'अवभृथ निचङ्कुण'†

*सं ६-६-३.[4] †सं. १-४-४५.[१]

बर्हिः प्रजा एव वरुणपाशान्मुञ्चति
चतुरः प्रयाजान् यजति द्वावनूया-
जौ षट्थ्सं पद्यन्ते षड्वा ऋतवः ॥
॥ ११ ॥ ऋतुष्वेव प्रति तिष्ठत्यव-
भृथ निचङ्कुणेत्याह यथोदितमेव
वरुणमव यजते समुद्रे ते हृदयम-
प्स्वन्तरित्याह समुद्रे ह्यन्तर्वरुणस्सं

प्रजा इति प्र–जाः । एव । वरुणपाशादिति वरु-
ण–पाशात् । मुञ्चति । चतुरः । प्रयाजानिति प्र–
याजान् । यजति । द्वौ । अनूयाजावित्यनु–याजौ ।
षट् । समिति । पद्यन्ते । षट् । वै । ऋतवः ॥११॥
ऋतुषु । एव । प्रतीति । तिष्ठन्ति । अवभृथेत्यव–
भृथ । निचङ्कुणेति नि–चङ्कुण । इति । आह ।
यथोदितमिति यथा–उदितम् । एव । वरुणम् ।
अवेति । यजते । समुद्रे । ते । हृदयम् । अप्स्वि-
त्यप्–सु । अन्तः । इति । आह । समुद्रे । हि ।

---

इत्यनेनावभृथमवेष्यतो होम इत्याहुः । यथोदितमेवेति । यथा मन्त्रो वदति देवकृतमर्त्यकृतादिवारकपापाद्वार्जितं तथा करोत्येव । सम्यश्चामिति । अद्भिरोषधीभिश्च संगतमित्यर्थः । यथायजुरिति । देवेष्वेषां सुकृतां वचनं यथायजुर्भवत्येव ॥

त्वा विशन्त्वोषधीरुताप इत्याहाद्भि-
रेवैनमोषधीभिस्सम्यञ्चं दधाति देवी-
राप एष वो गर्भ इत्याह यथायजु-
रेवैतत्पशवो वै ॥ १२ ॥ सोमो
यद्भिन्दूनां भक्षयेत्पशुमान्त्स्याद्वरुण-
स्त्वेनं गृह्णीयाद्यन्न भक्षयेदपशुस्स्या-
न्नैनं वरुणो गृह्णीयादुपस्पृश्यमेव प-

अन्तः । वरुणः । समिति । त्वा । विशन्तु । ओ-
षधीः । उत । आपः । इति । आह । अद्भिरित्यत्–
भिः । एव । एनम् । ओषधीभिरित्योषधि–भिः ।
सम्यञ्चम् । दधाति । देवीः । आपः । एषः । वः ।
गर्भः । इति । आह । यथायजुरिति यथा–यजुः ।
एव । एतत् । [6]पशवः । वै ॥ १२ ॥ सोमः । यत् ।
भिन्दूनाम् । भक्षयेत् । पशुमानिति पशु–मान् ।
स्यात् । वरुणः । तु । एनम् । गृह्णीयात् । यत् ।
न । भक्षयेत् । अपशुः । स्यात् । न । एनम् । व-
रुणः । गृह्णीयात् । उपस्पृश्यमित्युप–स्पृश्यम् ।

---

[6]पशवो वा इत्यादि ॥ तज्जन्यत्वात्ताच्छब्द्यम् । भिन्दूनां सोमबुद्बुदानां भक्षणे पशुमान् भवति । वरुणगृहीतत्वं तु

शुमान्भवति नैनं वरुणो गृह्णाति प्रतियुतो वरुणस्य पाश इत्याह वरुणपाशादेव निर्मुच्यतेऽप्रतीक्षमा यन्ति वरुणस्यान्तर्हित्या एधोस्ये-धिषीमहीत्याह समिधैवाग्निं नमस्य-

एव । पशुमानिति पशु-मान् । भवति । न । एनम् । वरुणः । गृह्णाति । [7]प्रतियुत इति प्रति-युतः । वरुणस्य । पाशः । इति । आह । वरुणपाशादिति वरुण-पाशात् । एव । निरिति । मुच्यते । अप्रतीक्षमित्यप्रति-ईक्षम् । एति । यन्ति । वरुणस्य । अन्तर्हित्या इत्यन्तः-हित्यै । [8]एधः । असि । एधिषीमहि । इति । आह । समिधेति सं-इधा । एव । अग्निम् । नमस्यन्तः । उपायन्तीत्यु-

दोषः । अभक्षणे तु वरुणो नैनं गृह्णीयात् । अपशुत्वं तु दोषः । तस्माद्धुपस्पृश्यमेव न भक्षयेत् । 'ऋदुपधाच्च' इति भावे क्यप् । पशुमांश्च भवति वरुणश्चैनं न गृह्णाति ॥

[7]प्रतियुतो वरुणस्य पाश इति ॥ उदकान्तं प्रत्यस्य यन्ति अप्रतीक्षं प्रत्यावृत्येक्षणमकृत्वा आयन्ति आगच्छन्ति, तद्वरुणस्य तिरोधानाय भवति ॥

[8]एधोस्येधिषीमहीत्याहवनीये समिदाधानं समिधा सह प्रह्वीभूता

न्तं उपायन्ति तेजोऽसि तेजो मयि
धेहीत्याह तेजं एवात्मन्धत्ते ॥ १३ ॥
स्फ्येन वेदिमुद्धन्ति रथाक्षेण वि
मिमीते यूपं मिनोति त्रिवृतमेव व-
ज्रꣳ संभृत्य भ्रातृव्याय प्र हरति

प-आयन्ति । तेजः । असि । तेजः । मयि । धे-
हि । इति । आह । तेजः । एव । आत्मन् । धत्ते ॥ १३ ॥

रक्षाꣳसि प्रयाजानृतवो वै नेमस्य-
न्तो द्वादश च ॥ ३ ॥

[1]स्फ्येन । वेदिम् । उदिति । हन्ति । रथाक्षेणे-
ति रथ-अक्षेण । वीति । मिमीते । यूपम् । मि-
नोति । त्रिवृतमिति त्रि-वृतम् । एव । वज्रम् ।
संभृत्येति सं-भृत्य । भ्रातृव्याय । प्रेति । हरति ।

---

अग्निसमीपमागच्छन्ति । गतमन्यत् ॥

इति षष्ठे षष्ठे तृतीयोनुवाकः.

---

[1]स्फ्येनेत्यादि ॥ उक्तम् 'इन्द्रो वृत्राय वज्रं प्राहरत्स त्रेधा व्य-
भवत्स्फ्यस्तृतीयं रथस्तृतीयं यूपस्तृतीयम्'* इति । इदानीं यूपै-
कादशिनीमवतारयितुं वज्रवृत्तान्तशेषतया एतमनुवाकं व्याचक्षते ।

* सं. ६-१-३[11]

स्तृत्यै यदन्तर्वेदि मिनुयाद्देवलोक-
मभि जयेद्यद्बहिर्वेदि मनुष्यलोकं
वेद्यन्तस्य सन्धौ मिनोत्युभयोर्लो-
कयोरभिजित्या उपरसंमितां मिनु-

स्तृत्यै । यत् । अन्तर्वेदीत्यन्तः—वेदि । मिनुयात् । देवलोकमिति देव—लोकम् । अभीति । जयेत् । यत् । बहिर्वेदीति बहिः—वेदि । मनुष्यलोकमिति मनुष्य—लोकम् । वेद्यन्तस्येति वेदि—अन्तस्य । सन्धाविति सं—धौ । मिनोति । उभयोः । लोकयोः । अभिजित्या इत्यभि—जित्यै । [2]उपरसम्मि-

तत्र वज्रतृतीयांशानां स्फ्यादीनां मध्ये स्फ्येन वेदिमुद्धन्ति खनति। रथाक्षेण वेदिं विमिमीते विभज्य परिछिनत्ति । दशरथाक्षैकादशोपरज्जुचतुर्थांश*मितत्वात् वेद्याः । यूपं मिनोति उच्छ्रयति। एकयूपाभिप्रायेणैकवचनम् । त्रिवृतमिति । स्फ्यरथाक्षयूपलक्षणं वज्रं सम्भृत्य सम्यगुत्पाद्य भ्रातृव्याय प्रहरति प्रहिणोति स्तृत्यै मारणाय । यदन्तर्वेदि यूपैकादशिनीर्मिनुयात् उच्छ्रयेत् देवलोकमेवाभिजयेत् । यदि बहिर्वेदि । मिनुयादित्येव । मनुष्यलोकमेवाभिजयेत् । तस्माद्वेद्यन्तस्य सन्धौ वेदिश्च अन्तश्च तत्समीपभूमिश्च वेद्यन्तं, समाहारद्वन्द्वः, तस्य सन्धौ । यथा अर्धं वेद्यामर्धं बहिः तथा मिनोति, उभयोर्लोकयोरभिजयाय भवति ॥

[2]उपरसम्मितामिति ॥ मूलतोतष्टमुपरं, यथा सर्वेषां यूपाना-

*चतुर्विंशांश.

यात्पितृलोककामस्य रशनसंमितां मनुष्यलोककामस्य चषालसंमिता-मिन्द्रियकामस्य सर्वान्त्समान्प्रतिष्ठाकामस्य ये त्रयो मध्यमास्तान्त्समान्पशुकामस्यैतान् वै ॥ १४ ॥

तामित्युपर-सम्मिताम् । मिनुयात् । पितृलोककामस्येति पितृलोक-कामस्य । रशनसम्मितामिति रशन-सम्मिताम् । मनुष्यलोककामस्येति मनुष्यलोक-कामस्य । चषालसम्मितामिति चषाल-सम्मिताम् । इन्द्रियकामस्येतीन्द्रिय-कामस्य । सर्वान् । समान् । प्रतिष्ठाकामस्येति प्रतिष्ठा-कामस्य । ये । त्रयः । मध्यमाः । तान् । समान् । पशुकामस्येति पशु-कामस्य । एतान् ।

मुपरवाणि सम्मितानि सदृशानि आरोहपरिणाहाभ्यां भवन्ति सभूमिकानि वा* तथा मिनुयात् । चषालसम्मितामिति । अग्निष्ठतुल्यस्सर्वचषालम् । सर्वान् समानिति । सर्वानेकादशापि यूपान् समान् समानोपररशनाचषालान् प्रतिष्ठाकामस्य मिनुयात् । उपराद्यन्यतमेन वा समान्त्सर्वान्मिनुयात् । पशुकामस्य तु ये मध्यमास्त्रयो यूपाः तानेवोपरवादीन् समान्मिनुयात् । अन्येषाममियम इति । हेतुमाह—एतान्वा इति । एतांस्त्रीनुच्छ्रितान्

*भवन्ति भूमिकामिह.

अनु पशव उप तिष्ठन्ते पशुमानेव भवति व्यतिषजेदितरान्प्रजयैवैनं पशुभिर्व्यतिषजति यं कामयेत प्रमायुकस्स्यादिति गर्तमितं तस्य

वै ॥ १४ ॥ अन्विति । पशवः । उपेति । तिष्ठन्ते । पशुमानिति पशु—मान् । एव । भवति । व्यतिषजेदिति वि—अतिषजेत् । इतरान् । प्रजयेति प्र—जया । एव । एनम् । पशुभिरिति पशु—भिः । व्यतिषजतीति वि—अतिषजति । [8]यम् । कामयेत । प्रमायुक इति प्र—मायुकः । स्यात् । इति । गर्तमितमिति गर्त—मितम् । तस्य । मिनुयात् । उत्त-

---

अनु पशव उपतिष्ठन्ते यजमानम् । सङ्गतिकरण आत्मनेपदम् । हेतावनोः कर्मप्रवचनीयत्वम् । यद्वा—एताननु एभ्यः पश्चात् इत्यनुरूपान् पशव उपतिष्ठन्ते । व्यतिषजेदिति । मध्यमान् त्रीन्मुक्त्वा अन्यान्व्यतिषजेत् अन्योन्यं श्लेषयेत् प्रजया पशुभिश्च यजमानं व्यतिषजति ॥

[8]यमित्यादि ॥ प्रमायुको मरणशीलः गर्त श्मशानं दक्षिणं निम्नं तद्वन्मीयन्ते यूपा अस्यामिति गर्तमित् । तादृशीमेकादशिनीं मिनुयात् । इदानीं तत्स्वरूपमाह—उत्तरार्ध्ये उत्तरे भवम् । ‘ दिक्पूर्वपदाट्टञ्च ’ इति यत् । अग्निष्ठादुत्तरमर्धं, तत्र भवं वर्षि-

मिनुयादुत्तरार्ध्यं वर्षिष्ठमथ ह्रसी-
याꣳसमेषा वै गर्तमिद्यस्यैवं मिनो-
ति ताजक्प्र मीयते दक्षिणार्ध्यं व-
र्षिष्ठं मिनुयात्सुवर्गकामस्याथ ह्र-
सीयाꣳसमाक्रमणमेव तत्सेतुं यज-
मानः कुरुते सुवर्गस्य लोकस्य स-

रार्ध्यमित्युत्तर–अर्ध्यम् । वर्षिष्ठम् । अथ । ह्रसी-
याꣳसम् । एषा । वै । गर्तमिदिति गर्त–मित् ।
यस्य । एवम् । मिनोति । ताजक् । प्रेति । मीय-
ते । [4]दक्षिणार्ध्यमिति दक्षिण–अर्ध्यम् । वर्षिष्ठम् ।
मिनुयात् । सुवर्गकामस्येति सुवर्ग–कामस्य ।
अथ । ह्रसीयाꣳसम् । आक्रमणमित्या–क्रमणम् ।
एव । तत् । सेतुम् । यजमानः । कुरुते । सुवर्ग-
स्येति सुवः–गस्य । लोकस्य । समष्ट्या इति

---

ष्ठं वृद्धतरं अथ ह्रसीयांसं ततो न्यूनप्रमाणं दक्षिणार्धे अङ्गुष्ठपर्वमात्रया इत्याहुः । तथा छिनत्ति अवटं वा तथा खनति एषा गर्तमित् । एवं यस्य मीयते स ताजक् तदानीमेव प्रमीयते म्रियते गोळविन्यासे उत्तरोत्तरगर्तत्वात् उत्तरोत्तरमाधाराभावात् ॥

[4]दक्षिणार्ध्यमित्यादि ॥ गतम्* । आक्रमणमिति । आक्रम्यतेऽनेनेत्याक्रमणं सोपानमुच्यते, गोळे उत्तरोत्तरेषामुपरितनत्वात् । तेन

---

*सं ६-६-४,[3]

मेष्ट्यै ॥ १५ ॥ यदेकस्मिन् यूपे द्वे
रशने परिव्ययंति तस्मादेको द्वे
जाये विन्दते यन्नैकाꣳ रशनां द्वयो-
र्यूपयोः परिव्ययति तस्मान्नैका द्वौ
पती विन्दते यं कामयेत स्त्र्यस्य
जायेतेत्युपान्ते तस्य व्यतिषजेत्स्त्र्ये-

सं–अष्ट्यै ॥ १५ ॥ [5]यत् । एकस्मिन् । यूपे । द्वे इति । रशने इति । परिव्ययतीति परि–व्ययति । तस्मात् । एकः । द्वे इति । जाये इति । विन्दते । यत् । न । एकाम् । रशनाम् । द्वयोः । यूपयोः । परिव्ययतीति परि–व्ययति । तस्मात् । न । एका । द्वौ । पती इति । विन्दते । यम् । कामयेत । स्त्री । अस्य । जायेत । इति । उपान्त इत्युप–अन्ते । तस्य । व्यतिषजे दिति वि–अतिषजेत् । स्त्री । एव । अस्य ।

---

गोळं गमयित्वा सोपानत्वं प्रदर्शयितव्यम् । सेतुग्रहणं बद्ध-सोपानत्वाय । सयनात्सेतुः । स्वर्गस्य समष्ट्यै सम्यगाप्त्यै भवति ॥

[5]यदेकस्मिन्नित्यादि ॥ गतम् । उपान्त इति । अन्तस्य समीपे परस्परतो ग्रन्थिं कृत्वा व्यतिषजेत् अन्तर्निगूहेत् । आन्तामिति । यावदन्तं प्रवेष्टयेत् ग्रथितव्यम् ॥

वास्यं जायते यं कामयेत पुमा-
नस्य जायेतेत्यान्तं तस्य प्र वेष्टये-
त्पुमानेवास्यं ॥ १६ ॥ जायतेऽसु-
रा वै देवान्दक्षिणत उपानयन्तान्दे-
वा उपशयेनैवापानुदन्त तदुपशय-
स्योपशयत्वं यद्दक्षिणत उपशय

जायते । यम् । कामयेत । पुमान् । अस्य । जायेत । इति । आन्तमित्या—अन्तम् । तस्य । प्रेति । वेष्टयेत् । पुमान् । एव । अस्य ॥ १६ ॥ जायते । असुराः । वै । देवान् । दक्षिणतः । उपेति । अनयन् । तान् । देवाः । उपशयेनेत्युप—शयेन । एव । अपेति । अनुदन्त । तत् । उपशयस्येत्युप—शयस्य । उपशयत्वमित्युपशय—त्वम् । यत् । दक्षिणतः । उपशय इत्युप—शयः । उपशय इत्युप—शये।

---

[6]असुरा वा इत्यादि ॥ अग्निष्ठाद्दक्षिणत उपेत्य देवाननयन् असुरा अभिभूय आत्मवशमगमयन् । अथ तानसुरान् देवा उपशयेन यूपेन दक्षिणपूर्वावकाशेन अपानुदन्त । तस्मात्तस्योपशयत्वम् । उपेत्य शेतेऽत्र यत्रोपेत्य असुरान् बाधन्ते देवा इत्युपशयः । पचाद्यच् । तस्माद्येन कारणेन दक्षिणत उपशये उपशेते तद्भ्रातृव्यापनुत्त्यै भवति । 'लोपस्त आत्मनेपदेषु' इति तलोपः ॥

उपशये भ्रातृव्यापनुत्त्यै सर्वे वा अन्ये
यूपाः पशुमन्तोथोपशय एवापशु-
स्तस्य यजमानः पशुर्यन्न निर्दिशे-
दार्तिमार्छेद्यजमानोसौ ते पशुरिति
निर्दिशेद्यं द्विष्याद्यमेव ॥१७॥ द्वेष्टि

भ्रातृव्यापनुत्त्या इति भ्रातृव्य–अपनुत्त्यै । [7]सर्वे । वै । अन्ये । यूपाः । पशुमन्त इति पशु–मन्तः । अथ । उपशय इत्युप–शयः । एव । अपशुः । तस्य । यजमानः । पशुः । यत् । न । निर्दिशेदिति निः–दिशेत् । आर्तिम् । एति । ऋच्छेत् । यजमानः । असौ । ते । पशुः । इति । निरिति । दिशेत् । यम् । द्विष्यात् । यम् । एव ॥ १७ ॥

[7]सर्वे वा इत्यादि ॥ उपशयव्यतिरिक्ता एकादशापि यूपाः पशुमन्तः, उपशयस्त्वपशुः, न तत्र कश्चित्पशुर्नियुज्यते, एवं स्थिते अस्य यजमान एव पशुस्स्यात् यत् यदि न निर्दिशेत् पश्वन्तरं न कीर्तयेत् यजमानः, ततश्च उपाकृतपशुवदसौ म्रियेत । तस्मात् असौ ते पशुरिति निर्दिशेद्यजमानः, यं द्विष्यात् तमसा- वित्यत्र स्थाने शब्दयेत् केशवस्ते पशुर्दामोदरस्ते पशुरिति । एवं कुर्वन् तमेवास्य पशुं निर्दिशति यमेव द्वेष्टि । ततस्स एवास्य पशुर्भवति नात्मा । अथ यद्ययं यजमानो न

तमस्मै पशुं निर्दिशति यदि न द्वि-
ष्यादाखुस्ते पशुरिति ब्रूयान्न ग्राम्या-
न्पशून्हिनस्ति नारण्यान्प्रजापतिः
प्रजा असृजत सोन्नाद्येन व्यार्ध्यत
स एतामेकादशिनीमपश्यत्तया वै
सोन्नाद्यमवारुन्ध यद्दश यूपा भव-

न्ति । तम् । अस्मै । पशुम् । निरिति । दिशति ।
यदि । न । द्विष्यात् । आखुः । ते । पशुः । इति ।
ब्रूयात् । न । ग्राम्यान् । पशून् । हिनस्ति । न
आरण्यान् । [8]प्रजापतिरिति प्रजा-पतिः । प्रजा
इति प्र-जाः । असृजत । सः । अन्नाद्येनेत्यन्न-
अद्येन । वीति । आर्ध्यत । सः । एताम् । एकाद-
शिनीम् । अपश्यत् । तया । वै । सः । अन्नाद्य-
मित्यन्न-अद्यम् । अवेति । अरुन्ध । यत् । दश ।

---

कं चिद्विष्यात् तदा आखुस्ते पशुरिति ब्रूयात् । तथाकृते ग्राम्यारण्यपशुहिंसा नास्ति, अनुभयात्मकत्वात् आखोः । उक्ता ग्राम्या आरण्याश्च पशवः* ॥

[8]प्रजापतिरित्यादि ॥ पशुसृष्ट्यनन्तरं कुटुम्बभूयस्तया अन्नाद्येन व्यृद्धोभवत् प्रजापतिः । दशयूपात्मिकाया विराजः अस्याः

---

*सं. ६-३-७.

न्ति दशाक्षरा विराडन्नं विराड्विराजै-
वान्नाद्यमव रुन्धे ॥ १८ ॥ य एका-
दशस्स्तन एवास्यै स दुह एवैनां
तेन वज्रो वा एषा सं मीयते य-
दैकादशिनी सेश्वरा पुरस्तात्प्रत्यञ्चं

यूपाः । भवन्ति । दशाक्षरेति दश—अक्षरा । विराडिति वि—राट् । अन्नम् । विराडिति वि—राट् । विराजेति वि—राजा । एव । अन्नाद्यमित्यन्न—अद्यम् । अवेति । रुन्धे ॥ १८ ॥ यः । एकादशः । स्तनः । एव । अस्यै । सः । दुहे । एव । एनाम् । तेन । [9]वज्रः । वै । एषा । समिति । मीयते । यत् । एकादशिनी । सा । ईश्वरा । पुरस्तात् । प्रत्यञ्चम् ।

---

एकादशो यूपः स्तनः दोहनाय । तस्मात्तेनैवैनां विराजं दुहे दुग्धे । पूर्ववत्तलोपः ॥

[9]वज्रो वा इत्यादि ॥ वज्र एव साक्षात्संमीयते सह्रोच्छ्रीयते । एकादशिनी नाम एकादशयूपापरिमाणमस्यास्समाह्रियते । 'शञ्छतोर्डिनिः' इति डिनिः । सा एकादशिनी ईश्वरा समर्था पुरस्तात् स्थित्वा प्रत्यञ्चं प्रत्यक्पर्यन्तं यज्ञं सम्मर्दितोः संमर्दितुम् । 'ईश्वरे तोसुन्कसुनौ' इति तोसुन् । तस्मात्पात्नीवतस्य यूपस्योच्छ्रयणं यज्ञस्य प्रत्युत्तब्ध्यै भवति । पिपतिषोः पद्यादेः

यज्ञꣳ संमर्दितोर्यत्पात्नीवतं मिनो-
ति यज्ञस्य प्रत्युत्तब्ध्यै सयत्वाय ॥
प्रजापतिः प्रजा असृजत स रिरि-
चानोमन्यत स एतामेकादशिनीम-

यज्ञम् । सम्मर्दितोरिति सं—मर्दितोः । यत् । पात्नीवतमिति पात्नी—वतम् । मिनोति । यज्ञस्य । प्रतीति । उत्तब्ध्या इत्युत्—स्तब्ध्यै । सयत्वायेति सय—त्वाय ॥ ११ ॥

वै समष्ट्यै पुमानेवास्य यमेव रुन्धे
त्रिꣳशच्च ॥ ४ ॥

[1]प्रजापतिरिति प्रजा—पतिः । प्रजा इति प्र—जाः । असृजत । सः । रिरिचानः । अमन्यत । सः ।

---

पतनप्रतिबन्धाय दार्वादिना* प्रतिमुखधारणं प्रत्युत्तम्भनं, तत्पात्नीवतेन अग्रे शालामुखीर्ये स्थापितेन क्रियते इत्यर्थः । 'उदस्थास्तम्भोः' इति पूर्वसवर्णत्वम् । सयत्वाय च यज्ञस्य तद्भवति । सिनोति बध्नात्यात्मानं न शिथिलीभवतीति सयः, पचाद्यच्, दृढत्वायेत्यर्थः ॥

इति षष्ठे षष्ठे चतुर्थोनुवाकः.

---

[1]प्रजापतिरित्यादि ॥ प्रजासृष्ट्यनन्तरं रिरिचानः आयुरादिना रिक्तवानहमित्यमन्यत प्रजापतिः । स एतामित्यादि । गतम्† ।

---

*यष्ट्यादिनेति पाठान्तरम्. †सं. ६-६-४.

पश्यत्तया वै स आयुरिन्द्रियं वीर्य-
मात्मन्नधत्त प्रजा इव खलु वा एष
सृजते यो यजते स एतर्हि रिरि-
चान इव यदेषैकादशिनी भवत्यायु-
रेव तयेन्द्रियं वीर्यं यजमान आत्म-
न्धत्ते प्रैवाग्नेयेन वापयति मिथुनꣳ

एताम् । एकादशिनीम् । अपश्यत् । तया । वै । सः । आयुः । इन्द्रियम् । वीर्यम् । आत्मन् । अधत्त । प्रजा इति प्र—जाः । इव । खलु । वै । एषः । सृजते । यः । यजते । सः । एतर्हि । रिरिचानः । इव । यत् । एषा । एकादशिनी । भवति । आयुः । एव । तया । इन्द्रियम् । वीर्यम् । यजमानः । आत्मन् । धत्ते । [2]प्रेति । एव । आग्नेये-

---

आयुरादित्रयमात्मनि स्थापयामास । प्रजा इवेत्यादि । सृष्ट्यात्मना प्रजास्सृजति यो यजमानः तस्मात्सोस्मिन्काले रिरिचान इव भवतीत्याह—यदेषेत्यादि । 'इदमोर्हिल्,' 'एतेतौ रथोः' ॥

[2]आग्नेयेन प्रवापयति बीजमग्निष्ठे उपाकृतेन । सारस्वत्या मेष्या अग्निष्ठादुत्तरत उपाकृतया मिथुनं करोति स्त्रीपुंसयोग-

सारस्वत्या करोति रेतः ॥ २० ॥
सौम्येन दधाति प्र जनयति पौष्णे-
न बार्हस्पत्यो भवति ब्रह्म वै देवा-
नां बृहस्पतिर्ब्रह्मणैवास्मै प्रजाः प्र
जनयति वैश्वदेवो भवति वैश्वदेव्यो
वै प्रजाः प्रजा एवास्मै प्र जनयती-
न्द्रियमेवैन्द्रेणाव रुन्धे विशं मारुते-

न । वापयति । मिथुनम् । सारस्वत्या । करोति । रेतः ॥ २० ॥ सौम्येन । दधाति । प्रेति । जनयति । पौष्णेन । बार्हस्पत्यः । भवति । ब्रह्म । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । अस्मै । प्रजा इति प्र-जाः । प्रेति । जनयति । वैश्वदेव इति वैश्व-देवः । भवति । वैश्वदेव्य इति वैश्व-देव्यः । वै । प्रजा इति प्र-जाः । प्रजा इति प्र-जाः । एव । अस्मै । प्रेति । जनयति । इन्द्रियम् । एव । ऐन्द्रेण । अवेति । रुन्धे । विशम् । मारुतेन । ओजः ।

---

मुत्पादयति । सौम्येन अग्निष्ठाद्दक्षिणत उपाकृतेन रेतो दधाति स्त्रियाम् । एवं व्यत्यासात् दक्षिणापवर्गान् पशूनुपाकरोति वारुणमन्ततो दक्षिणत उदञ्चम् । पौष्णेन प्रजाः प्रजनयति । बार्हस्पत्येन साक्षाद्ब्रह्मण एव प्रजा उत्पादिता भवन्ति । वैश्व-

नौजो बलमैन्द्राग्नेनं प्रसवार्य सावि-
त्रो निर्वरुणत्वार्य वारुणो मध्यत
ऐन्द्रमा लभते मध्यत एवेन्द्रियं य-
जमाने दधाति ॥ २१ ॥ पुरस्तादै-
न्द्रस्यं वैश्वदेवमा लभते वैश्वदेवं वा

बलम् । ऐन्द्राग्नेनेत्यैन्द्र–अग्नेनं । प्रसवायेति प्र–स-
वार्य । सावित्रः । निर्वरुणत्वायेति निर्वरुण–त्वार्य ।
वारुणः । [3]मध्यतः । ऐन्द्रम् । एति । लभते । म-
ध्यतः । एव । इन्द्रियम् । यजमाने । दधाति ॥ २१ ॥
पुरस्तात् । ऐन्द्रस्यं । वैश्वदेवमिति वैश्व–देवम् ।
एति । लभते । वैश्वदेवमिति वैश्व–देवम् । वै ।

देवीनां प्रजानां प्रजननाय वैश्वदेवो भवति । ऐन्द्रेणेन्द्रियाव-
रोधः । मारुतेन विशं जनपदमवरुन्धे । ऐन्द्राग्नेन ओजो
बलमवरुन्धे । सावित्रः प्रसवाय ऐश्वर्याय अनुज्ञानाय वा ।
वारुणो निर्वरुणत्वाय वरुणपाशविमोचनाय ॥

[3]मध्यत इत्यादि ॥ प्राप्तस्य सप्तमस्य ऐन्द्रस्य षष्ठत्वस्य
षष्ठस्य च वैश्वदेवस्य ततः पूर्वस्य पञ्चमत्वस्य च विधानं
फलविशेषप्रदर्शनार्थं पक्षान्तरमिति केचित् । प्राप्तषष्ठस-
प्तमत्वाभावादनुवाद* इत्यन्ये । मध्यत एवेति । मध्यमे वयसि
अतिशयेनेन्द्रियं यजमाने दधाति । वैश्वदेवमन्नं विश्वेषां प्रा-

*प्राप्तषष्ठसप्तमत्वानुवाद इत्यपि पाठः

अन्नमन्नमेव पुरस्ताद्धत्ते तस्मात्पुर-
स्तादन्नमद्यत ऐन्द्रमालभ्य मारुत-
मा लभते विड्वै मरुतो विशमेवा-
स्मा अनु बध्नाति यदि कामयेत
योवगतस्सोप रुध्यतां योपरुद्धस्सो-
व गच्छत्वित्यैन्द्रस्य लोके वारु-

अन्नम् । अन्नम् । एव । पुरस्तात् । धत्ते । तस्मात् । पुरस्तात् । अन्नम् । अद्यते । ऐन्द्रम् । आलभ्येत्या—लभ्य । मारुतम् । एति । लभते । विट् । वै । मरुतः । विशम् । एव । अस्मै । अन्विति । बध्नाति । ¹यदि । कामयेत । यः । अवगत इत्यव—गतः । सः । अपेति । रुध्यताम् । यः । अपरुद्ध इत्यप—रुद्धः । सः । अवेति । गच्छतु । इति । ऐन्द्रस्य । लोके ।

---

णानां स्थितिहेतुत्वात् । पुरस्तादिति । इन्द्रियोत्पत्तेः प्रागेव तु भावात्? । पुरस्तात् पूर्वस्मिन्नपि वयसि अन्नमद्यते जन्मारभ्यान्नं भुज्यते । ऐन्द्रमित्यादि । विशं प्रजां यजमानायानुबध्नाति विधेयां करोति ॥

¹यदि कामयेतेत्यादि ॥ अवगतः स्वस्मिन्नैश्वर्येऽवस्थितः, सोपरुद्ध्यतां ऐश्वर्यान्निरस्तो भवतु, अपरुद्धो वा ऐश्वर्यं भजतामिति ।

णमा लभेत वारुणस्यं लोक ऐ-
न्द्रम् ॥ २२ ॥ य एवावगतस्सो-
पं रुध्यते योपरुद्धस्सोवं गच्छ-
ति यदि कामयेत प्रजा मुह्येयुरि-
ति पशून्व्यतिषजेत्प्रजा एव मोह-
यति यदभिवाहतोपां वारुणमा-

वारुणम् । एति । लभेत । वारुणस्यं । लोके । ऐन्द्रम् ॥ २२ ॥ यः । एव । अवगत इत्यव—गतः। सः। अपेति । रुध्यते। यः। अपरुद्ध इत्यप—रुद्धः। सः। अवेति । गच्छति । [5]यदि । कामयेत । प्रजा इति प्र—जाः । मुह्येयुः । इति । पशून् । व्यतिषजेदिति वि—अतिषजेत् । प्रजा इति प्र—जाः । एव । मोहयति । [6]यत् । अभिवाहत इत्यभि—वाहतः ।

---

ऐन्द्रस्येत्यादि । ऐन्द्रवारुणयोर्यौ लोकौ स्थाने सप्तममन्त्यं च, तयोर्विनिमयं कुर्यात् । य एवेत्यादि । गतम् ॥

[5]मुह्येयुरिति ॥ आकुलीभवेयुः प्रजा इति यदि कामयेत तदा सर्वान्पशून्व्यतिषजेत् विपर्यस्तस्थानान्कुर्यात् । प्रजा मोहयत्येव ॥

[6]यदभिवाहत इत्यादि ॥ यद्यपामभिवाहतः अभिवहनस्थानेन वारुणमालभेत उत्तरस्मिन्यूपे प्रजा वरुणो गृह्णीयात् उदकसंबन्धात् । ‘अति-

लभेत प्रजा वरुणो गृह्णीयाद्दक्षिण-
त उदंश्वमा लभतेऽपवाहतोपां प्र-
जानामवरुणग्राहाय ॥ २३ ॥

अपाम् । वारुणम् । आलभेतेत्या—लभेत । प्रजा इति प्र—जाः । वरुणः । गृह्णीयात् । दक्षिणतः । उदंश्वम् । एति । लभते । अपवाहत इत्यप—वाहतः । अपाम् । प्रजानामिति प्र—जानाम् । अवरुणग्राहायेत्यवरुण—ग्राहाय ॥ २३ ॥

रेतो यजमाने दधाति लोक ऐन्द्रꣳ
सप्तत्रिꣳशच्च ॥ ५ ॥

---

ग्रहाव्यथन' इत्यादिना हेतुतृतीयायास्तसिः, 'स्वरितो वाऽनुदात्ते पदादौ' इति संहितायामेकादेश ओकारस्स्वर्यते । दक्षिणत इत्यादि । तस्माद्दक्षिणतस्स्थित उदङ्मुखो भूत्वा अपामपवाहतः अपामपवाहनस्थाने उच्चे दक्षिणस्मिन्यूपे वारुणमालभेत । उदकविरहात् प्रजानां वरुणग्रहणाभावाय तद्भवति । पूर्ववत्तसिः ॥

इति षष्ठे षष्ठे पञ्चमोनुवाकः.

इन्द्रः पत्निया मनुमयाजयत्तां पर्यग्निकृतामुदसृजत्तया मनुराध्नोद्यत्पर्यग्निकृतं पात्नीवतमुत्सृजति यामेव मनुर् ऋद्धिमार्ध्नोत्तामेव यजमा-

[1]इन्द्रः । पत्निया । मनुम् । अयाजयत् । ताम् । पर्यग्निकृतामिति पर्यग्नि–कृताम् । उदिति । असृजत् । तया । मनुः । आर्ध्नोत् । यत् । पर्यग्निकृतमिति पर्यग्नि–कृतम् । पात्नीवतमिति पात्नी–वतम् । उत्सृजतीत्युत्–सृजति । याम् । एव । मनुः ।

---

[1]इन्द्रः पत्निया मनुमित्यादि ॥ अत्र शाखान्तरे पठ्यते—'पात्नीवते यूपे त्वाष्ट्रं साण्डं छागमुपाकरोति' इति । तदत्र पत्नीसंयाजोत्तरकालभाविपत्नीसम्बन्धनिमित्तकः पत्नीशब्दः पात्नीवते यूपे वर्तते यथा अग्रेण शालामुखीयं पात्नीवतं मिनोतीति तत्संबन्धात्तस्मिन्योजनीयः पशुरपि पत्नीत्युच्यते, मतुपो वाऽभेदोपचाराद्वाऽयमर्थः । पात्नीवतयूपोपाकरणीयेन त्वाष्ट्रेण पशुना इन्द्रो मनुमयाजयत् । अथ तां पत्नीं पात्नीवतसंबन्धिनं त्वाष्ट्रं पशुं पर्यग्निकरणानन्तरमुदसृजत् असमाप्तमेव कर्म तदन्तमुत्सृष्टवान् । मनुश्च तेन प्रयोगेण ऋद्धिं गतः । यदित्यादि । पात्नीवतमिति संप्रति मतुपा निर्दिशति यूपम् । 'छन्दसीरः' इति मतुपो वत्वम् । तत्संबन्धी पशुः पात्नीवतः । ऋद्धिमार्ध्नोदिति । सामान्यविशेषभावेन नेयम् ॥

न ऋध्नोति यज्ञस्य वा अप्रतिष्ठिता-
द्यज्ञः परा भवति यज्ञं पराभवन्तं
यजमानोनु परा भवति यदाज्येन
पात्नीवतꣳ सꣳस्थापयति यज्ञस्य
प्रतिष्ठित्यै यज्ञं प्रतितिष्ठन्तं यजमा-

ऋद्धिम् । आध्नोत् । ताम् । एव । यजमानः । ऋध्नोति । [2]यज्ञस्य । वै । अप्रतिष्ठितादित्यप्रति-स्थितात् । यज्ञः । परेति । भवति । यज्ञम् । परा-भवन्तमिति परा—भवन्तम् । यजमानः । अनु । परेति । भवति । यत् । आज्येन । पात्नीवतमिति पात्नी—वतम् । सꣳस्थापयतीति सं—स्थापयति । यज्ञस्य । प्रतिष्ठित्या इति प्रति—स्थित्यै । यज्ञम् । प्रतितिष्ठन्तमिति प्रति—तिष्ठन्तम् । यजमानः ।

---

[2]यज्ञस्य वा इत्यादि ॥ अप्रतिष्ठितात् । अप्रतिष्ठितं भावे निष्ठा, असमाप्तिः । अप्रतिष्ठिताद्यज्ञस्य यज्ञावयवस्यासमाप्तत्वेन हेतुना यज्ञोवयवी पराभवति विनश्यति । यद्वा—यज्ञस्य वा अप्रतिष्ठितावयवात् यज्ञः पराभवति । यज्ञं च पराभवन्तं विनश्यन्तं अनु हेतुं कृत्वा यजमानः पराभवति । हेतावनोः कर्मप्रवचनीयत्वम् । समाधत्ते—यदाज्येनेत्यादि । पशुमुत्सृज्य आज्येन शेषं कर्मणस्संस्थापयेत् । यावन्ति पशोरवदानानि स्युः तावत्कृत्व आज्यस्यावद्येदिति केचित् । कर्मोत्सर्गादाज्येन कर्मान्तरं कुर्यादित्यन्ये ॥

नोनु प्रतिं तिष्ठतीष्टं वपयां ॥ २४ ॥
भवत्यनिष्टं वशयाऽथं पात्नीवतेन प्र
चरति तीर्थ एव प्र चरत्यथो एत-
र्हीवास्य यामंस्त्वाष्ट्रो भंवति त्वष्टा
वै रेतंसस्सिक्तस्यं रूपाणि वि करो-
ति तमेव वृषाणं पत्नीष्वपिं सृजति

अनुं । प्रतीतिं । तिष्ठति । [3]इष्टम् । वपयां ॥ २४ ॥
भवंति । अनिंष्टम् । वशयां । अथं । पात्नीवतेनेतिं
पात्नी—वतेनं । प्रेतिं । चरति । तीर्थे । एव । प्रेतिं ।
चरति । अथो इतिं । एतर्हि । एव । अस्य । यामंः ।
त्वाष्ट्रः । भवति । त्वष्टां । वै । रेतंसः । सिक्तस्यं ।
रूपाणिं । वीतिं । करोति । तम् । एव । वृषाणम् ।
पत्नीषु । अपीतिं । सृजति । सः । अस्मै । रूपा-

[3]इष्टं वपयेत्यादि ॥ यदाऽनूबन्ध्या वपा हुता भवति वशाया
ऽनूबन्ध्या हविषा अनिष्टं भवति अथ तस्मिन् काले पात्नीवतेन
प्रचरति करोति । एवं कुर्वन् तीर्थे स्थान एव प्रचरति । अथो
अपिच एतर्हि एतस्मिन्नेव काले अस्य कर्मणस्संबन्धिनां पुरोडाश-
हविषां यामः उपरमः अतोऽप्यन्यस्मिन्काले युक्तोस्य प्रचारः ।
त्वाष्ट्र इत्यादि । गतम्* । वृषाणं वर्षितारं पत्नीष्वपिसृजति अनु-

*सं १-५-६.

सोऽस्मै रूपाणि वि करोति ॥ २५ ॥

घ्नन्ति वा एतथ्सोमं यदभिषुण्वन्ति यथ्सौम्यो भवति यथा मृतायानुस्तरणीं घ्नन्ति तादृगेव तद्यदुत्तरार्धे वा मध्ये वा जुहुयाद्देवताभ्यस्समदं

णि । वीति । करोति ॥ २५ ॥

वपया षट्त्रिंशच्च ॥ ६ ॥

[1]घ्नन्ति । वै । एतत् । सोमम् । यत् । अभिषुण्वन्तीत्यभि–सुन्वन्ति । यत् । सौम्यः । भवति । यथा । मृताय । अनुस्तरणीमित्यनु–स्तरणीम् । घ्नन्ति । तादृक् । एव । तत् । यत् । उत्तरार्ध इत्युत्तर–अर्धे । वा । मध्ये । वा । जुहुयात् । देवता-

---

प्रवेशयति । स चास्मै यजमानाय रूपाणि विकरोति विविधान्युत्पादयति । ऋद्धिमान् भवति ॥

इति षष्ठे षष्ठे षष्ठः.

---

[1]घ्नन्ति वा इत्यादि ॥ सोमस्य वधस्थानीयोभिषवः, तत्र सौम्यश्चरुः । मृतायानुस्तरणी वधस्थानीया, यथा मृताय पितृमेधे अनुस्तरणीं गां घ्नन्ति तत्तुल्यं तत्, अनु [मरणानन्तरं

दध्याद्दक्षिणार्धे जुहोत्येषा वै पितॄणां
दिक्स्वायामेव दिशि पितॄन्निरवदयत
उद्गातृभ्यो हरन्ति सामदेवत्यो वै
सौम्यो यदेव साम्नश्छम्बट्कुर्वन्ति त-
स्यैव स शान्तिरवं ॥ २६ ॥ ईक्ष-

भ्यः । समदमिति स—मदम् । दध्यात् । दक्षिणा-र्ध इति दक्षिण—अर्धे । जुहोति । एषा । वै । पि-तॄणाम् । दिक् । स्वायाम् । एव । दिशि । पितॄन् । निरवदयत इति निः—अवदयते । [2]उद्गातृभ्य इ-त्युद्गातृ—भ्यः । हरन्ति । सामदेवत्य इति साम—देवत्यः । वै । सौम्यः । यत् । एव । साम्नः । छ-म्बट्कुर्वन्तीति छम्बट्—कुर्वन्ति । तस्य । एव । सः ।

---

स्तीर्यते अनयेति अनुस्तरणी, कर्मणि ल्युट् । यदुत्तरार्धे इत्यादि । सौम्यस्यायं देशः समत्कुत्वहो(?) निष्कृष्य पृथक् स्वस्यां दिशि यजते ॥

[2]उद्गातृभ्य इत्यादि ॥ हरणं दानम् । साम देवता अस्य सौ-म्यस्य चरोः । तस्मात्साम्नो यच्छम्बट्कुर्वन्ति अन्तरयन्ति नाश-यन्ति तस्य दोषस्य स सौम्यश्चरुः शान्तिश्शमनहेतुः । अवेक्षन्ते

न्ते पवित्रं वै सौम्य आत्मानमेव
पवयन्ते य आत्मानं न परिपश्ये-
दितासुस्स्यादभिददिं कृत्वाऽवेक्षेत
तस्मिन्ह्यात्मानं परिपश्यत्यथो
आत्मानमेव पवयते यो गतमना-
स्स्यात्सोवेक्षेत यन्मे मनः परागतं

शान्तिः । अवेति ॥ २६ ॥ ईक्षन्ते । पवित्रम् । वै । सौम्यः । आत्मानम् । एव । पवयन्ते । यः । आत्मानम् । न । परिपश्येदिति परि–पश्येत् । इतासुरितीत–असुः । स्यात् । अभिददिमित्यभि–ददिम् । कृत्वा । अवेति । ईक्षेत । तस्मिन् । हि । आत्मानम् । परिपश्यतीति परि–पश्यति । अथो इति । आत्मानम् । एव । पवयते । यः । गतमना इति गत–मनाः । स्यात् । सः । अवेति । ई-

---

इति । सामर्थ्याच्चरावाज्यमानीयेति गम्यते । य आत्मानं न परिपश्येदिति वक्ष्यमाणत्वात् । तदवेक्षणेनात्मानं पवयन्ते शोधयन्ति । वृद्ध्यभावश्छान्दसः । अथ यद्यात्मानं न परिपश्येत् न सर्वत ईक्षेत इतासुस्स्यात् आज्यस्याल्पतया तत्रात्मादर्शने इतासुत्वं स्यात्, तस्माद्भिददिं कृत्वाऽवेक्षेत नाल्प आज्ये अभित्वो* ददाति ॥

---

*अभिनो इत्यपि पाठः

यद्वा मे अपरागतम् । राज्ञा सोमेन तद्वयमस्मासु धारयामसीति मने एवात्मन्दाधार ॥ २७ ॥ न गतमना भवत्यप वै तृतीयसवने यज्ञः क्रामतीजानादनीजानमभ्या-

क्षेत । [3]यत् । मे । मनः । परागतमिति परा—गतम् । यत् । वा । मे । अपरागतमित्यपरा—गतम् । राज्ञा । सोमेन । तत् । वयम् । अस्मासु । धारयामसि । इति । मनः । एव । आत्मन् । दाधार । ॥ २७ ॥ न । गतमना इति गत—मनाः । भवति । [4]अपेति । वै । तृतीयसवन इति तृतीय—सवने । यज्ञः । क्रामति । ईजानात् । अनीजानम् । अ-

[3]यन्मे मन इत्यादिरवेक्षणमन्त्रोनुष्टुप् ॥ यन्मे मनः परागतं मत्तो निष्क्रान्तं, यद्वा—यच्च मे मनः अपरागतं परागमनोन्मुखं राज्ञा राजनशीलेन सोमेन ओषधीनामीशेन तन्मनः अस्मास्वेव धारयामसि धारयामः । 'इदन्तो मसिः' । एवं कुर्वन् आत्मनि मनो धारयति, ततः प्रभृति न गतमना भवति ॥

[4]अप वा इत्यादि ॥ इष्टवानीजानः । 'लिटः कानज्वा' । ईजानाद्यज्ञोऽपक्रामति अनीजानं लक्षीकृत्य । तत्राग्नावैष्णव्यर्चा घृतस्य यजति । उभयतस्सौम्यं परियजति । अन्यतरतो वा ।

ग्नावैष्णव्यर्चा घृतस्यं यजत्यग्नि-
स्सर्वा देवता विष्णुर्यज्ञो देवताश्चैव
यज्ञं चं दाधारोपांशु यंजति मि-
थुनत्वाय ब्रह्मवादिनों वदन्ति मि-
त्रो यज्ञस्य स्विंष्टं युवते वरुणो दु-

भीति । आग्नावैष्णव्येत्यांग्ना-वैष्णव्या । ऋचा । घृतस्यं । यजति । अग्निः । सर्वाः । देवताः । विष्णुः । यज्ञः । देवताः । च । एव । यज्ञम् । च । दाधार । उपांश्वित्युंप-अंशु । यजति । मिथुनत्वायेतिं मिथुन-त्वायं । [5] ब्रह्मवादिन इतिं ब्रह्म-वादिनः । वदन्ति । मित्रः । यज्ञस्यं । स्विष्टमिति

---

केचित्तु—घृतस्याभियजतीति गच्छति तत्राभिगत इत्यत्रार्थेऽभिशब्दः। तन्मते ईजानाद्यज्ञोपगम्य अनीजानं क्रामति प्राप्नोतीति क्लिष्टान्वयः। अग्निस्सर्वा इत्यादि । गतम्* । देवतानां सर्वयज्ञस्य च सह धारणात् अनीजानं न गच्छति यज्ञः । मिथुनत्वायेति । उपांशुतया यागः सौम्येन चरुणा सह मिथुनं भवतीति ॥

[5] ब्रह्मवादिन इत्यादि ॥ यज्ञस्य यत्स्विष्टं शोभनमिष्टं तद्युवते मिश्रयति दुरिष्टेन मित्रः दुरिष्टसंभवे तेन संसृष्टमेव स्विष्टं स्थापयति अनाराधितो मित्रः । वरुणश्च दुरिष्टं स्विष्टसंस्पृष्टमेव स्थापयति तस्य बाधकत्वेन । क्व तर्हि तदानीं तथा सति कस्मिन् फले

---

* सं. २-२-९[4]

रिष्टं क्व तर्हि यज्ञः क्व यजमानो
भवतीति यन्मैत्रावरुणीं वशामा-
लभते मित्रेणैव ॥ २८ ॥ यज्ञस्य
स्विष्टꣳ शमयति वरुणेन दुरिष्टं
नार्तिमार्छति यजमानो यथा वै
लाङ्गलेनोर्वरां प्रभिन्दन्त्येवमृक्सा-

सु-इष्टम् । युवते । वरुणः । दुरिष्टमिति दुः-इष्टम् । क्व । तर्हि । यज्ञः । क्व । यजमानः । भवति । इति । [6]यत् । मैत्रावरुणीमिति मैत्रा-वरुणीम् । वशाम् । आलभत इत्या-लभते । मित्रेण । एव ॥ ॥ २८ ॥ यज्ञस्य । स्विष्टमिति सु-इष्टम् । शमयति । वरुणेन । दुरिष्टमिति दुः-इष्टम् । न । आर्तिम् । एति । ऋच्छति । यजमानः । यथा । वै । लाङ्गलेन । उर्वराम् । प्रभिन्दन्तीति प्र-भिन्दन्ति । एवम् । ऋक्सामे इत्यृक्-सामे । यज्ञम् ।

---

दातृत्वेन यज्ञो वर्तते, अनिर्वृत्तप्रायत्वात्, यजमानश्च तदानीं क्व भवति यज्ञेन रहितः कस्मिन् फले भोक्तृत्वेन वर्तते इति ब्रह्मवादिनः प्रश्नं वदन्ति ॥

[6]यदित्यादि ॥ मैत्रावरुण्या वशाया विधिः । शमयतीति । दुरिष्टासंसर्गः स्विष्टस्य शान्तिः, स्विष्टाविरोधित्वं दुरिष्टस्य शान्तिः ।

मे यज्ञं प्र भिन्तो यन्मैत्रावरुणीं व-
शामालभते यज्ञायैव प्रभिन्नाय
मत्यमन्ववास्यति शान्त्यै यातया-
मानि वा एतस्य छन्दाꣳसि य ई-
जानश्छन्दसामेष रसो यद्वशा य-

प्रेति । भिन्तः । यत् । मैत्रावरुणीमिति मैत्रा-व-
रुणीम् । वशाम् । आलभत इत्या-लभते । यज्ञा-
य । एव । प्रभिन्नायेति प्र-भिन्नाय । मत्यम् ।
अन्ववास्यतीत्यनु-अवास्यति । शान्त्यै । यातया-
मानीति यात-यामानि । वै । एतस्य । छन्दाꣳसि ।
यः । ईजानः । छन्दसाम् । एषः । रसः । यत् ।

---

ततश्चोभयसमीकरणात् यज्ञं चाविकलं निर्वर्त्य यजमानो नार्तिं गच्छति फलहानिं न भजते । किंचेत्याह—यथेत्यादि । यथा उर्वरां सर्वसस्योत्पत्त्याधारभूतां भूमिं लाङ्गलेन प्रभिन्दन्ति प्रकर्षेण कृषन्ति, एवं ऋक्सामे यज्ञं प्रभिन्तः प्रकृष्टक्षेत्रफलप्रदानशक्तं कुरुतः । तत्र मैत्रावरुणी वशा यज्ञक्षेत्रस्य मत्यस्थानीया, शक्त्यानयनार्थं द्रव्यं मत्यम् । मत्यमन्ववास्यति कर्षणानन्तरं प्रक्षिपति । तच्छान्त्यै कर्षणहिंसाशमनाय भवति । किंचेत्याह—यातयामानीत्यादि । यातयामानि गतरसानि ईजानस्य छन्दांसि, बहुश उपयुक्तत्वात् । वशानामैषा छन्दसां रसः, ततस्तया छन्दांसि

न्मैत्रावरुणीं वशामालभंते छन्दाꣳसि-
स्येव पुनरा प्रीणात्ययातयामत्वा-
याथो छन्दस्स्वेव रसं दधाति ॥२१

देवा वा इन्द्रियं वीर्यं[१०] व्यंभज-
न्त ततो यदत्यशिंष्यत तदतिग्राह्या

वशा । यत् । मैत्रावरुणीमितिं मैत्रा—वरुणीम् । वशाम्।आलभंत इत्यां—लभंते । छन्दाꣳसि।एव । पुनः । एतिं । प्रीणाति । अयातयामत्वायेत्ययात-याम—त्वाय । अथो इतिं । छन्दस्स्विति छन्दः—सु । एव । रसंम् । दधाति ॥ २१ ॥

अवं दाधार मित्रेणैव प्रींणाति षट्च ॥ ७ ॥

[1]देवाः । वै । इन्द्रियम् । वीर्यंम् । वीतिं । अ-भजन्त । ततः । यत् । अत्यशिंष्यतेत्यंति—अशिं-

---

पुनराप्रीणाति आभिमुख्येन तर्पयति । तत् छन्दसामयातयामत्वाय भवति । अथो अपि च छन्दस्सु गतरसेषु पुनः रसं दधाति स्थापयति, छन्दसां रसत्वाद्वशायाः ॥

इति षष्ठे षष्ठे सप्तमोनुवाकः.

---

[1]देवा वा इन्द्रियमित्यादि ॥ इन्द्रियं च वीर्यं चात्मीयं व्यभजन्त देवाः । ततो विभक्तात् यदत्यशिष्यत अतिशिष्टमभूत्

अभवन्तदतिग्राह्याणामतिग्राह्यत्वं य-
दतिग्राह्या गृह्यन्त इन्द्रियमेव तद्वीर्यं
यजमान आत्मन्धत्ते तेज आग्नेयेने-
न्द्रियमैन्द्रेण ब्रह्मवर्चसꣳ सौर्येणोप-
स्तम्भनं वा एतद्यज्ञस्य यदतिग्रा-

ष्यत । तत् । अतिग्राह्या इत्यति-ग्राह्याः । अभ-वन् । तत् । अतिग्राह्याणामित्यति-ग्राह्याणाम् । अतिग्राह्यत्वमित्यतिग्राह्य-त्वम् । यत् । अतिग्रा-ह्या इत्यति-ग्राह्याः । गृह्यन्ते । इन्द्रियम् । एव । तत् । वीर्यम् । यजमानः । आत्मन् । धत्ते । तेजः । आग्नेयेन । इन्द्रियम् । ऐन्द्रेण । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । सौर्येण । [2]उपस्तम्भनमित्युप-स्त-

---

विभक्तुमशक्यं तदतिग्राह्या ग्रहा अभवन् । तस्मात्तेषामतिग्राह्यत्वम् । अतिशिष्टेन ग्रहणादतिग्राह्याः । तस्मादतिग्राह्याणां ग्रहणेन इन्द्रियं वीर्यं च यजमान आत्मनि धत्ते । तत्क्रममाह—तेज इत्यादि । गतम् ॥

[2]उपस्तम्भनमित्यादि ॥ उत्तम्भनकाष्ठमुपस्तम्भनम् । तत्स्थानीया अतिग्राह्याः । चक्रे चक्रस्थानीयानि पृष्ठानि सामानि यज्ञस्य रथस्य । तस्माद्यदि पृष्ठ्ये षडहे अतिग्राह्यान्न गृह्णीयात् तानि पृष्ठानि प्राञ्चं संशृणीयुः प्राग्भागवर्तिनं यज्ञं कुर्युः,* उत्त-

---

*हिंस्युः इत्यपि पाठः.

ह्यांश्चक्रे पृष्ठानि यत्पृष्ठ्ये न गृह्णीया-
त्प्राञ्चं यज्ञं पृष्ठानि सꣳशृणीयुर्यदु-
क्थ्यें ॥ ३० ॥ गृह्णीयात्प्रत्यञ्चं यज्ञ-
मतिग्राह्यास्सꣳ शृणीयुर्विश्वजिति
सर्वपृष्ठे ग्रहीतव्यां यज्ञस्य सवीर्य-
त्वार्यं प्रजापतिर्देवेभ्यो यज्ञान्व्या-

म्भनम् । वै । एतत् । यज्ञस्य । यत् । अतिग्राह्या इत्यति–ग्राह्याः । चक्रे इति । पृष्ठानि । यत् । पृष्ठ्ये । न । गृह्णीयात् । प्राञ्चम् । यज्ञम् । पृष्ठानि । स-मिति । शृणीयुः । यत् । उक्थ्ये ॥ ३० ॥ गृह्णी-यात् । प्रत्यञ्चम् । यज्ञम् । अतिग्राह्या इत्यति–ग्रा-ह्याः । समिति । शृणीयुः । विश्वजितीति विश्व–जिति । सर्वपृष्ठ इति सर्व–पृष्ठे । ग्रहीतव्याः । यज्ञस्य । सवीर्यत्वायेति सवीर्य–त्वाय । [3]प्रजाप-

म्भनाभावात । संशरणं हिंसा । त्व हिंसायाम्, क्रैयादिकः, प्वा-दित्वाद्ध्रस्वत्वम् । अथ यदुक्थ्ये यज्ञे अतिग्राह्यान गह्णीयात, तानि पृष्ठानि अतिग्राह्या यज्ञं तं प्रत्यञ्चं संशृणीयुः प्रत्यङ् पातयित्वा हिंस्युः अस्थानोत्तम्भनानीव पटलमापातयेयुः* । विश्वजितीत्यादि । गतम् ॥

[3]प्रजापतिर्देवेभ्य इत्यादि ॥ आदेशानं पृथक्पृथक् दानम् ।

*अथानूत्तंभनादिव पटलं पातयेयुः.

दिशथ्स प्रियास्तनूरप न्यंधत्त तद-
तिग्राह्या अभवन्वितंनुस्तस्यं यज्ञ
इत्याहुर्यस्यातिग्राह्या न गृह्यन्त इ-
त्यप्यंग्निष्टोमे ग्रंहीतव्या यज्ञस्यं
सतनुत्वायं देवता वै सर्वास्सदृशी-

तिरिति प्रजा–पतिः । देवेभ्यः । यज्ञान् । व्यादि-
शदिति वि–आदिशत् । सः । प्रियाः । तनूः । अप ।
नीति । अधत्त । तत् । अतिग्राह्या इत्यति–ग्राह्याः ।
अभवन् । वितनुरिति वि–तनुः । तस्य । यज्ञः ।
इति । आहुः । यस्य । अतिग्राह्या इत्यति–ग्रा-
ह्याः । न । गृह्यन्ते । इति । अपीति । अग्निष्टोम
इत्यंग्नि–स्तोमे । ग्रहीतव्याः । यज्ञस्य । सतनु-
त्वायेति सतनु–त्वायं । [4] देवताः । वै । सर्वाः ।

---

यज्ञस्य प्रियास्तनूश्शरीराणि अपन्यधत्त अपनीय निभृतं स्थापि-
तवान् । तदतिग्राह्यत्वेन संपन्नम् । तस्मादतिग्राह्याग्रहणे वितनुर्य-
ज्ञस्स्यादित्याहुर्ब्रह्मवादिनः । तस्मादग्निष्टोमेऽप्यतिग्राह्या ग्रहीतव्या
यज्ञस्य सतनुत्वलाभाय ॥

[4] देवता वा इत्यादि ॥ व्यावृत्तिः व्यावृत् । सर्वास्सदृश्यः

रासन्ता न व्यावृतमगच्छन्ते देवाः॥
॥३१॥ एत एतान्ग्रहानपश्यन्तान-
गृह्णताग्नेयमग्निरैन्द्रमिन्द्रस्सौर्यꣳ सू-
र्यस्ततो वै तेऽन्याभिर्देवताभिर्व्यावृ-
तमगच्छन् यस्यैवं विदुष एते ग्रहा
गृह्यन्ते व्यावृतमेव पाप्मना भ्रातृ-
व्येण गच्छतीमे लोका ज्योतिष्म-

सदृशीः । आसन् । ताः । न । व्यावृतमिति वि-आवृतम् । अगच्छन् । ते । देवाः ॥ ३१ ॥ एते । एतान् । ग्रहान् । अपश्यन् । तान् । अगृह्णत । आग्नेयम् । अग्निः । ऐन्द्रम् । इन्द्रः । सौर्यम् । सूर्यः । ततः । वै । ते । अन्याभिः । देवताभिः । व्यावृतमिति वि-आवृतम् । अगच्छन् । यस्य । एवम् । विदुषः । एते । ग्रहाः । गृह्यन्ते । व्यावृतमिति वि-आवृतम् । एव । पाप्मना । भ्रातृव्येण । गच्छति । [5]इमे ।

---

तुल्यैश्वर्या आसन् देवताः । तत्रैते अग्न्यादयः अतिग्राह्यानाग्नेयादीन् गृहीत्वा अन्याभिर्देवताभिर्व्यावृत्तिं गताः । यस्यैवं विदुष इत्यादि । गतम् ॥

[5]इमे लोका इत्यादि ॥ इमे पृथिव्यादयो लोकाः ज्यो-

न्तस्समावंद्वीर्याः कार्या इत्याहुराग्ने-
येनास्मिन्ल्लोके ज्योतिर्धत्त ऐन्द्रेणा-
न्तरिक्ष इन्द्रवायू हि सयुजौ सौर्ये-
णामुष्मिन्ल्लोके ॥ ३२ ॥ ज्योतिर्ध-
त्ते ज्योतिष्मन्तोस्मा इमे लोका
भवन्ति समावद्वीर्यानेनान्कुरुत ए-

लोकाः । ज्योतिष्मन्तः । समावद्वीर्या इति समा-वत्-वीर्याः । कार्याः । इति । आहुः । आग्नेयेन । अस्मिन्न् । लोके । ज्योतिः । धत्ते । ऐन्द्रेण । अन्तरिक्षे । इन्द्रवायू इतीन्द्र-वायू । हि । सयुजाविति स-युजौ । सौर्येण । अमुष्मिन्न् । लोके ॥ ॥ ३२ ॥ ज्योतिः । धत्ते । ज्योतिष्मन्तः । अस्मै । इमे । लोकाः । भवन्ति । समावद्वीर्यानिति समा-वत्-वीर्यान् । एनान् । कुरुते । [6]एतान् । वै । ग्रहान् ।

---

तिष्मन्तः प्रकाशवन्तः समावद्वीर्यास्तुल्यवीर्याश्च कार्या इत्याहुर्ब्रह्मवादिनः । समादावतुप् स्वार्थिकः । तत्कथमित्याह—आग्नेयेनेत्यादि । ननु वायोरन्तरिक्षं नेन्द्रस्य, कथमैन्द्रेणान्तरिक्षे ज्योतिस्स्यात् इत्याह— इन्द्रवायू हि सयुजौ सहचारिणौ, ऐन्द्रवायववादिषु दर्शनात् । तस्माद्वायुस्थानस्याप्यन्तरिक्षस्य ऐन्द्रेण ज्योतिष्मत्त्वमिति । गतमन्यत् ॥

[6]एतान् वा इत्यादि ॥ बम्बश्च विश्ववयाश्च । 'देवताद्वन्द्वे च'

तान् वै ग्रहान्बम्बाविश्ववयसावविन्तां ताभ्यामिमे लोकाः पराञ्चश्चार्वाञ्चश्च प्राभुर्यस्यैवं विदुष एते ग्रहा गृह्यन्ते प्रास्मा इमे लोकाः पराञ्चश्चार्वाञ्चश्च भान्ति ॥ ३३ ॥

बम्बाविश्ववयसाविति बम्बा—विश्ववयसौ । अविन्ताम् । ताभ्याम् । इमे । लोकाः । पराञ्चः । च । अर्वाञ्चः । च । प्रेति । अभुः । यस्य । एवम् । विदुषः । एते । ग्रहाः । गृह्यन्ते । प्रेति । अस्मै । इमे । लोकाः । पराञ्चः । च । अर्वाञ्चः । च । भान्ति ॥ ३३ ॥

उक्थ्ये देवा अमुष्मिन्लोक एकान्न चत्वारिꣳशच्च ॥ ८ ॥

---

इत्यानञ्, पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं च । अविन्तां अजानीताम्, अलभेतां वा । विदेर्व्यत्ययेन विकरणस्य लुक् । ताभ्यामित्यादि । पराञ्चश्चार्वाञ्चश्च उपर्यधश्चेमे लोकाः प्राभुः प्रकाशन्ते स्म* । यस्यैवमित्यादि । गतम् ॥

इति षष्ठे षष्ठे अष्टमोनुवाकः.

---

* प्रकाशवन्तो बभूवुः.

देवा वै यद्यज्ञेऽकुर्वत तदसुरा अ-
कुर्वत ते देवा अदाभ्ये छन्दाꣳसि
सवनानि समस्थापयन्ततो देवा
अभवन्पराऽसुरा यस्यैवं विदुषोदा-
भ्यो गृह्यते भवत्यात्मना पराऽस्य

[1]देवाः । वै । यत् । यज्ञे । अकुर्वत । तत् । अ-
सुराः । अकुर्वत । ते । देवाः । अदाभ्ये । छन्दाꣳ-
सि । सवनानि । समिति । अस्थापयन् । ततः ।
देवाः । अभवन् । परेति । असुराः । यस्य । ए-
वम् । विदुषः । अदाभ्यः । गृह्यते । भवति । आ-
त्मना । परेति । अस्य । भ्रातृव्यः । भवति ।

---

[1]देवा वै यदित्यादि ॥ अदाभ्ये ग्रहे छन्दांसि सवनानि च समस्थापयन् समापयन्देवाः । यस्मात् 'वसवस्त्वा प्र वृहन्तु गायत्रेण छन्दसा'* इत्येवमादिभिः राज्ञस्त्रीनंशून्प्रवृहति तेनादाभ्य एव सर्वाणि संस्थापितवन्तो देवाः । ततस्तेन प्रयोगेण देवा अभवन् भूतिमन्तस्संपन्नाः । असुरास्तु तदज्ञानात्पराभूता विनष्टाः । यस्यैवमित्यादि । गतम् ॥

---

*सं ३-३-३.,

भ्रातृ॑व्यो भवति॒ यद्वै दे॒वा असु॑रा-
नदा॑भ्ये॒नाद॑भ्नु॒व॒न्तददा॑भ्यस्यादाभ्य॒-
त्वं य ए॒वं वेद॑ द॒भ्नोत्ये॒व भ्रातृ॑व्यं॒ नैन॒॑
भ्रातृ॑व्यो द॒भ्नोति ॥३४॥ ए॒षा वै प्र॒-
जाप॑ते॒रति॒मो॒क्षि॒णी नाम॑ त॒नूर्यददा॑-

[2]यत् । वै । दे॒वाः । असु॑रान् । अदा॑भ्येन । अद॑-
भ्नुवन् । तत् । अदा॑भ्यस्य । अ॒दा॒भ्य॒त्वमित्य॑दा-
भ्य–त्वम् । यः । ए॒वम् । वेद॑ । द॒भ्नोति॑ । ए॒व ।
भ्रातृ॑व्यम् । न । ए॒न॒म् । भ्रातृ॑व्यः । द॒भ्नोति॒ ॥
३४ ॥ [3]ए॒षा । वै । प्र॒जाप॑ते॒रिति॑ प्र॒जा–प॒तेः ।
अ॒ति॒मो॒क्षि॒णीत्य॑ति–मो॒क्षि॒णी । नाम॑ । त॒नूः ।

---

[2]यद्वा इत्यादि ॥ अदाभ्येन केनापि हिंसितुमशक्येन अने-नासुरानदभ्नुवन् देवाः हिंसितवन्तः । तस्माददम्भनीयत्वाददाभ्यः । यद्वा—दम्भनीयानेनेन देवा अदभ्नुवन्नित्यदाभ्यः, दभिः प्रकृत्यन्त-रमस्तीत्याहुः, ततो "दभेश्चेति वक्तव्यं" इति केचिदाहुः । अव-धारणे नकारः, दभ्नुवन्त्येवानेनेत्यदाभ्य इति । य एवं वेदेत्यादि । गतम् ॥

[3]एषा वा इत्यादि ॥ अत्यन्तं मोक्षः अतिमोक्षः पाप्मनाम् । अतीत्य पापानि संसारबन्धनादीनि वा पुंसां मोक्षोतिमोक्षः, तद्वती तत्समर्था । प्रजापतेर्यज्ञात्मनस्तत्र शरीरमदाभ्यो नाम । तस्मादुपनद्धस्य बद्धस्य राज्ञः प्राग्बन्धनमोचनात् गृह्णात्यदाभ्यं,

भ्य उपनद्धस्य गृह्णात्यतिमुक्त्या अति
पाप्मानं भ्रातृव्यं मुच्यते य एवं वेद
घ्नन्ति वा एतथ्सोमं यदभिषुण्वान्ति
सोमे हन्यमाने यज्ञो हन्यते यज्ञे
यजमानो ब्रह्मवादिनो वदन्ति किं
तद्यज्ञे यजमानः कुरुते येन जीवं-

यत् । अदाभ्यः । उपनद्धस्येत्युप—नद्धस्य । गृ-
ह्णाति । अतिमुक्त्या इत्यति—मुक्त्यै । अतीति ।
पाप्मानम् । भ्रातृव्यम् । मुच्यते । यः । एवम् ।
वेद । घ्नन्ति । वै । एतत् । सोमम् । यत् । अभि-
षुण्वन्तीत्यभि—सुन्वन्ति । सोमे । हन्यमाने ।
यज्ञः । हन्यते । यज्ञे । यजमानः । [4]ब्रह्मवादिन
इति ब्रह्म—वादिनः । वदन्ति । किम् । तत् । य-

---

तद्वतिमुक्त्यै भवति पाप्मनः । एवं वेदिता च पाप्मानं भ्रातृव्य-मतीत्य मुक्तो भवति किं पुनः कर्ता । घ्नन्ति वा इत्यादि । गतम्* ॥

[4]ब्रह्मवादिन इत्यादि ॥ जीवन्नेव सशरीर एव यजमानः स्वर्ग यथा गच्छेदिति जीवग्रहोयं गृह्यते । जीवन् ग्रहो जीव-ग्रहः । तत्पुनः कथमित्याह—अनभिषुतस्येत्यादि । गतम् ॥

---

*सं. ६-६-७[1]

न्त्सुवर्गं लोकमेतीति जीवग्रहो वा
एष यददाभ्योनभिषुतस्य गृह्णाति
जीवन्तमेवैनꣳ सुवर्गं लोकं गमय-
ति वि वा एतद्यज्ञं छिन्दन्ति यद-
दाभ्ये सꣳस्थापयन्त्यꣳशूनपि सृ-
जति यज्ञस्य सन्तत्यै ॥ ३५ ॥

ज्ञे । यजमानः । कुरुते । येन । जीवन् । सुवर्ग-मिति सुवः—गम् । लोकम् । एति । इति । जीव-ग्रह इति जीव—ग्रहः । वै । एषः । यत् । अदा-भ्यः । अनभिषुतस्येत्यनभि—सुतस्य । गृह्णाति । जीवन्तम् । एव । एनम् । सुवर्गमिति सुवः—गम् । लोकम् । गमयति । [5]वीति । वै । एतत् । यज्ञम् । छिन्दन्ति । यत् । अदाभ्ये । सꣳस्थाप-यन्तीति सं—स्थापयन्ति । अꣳशून् । अपीति । सृजति । यज्ञस्य । सन्तत्या इति सं—तत्यै ॥३५॥

दभ्नोत्यनभिषुतस्य गृह्णात्येकान्न विꣳशतिश्च ॥९॥

[5]वि वा इत्यादि ॥ यज्ञस्यायं विच्छेदः अदाभ्ये समापनं नाम । ततश्च यज्ञविच्छेदे यजमानोपि हन्यते इति स एव दोष इत्यत आह—अंशूनित्यादि । अदाभ्यांशून्प्रज्ञातान्निधाय प्रति-सवनं महाभिषवेष्वपिसृजति । तद्यज्ञस्य सन्तत्यै अविच्छेदाय भवति ॥

इति षष्ठे षष्ठे नवमोनुवाकः.

देवा वै प्रबाहुग्ग्रहानगृह्णत स एतं
प्रजापतिरꣳशुमपश्यत्तमगृह्णीत तेन
वै स आर्ध्नोद्यस्यैवं विदुषोꣳशुर्गृह्य-
ते ऋध्नोत्येव सकृदभिषुतस्य गृह्णा-
ति सकृद्धि स तेनार्ध्नोन्मनसा गृह्णा-

[1]देवाः । वै । प्रबाहुगिति प्र-बाहुक् । ग्रहान् । अगृह्णत । सः । एतम् । प्रजापतिरिति प्रजा-पतिः । अꣳशुम् । अपश्यत् । तम् । अगृह्णीत । तेन । वै । सः । आर्ध्नोत् । यस्य । एवम् । विदुषः । अꣳशुः । गृह्यते । ऋध्नोति । एव । [2]सकृदभिषुतस्येति सकृत्-अभिषुतस्य । गृह्णाति । सकृत् । हि । सः । तेन । आर्ध्नोत् । मनसा । गृह्णाति ।

---

[1]देवा वै प्रबाहुगिति ॥ प्रबाहुक् तुल्यस्वभावान् । प्रजापतिस्तु एतं वक्ष्यमाणमंशुग्रहं दृष्ट्वा तद्ग्रहणेन सर्वेभ्य ऋद्धोभवत् । यस्यैवमित्यादि ॥ गतम् ॥

[2]सकृदभिषुतस्येत्यादि ॥ अव्ययपूर्वपदप्रकृतिस्वरत्वम् । सकृद्धीति । एकप्रयोगेणैव स प्रजापतिस्तेन अंशुना ऋद्धोभवत् । 'हि च' इति निघाताभावे आट उदात्तत्वम् । मन इवेति । अव्यक्तात्मकत्वात्, सर्वगतत्वाद्वा । औदुम्बरेणेति । उदुम्बरविकारेण पात्रेण गृह्णाति । 'अनुदात्तादेश्च' इत्यत्र् । ऊर्वा इति ।

ति मनं इव हि प्रजापतिः प्रजापते-
तेराप्त्या औदुम्बरेण गृह्णात्यूर्ग्वा उदु-
म्बर ऊर्जमेवावं रुन्धे चतुःस्त्रक्ति
भवति दिक्षु ॥ ३६ ॥ एव प्रति
तिष्ठति यो वा अंशोरायतनं वेदा-
यतनवान्भवति वामदेव्यमिति साम
तद्वा अंस्यायतनं मनसा गायमानो

मनः । इव । हि । प्रजापतिरिति प्रजा-पतिः । प्रजापतेरिति प्रजा-पतेः । आप्त्यै । औदुम्बरेण । गृह्णाति । ऊर्क् । वै । उदुम्बरः । ऊर्जम् । एव । अवेति । रुन्धे । चतुःस्त्रक्तीति चतुः-स्त्रक्ति । भवति । दिक्षु ॥ ३६ ॥ एव । प्रतीति । तिष्ठति । यः । वै । अंशोः । आयतनमित्या-यतनम् । वेद । आयतनवानित्यायतन-वान् । भवति । वामदेव्यमिति वाम-देव्यम् । इति । साम ।

---

तद्धेतुत्वात्ताच्छब्द्यम् । चतुस्त्रक्ति चतुष्कोणम् । यो वा अंशोरित्यादि । आयतनवान् ग्रहवान् । वामदेव्यं सामास्यायतनं स्थानं वामदेव्यस्य ऋचं 'कया नश्चित्र आ भुवत्'* इति मनसा

---

*सं. ४-२-११.

गृह्णात्यायतनवानेव भवति यदध्व-
र्युरꣳशुं गृह्णन्नार्धयेदुभाभ्यां नर्ध्ये-
ताध्वर्यवे च यजमानाय च यदर्ध-
येदुभाभ्यामृध्येतानवानं गृह्णाति सै-

तत् । वै । अस्य । आयतनमित्या—यतनम् । मनसा । गायमानः । गृह्णाति । आयतनवानित्याय-तन—वान् । एव । भवति । [3]यत् । अध्वर्युः । अꣳशुम् । गृह्णन् । न । अर्धयेत् । उभाभ्याम् । न । ऋध्येत । अध्वर्यवे । च । यजमानाय । च । यत् । अर्धयेत् । उभाभ्याम् । ऋध्येत । [4]अनवा-नमित्यनवा—अनम् । गृह्णाति । सा । एव । अ-

---

गायन् गृह्णाति । वामदेवेन दृष्टं साम वामदेव्यम् । 'वाम-देवाड्ड्यौ' ॥

[3]यदध्वर्युरित्यादि ॥ यत् अध्वर्युरंशुं गृह्णन्नार्धयेत् ऋद्धिमन्त-मंशुं न कुर्यात् सोंशुरुभाभ्यां नर्ध्येत ऋद्धिहेतुर्न स्यात् नाध्व-र्यव एव प्रहीत्रे । तर्हि कस्मा अन्यस्मा इत्याह—यजमानाय चेति । एवमुभाभ्यां नर्ध्येत । अथ यद्यर्धयेत् अंशुमध्वर्युः तदाऽप्युभाभ्यामृध्येत अध्वर्यवे च यजमानाय च । तस्मात् यथा ऋद्धिहेतुर्भवति तथा यतितव्यम् ॥

[4]तत्कथमित्याह—अनवानमिति ॥ अनुच्छ्वासम् । सैवास्यांशोः

वास्यर्धिर् हिरण्यमभि व्यनित्यमृतं
वै हिरण्यमायुः प्राण आयुषैवामृ-
तमभि धिनोति शतमानं भवति
शतायुः पुरुषश्शतेन्द्रिय आयुष्येवे-
न्द्रिये प्रति तिष्ठति ॥ ३७ ॥

स्य । ऋद्धिः । हिरण्यम् । अभि । वीति । अनि-
ति । अमृतम् । वै । हिरण्यम् । आयुः । प्राण
इति प्र-अनः । आयुषा । एव । अमृतम् । अ-
भीति । धिनोति । शतमानमिति शत-मानम् ।
भवति । शतायुरिति शत-आयुः । पुरुषः । शते-
न्द्रिय इति शत-इन्द्रियः । आयुषि । एव । इन्द्रि-
ये । प्रतीति । तिष्ठति ॥ ३७ ॥

दिक्ष्वनिति विंशतिश्च ॥ १० ॥

---

ऋद्धिः । सेति ग्रहणमुच्यते । ऋद्ध्यपेक्षं स्त्रीत्वम् । हिरण्यमित्यादि । उपरिव्यननमभिव्यननम् । प्राण्यापान्य व्यनिति अमृतहेतुं हिरण्यं आयुरात्मना प्राणेन आभिमुख्येन प्रीणयति । शतमानमित्यादि । गतम्* ॥

इति षष्ठे षष्ठे दशमोनुवाकः.

---

*सं. ३-२-४

प्रजापतिर्देवेभ्यो यज्ञान्व्यादिशथ्स
रिरिचानोऽमन्यत स यज्ञानाꣳ षोड-
शधेन्द्रियं वीर्यमात्मानमभि सम-
क्खिदत्तथ्षोडश्यभवन्न वै षोडशी
नाम यज्ञोऽस्ति यद्वाव षोडशꣳ स्तो-

[1]प्रजापतिरिति प्रजा-पतिः । देवेभ्यः । य-
ज्ञान् । व्यादिशादिति वि-आदिशत् । सः । रिरि-
चानः । अमन्यत । सः । यज्ञानाम् । षोडशधेति
षोडश-धा । इन्द्रियम् । वीर्यम् । आत्मानम् ।
अभि । समिति । आक्खिदत् । तत् । षोडशी ।
अभवत् । न । वै । षोडशी । नाम । यज्ञः । अ-
स्ति । [2]यत् । वाव । षोडशम् । स्तोत्रम् । षोडशम् ।

---

[1]प्रजापतिर्देवेभ्य इत्यादि ॥ रिरिचानः रिक्तोहमित्यमन्यत प्रजापतिः । अथ तथा मन्यमानस्सः यज्ञानामिन्द्रियं च वीर्यं च षोडशधा षोडशप्रकारभिन्नं समक्खिदत् समुदपादयत् । क्खिद दैन्ये, व्यञ्जनद्वयादिः । किमर्थम् ?—आत्मानमभिलक्ष्य, आत्मार्थमिति यावत् । लक्षणे अभेः कर्मप्रवचनीयत्वम् । तत्तथा षोडशधा कृतमिन्द्रियादिकं षोडशीनाम क्रतुरभवत्, न खल्वन्यः षोडशी नाम संज्ञिभूतः क्रतुरस्ति मुक्त्वेमं षोडशधा कृतं यज्ञम् ॥

[2]इदानीं कस्य षोडशधा करणेन षोडशी यज्ञस्समभवदि-

त्रꣳ षोडशꣳ शस्त्रं तेन षोडशी त-
थ्षोडशिनꣳ षोडशित्वं यत्षोडशी गृ-
ह्यत इन्द्रियमेव तद्वीर्यं यजमान
आत्मन्धत्ते देवेभ्यो वै सुवर्गो लो-
कः ॥ ३८ ॥ न प्राभवत्त एतꣳ
षोडशिनमपश्यन्तमगृह्णत ततो वै
तेभ्यस्सुवर्गो लोकः प्राभवद्यत्षोड-

शस्त्रम्। तेन। षोडशी। तत्। षोडशिनः। षोडशि-त्वमिति षोडशि–त्वम्। यत्। षोडशी। गृह्यते। इन्द्रियम्। एव। तत्। वीर्यम्। यजमानः। आत्मन्। धत्ते। [3]देवेभ्यः। वै। सुवर्ग इति सु-वः–गः। लोकः ॥ ३८ ॥ न। प्रेति। अभवत्। ते। एतम्। षोडशिनम्। अपश्यन्न्। तम्। अ-गृह्णत। ततः। वै। तेभ्यः। सुवर्ग इति सुवः–

त्याह—यद्वा वेत्यादि ॥ गतम्। षोडशानां पूरणं षोडशं, तेन तद्वान् षोडशी, सामर्थ्यात् षोडशस्तोत्रशस्त्रयोगात् षोडशित्वमस्येत्युक्तं भवति। नान्येन षोडशेन तद्वानिति। तदेतद्यज्ञस्य षोडशित्वम्। यदित्यादि। गतम् ॥

[3] देवेभ्य इत्यादि ॥ न प्राभवत् न पर्याप्त आसीत्। गतमन्यत् ॥

शी गृह्यते सुवर्गस्य लोकस्याभि-
जित्या इन्द्रो वै देवानामानुजावर
आसीथ्स प्रजापतिमुपाधावत्तस्मा
एतꣳ षोडशिनं प्रायच्छत्तमगृह्णीत
ततो वै सोग्रं देवतानां पर्यैद्यस्यैवं
विदुषष्षोडशी गृह्यते ॥ ३१ ॥ अ-

गः । लोकः । प्रेति । अभवत् । यत् । षोडशी । गृह्यते । सुवर्गस्येति सुवः-गस्य । लोकस्य । अभिजित्या इत्यभि-जित्यै । [4]इन्द्रः । वै । देवानाम् । आनुजावर इत्यानु-जावरः । आसीत् । सः । प्रजापतिमिति प्रजा-पतिम् । उपेति । अधावत् । तस्मै । एतम् । षोडशिनम् । प्रेति । अयच्छत् । तम् । अगृह्णीत । ततः । वै । सः । अग्रम् । देवतानाम् । परीति । ऐत् । यस्य । एवम् । विदुषः । षोडशी । गृह्यते ॥ ३१ ॥ अग्रम् । ए-

---

[4]इन्द्रो वा इत्यादि ॥ अनुजावरः कनिष्ठैश्वर्योपजीवी, स एवानुजावरः । स्वार्थिकोण् । गतमन्यत्* । अग्रं प्राधान्यं देवतानां पर्यैत् अगच्छत् ॥

---

* सं. २-३-४[4]

ग्रमेव समानानां पर्यैति प्रातस्सव-
ने गृह्णाति वज्रो वै षोडशी वज्रः
प्रातस्सवनꣳ स्वादेवैनं योनेर्निर्गृह्णा-
ति सवनेसवनेऽभि गृह्णाति सव-
नात्सवनादेवैनं प्र जनयति तृतीय-
सवने पशुकामस्य गृह्णीयाद्वज्रो वै
षोडशी पशवस्तृतीयसवनं वज्रेणै-

व । समानानाम् । परीति । एति । [5]प्रातस्सवन इति प्रातः–सवने । गृह्णाति । वज्रः । वै । षोडशी । वज्रः । प्रातस्सवनमिति प्रातः–सवनम् । स्वात् । एव । एनम् । योनेः । निरिति । गृह्णाति । सवनेसवन इति सवने–सवने । अभीति । गृह्णाति । सवनात्सवनादिति सवनात्–सवनात् । एव । एनम् । प्रेति । जनयति । तृतीयसवन इति तृतीय–सवने । पशुकामस्येति पशु–कामस्य । गृह्णीयात् । वज्रः । वै । षोडशी । पशवः । तृती-

---

[5]प्रातस्सवनेत्यादयो पक्षयज्ञभेदाः । वज्रो वा इत्यादि । वज्रवदनिष्टनिवारणहेतुत्वात् । स्वादेव योनेः कारणात् निर्गृह्णाति निष्कृष्यैनं गृह्णाति । सवनेसवने इत्यादि । गतम् । तृतीयसवने

वास्मै तृतीयसवनात्पशूनव रुन्धे
नोक्थ्ये गृह्णीयात्प्रजा वै पशव उ-
क्थानि यदुक्थ्यं ॥ ४० ॥ गृह्णीया-
त्प्रजां पशूनस्य निर्दहेदतिरात्रे पशु-
कामस्य गृह्णीयाद्वज्रो वै षोडशी व-
ज्रेणैवास्मै पशूनवरुध्य रात्रियोप-

यसवनमिति तृतीय-सवनम् । वज्रेण । एव । अस्मै । तृतीयसवनादिति तृतीय-सवनात् । पशून् । अवेति । रुन्धे । [6]न । उक्थ्ये । गृह्णीयात् । प्रजेति प्र-जा । वै । पशवः । उक्थानि । यत् । उक्थ्ये ॥ ४० ॥ गृह्णीयात् । प्रजामिति प्र-जाम् । पशून् । अस्य । निरिति । दहेत् । अति-रात्र इत्यति-रात्रे । पशुकामस्येति पशु-कामस्य । गृह्णीयात् । वज्रः । वै । षोडशी । वज्रेण । एव । अस्मै । पशून् । अवरुध्येत्यव-रुध्य । रात्रिया ।

---

इति । एवकारसंयोगः खादिष्विवेति* केचित् । अनियम इत्यन्ये ॥

[6]नोक्थ्य इति ॥ निषेधविधिः । गतः । अतिरात्रे पशुकामस्येति । ........ वेद्येति गम्यते । वज्रेण पशूनवरुद्ध्य रात्रिया रात्रि-

---

*खादिरादिष्विवेति.

रिष्टाच्छमयत्यप्यग्निष्टोमे राजन्य-
स्य गृह्णीयाद्व्यावृत्कामो हि राजन्यो
यजते साह्न एवास्मै वज्रं गृह्णाति
स एनं वज्रो भूत्या इन्धे निर्वा
दहत्येकविꣳशꣳ स्तोत्रं भवति प्रति-

उपरिष्टात् । शमयति । [7]अपीति । अग्निष्टोम इत्यग्नि–स्तोमे । राजन्यस्य । गृह्णीयात् । व्यावृत्काम इति व्यावृत्–कामः । हि । राजन्यः । यजते । साह्न इति स–अह्ने । एव । अस्मै । वज्रम् । गृह्णाति । सः । एनम् । वज्रः । भूत्यै । इन्धे । निरिति । वा । दहति । एकविꣳशमित्येक–विꣳशम् । स्तोत्रम् । भवति । प्रतिष्ठित्या इति प्रति–स्थित्यै । ह-

पर्यायैः उपरिष्टादूर्ध्वकालं शमयति पशून्, वज्राभिपीडितानां शान्तिं सुखं करोति ॥

[7]अप्यग्निष्टोम इति ॥ अग्निष्टोमे राजन्यस्य क्षत्रियस्य गृह्णीयात् । हेतुमाह—व्यावृत्काम इति । प्राधान्यकामो हि राजन्यो यजते । ततस्स एकाहे एकस्मिन्नेव दिने अस्मै एतदर्थं वज्रं गृह्णाति । योग्निष्टोम एकाहे गृह्णाति स च ग्रहणं वज्र एव भूत्वा भूत्यर्थं व्यावृत्यर्थं च इन्धे दीपयति निर्दहति नितरां

ष्ठित्यै हरिवच्छस्यत इन्द्रस्य प्रियं
धाम॥४१॥उपाप्नोति कनीयाꣳसि
वै देवेषु छन्दाꣳस्यासञ्ज्यायाꣳ-
स्यसुरेषु ते देवाः कनीयसा छन्द-
सा ज्यायश्छन्दोभि व्यशꣳसन्ततो
वै तेऽसुराणां लोकमवृञ्जत यत्क-

रिवदिति हरि–वत् । शस्यते । इन्द्रस्य । प्रियम् ।
धाम ॥ ४१ ॥ उपेति । आप्नोति । [8]कनीयाꣳसि ।
वै । देवेषु । छन्दाꣳसि । आसन् । ज्यायाꣳसि ।
असुरेषु । ते । देवाः । कनीयसा । छन्दसा । ज्या-
यः । छन्दः । अभि । वीति । अशꣳसन् । ततः ।
वै । ते । असुराणाम् । लोकम् । अवृञ्जत । यत् ।

---

दहति वा । एकविंशं एकविंशतिस्तोत्रीयं स्तोत्रं एव भवति, तत्प्रतिष्ठित्यै, अनिर्दाहाय च भवति । हरिशब्दवत् शस्त्रं शस्यते तस्य । तथा सति इन्द्रस्य प्रियं धामोपाप्नोति उपागच्छति ॥

[8]कनीयांसि वा इत्यादि ॥ अल्पतराक्षराणि गायत्र्यादीनि, ज्यायांसि प्रवृद्धाक्षराणि पाङ्क्तादीनि । अथ ते देवाः कनीयसा छन्दसा

नीयसा छन्दसा ज्यायश्छन्दोभि
विशꣳसंति भ्रातृव्यस्यैव तल्लोकं
वृङ्क्ते षडक्षराण्यति रेचयन्ति षड्वा
ऋतव ऋतूनेव प्रीणाति चत्वारि
पूर्वाण्यवं कल्पयन्ति ॥ ४२ ॥ च-

कनीयसा । छन्दसा । ज्यायः । छन्दः । अभीति । विशꣳसतीति वि-शꣳसंति । भ्रातृव्यस्य । एव । तत् । लोकम् । वृङ्क्ते । [9]षट् । अक्षराणि । अतीति । रेचयन्ति । षट् । वै । ऋतवः । ऋतून् । एव । प्रीणाति । चत्वारि । पूर्वाणि । अवेति । कल्पयन्ति ॥ ४२ ॥ चतुष्पद इति चतुः-पदः । एव ।

---

ज्यायश्छन्दोभिव्यशंसन् अभिक्रम्य विहृत्याशंसन् । गायत्रीं पङ्क्त्या, उष्णिहं बृहत्या, विराजं त्रिष्टुभा । ततस्ते देवाः असुराणां लोकमवृञ्जत । यदित्यादि । गतम् । विहृतषोडशिनमधिकृत्येदमुच्यते ॥

[9]षडक्षराणीत्यादि ॥ कनीयसा ज्यायश्छन्दसि अनुष्टुभाकारे शंसन्तश्शंसितारः षडक्षराणि अस्मिन् शस्त्रे अतिरेचयन्ति तेन ऋतवः प्रीता भवन्ति । अथ षण्णामक्षराणामवयुत्य वादः—चत्वारीत्यादि । पूर्वाणि पूर्वस्यामृचि भवानि, उत्तरे उत्तरस्या-

तुष्पद एव पशूनव रुन्धे द्वे उत्तरे
द्विपदे एवाव रुन्धेऽनुष्टुभमभि सं
पादयन्ति वाग्वा अनुष्टुप्तस्मात्प्राणा-
नां वागुत्तमा समयाविषिते सूर्ये
षोडशिनस्स्तोत्रमुपाकरोत्येतस्मिन्वै

पशून् । अवेति । रुन्धे । द्वे इति । उत्तरे इत्युत्-तरे । द्विपदे इति द्वि-पदे । एव । अवेति । रुन्धे । अनुष्टुभमित्यनु-स्तुभम् । अभि । समिति । पादयन्ति । वाक् । वै । अनुष्टुबित्यनु-स्तुप् । तस्मात् । प्राणानामिति प्र-अनानाम् । वाक् । उत्तमेत्युत्-तमा । समयाविषित इति समया-विषिते । सूर्ये । षोडशिनः । स्तोत्रम् । उपाकरोतीत्युप-आकरोति । एतस्मिन् । वै । लोके । इन्द्रः । वृत्रम् । अहन् ।

---

सृचि भवे द्वे अक्षरे अतिरिक्ते भवतः । अनुष्टुभमिति । अनुष्टुप्संपत्तिमभिलक्ष्य आनुष्टुभेनैव छन्दसा शस्त्रं संपादयन्ति । तथा पङ्क्त्या सह गायत्री पङ्क्त्या सह चतुष्षष्टिरक्षराणि द्वे अनुष्टुभौ । तथा उष्णिक् बृहत्या सह । तथैव विराट् द्विपदा त्रिष्टुभा सह ।

लोक इन्द्रो वृत्रमहन्त्साक्षादेव व-
ज्रं भ्रातृव्याय प्र हरत्यरुणपिशङ्गो-
ऽश्वो दक्षिणैतद्वै वज्रस्य रूपꣳ समृ-

साक्षादिति स—अक्षात् । एव । वज्रम् । भ्रातृव्याय । प्रेति । हरति । अरुणपिशङ्ग इत्यरुण—पिशङ्गः । अश्वः । दक्षिणा । एतत् । वै । वज्रस्य । रूपम् । समृद्ध्या इति सं—ऋद्ध्यै ॥ ४३ ॥

लोको विदुर्षष्षोडशी गृह्यते यदुक्थ्ये धाम कल्पयन्ति सप्तचत्वारिꣳशच्च ॥ ११ ॥

सुवर्गाय यद्दाक्षिणानि समिष्टयजूꣳष्यवभृथयजूꣳषि स्फ्येन प्रजापतिरेकादशिनीमिन्द्रः पत्निया घ्नन्ति देवा वा इन्द्रियं देवा वा अदाभ्ये देवा वै

---

समयाविषिते अर्धास्तमिते सूर्ये षोडशिनो ग्रहस्य स्तोत्रमुपाकरोति । समयेत्यर्धनाम, विषितः विपूर्वात्स्यतेः निष्ठातः । एतस्मिन् लोके स्थाने अवकाशे पूर्वमिन्द्रो वृत्रं हतवान्, तस्मात्कालविशेषलाभात् वृद्ध्यै भवति यागः । किं च साक्षादव्यवधानेन वज्रं भ्रातृव्याय प्रहरति । अरुणपिशङ्गः अरुणमिश्रः पिशङ्गः, 'वर्णो

द्ध्यै ॥ ४३ ॥

प्रवाहुक्प्रजापतिर्देवेभ्यस्स रिरिचानष्षोडशधैकादश ॥ ११ ॥

सुवर्गाय यजति प्रजास्सौम्येन गृह्णीयात्प्रत्यश्चं गृह्णीयात्प्रजां पशूत्रिचत्वारिंशत् ॥ ४३ ॥

सुवर्गाय वज्रस्य रूपं समृद्ध्यै ॥

हरिः ओं तत्सत् ॥

ब्रह्मार्पणमस्तु.

षष्ठः काण्डस्समाप्तः.

---

वर्णेष्वतेन' इति व्यत्ययेन न प्रवर्तते । एतद्वज्रस्य रूपम् अश्वो दक्षिणा, समृद्ध्यै ॥

इति श्रीभट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये षष्ठकाण्डे षष्ठप्रश्ने एकादशोनुवाकः.

प्रपाठकः काण्डश्च समाप्तः.

ओम्.

## सप्तमकाण्डे

---

### प्रथमः प्रपाठकः.

हरिः ओम् ॥

**प्रजननं ज्योतिरग्निर्देवतानां ज्योतिर्विराट्छन्दसां ज्योतिर्विराड्वाचोऽग्नौ**

[1]प्रजननमिति प्र-जननम् । ज्योतिः । अग्निः । देवतानाम् । ज्योतिः । विराडिति वि-राट् । छन्दसाम् । ज्योतिः । विराडिति वि-

---

[1]षष्ठेन काण्डेन दीक्षाद्युदयनीयान्तोऽग्निष्टोमस्सगुणः प्रतिपादितः । स इदानीमिह विधीयते । पूर्वत्र हि कर्तव्यतामात्रमस्य विहितम् । अस्यैव गुणविकारास्सर्वसंस्था उत्तरा अत्यग्निष्टोमाद्यप्तोर्यामान्ताः* । एतत्प्रकृतिकास्सर्वे विश्वजिदाद्य एकाहाः, द्विरात्रप्रभृतयश्चाहीनाः, द्वादशाहादीनि च सत्त्राणि । तत्र पूर्वप्रकरणशेषभूतं तद्गतमेव किञ्चिदारभ्यते । तत्र त्रिवृदादिस्तोमभेदनिबन्धनत्वात्तेषामहामहीनानां च विभागस्य । तेषां स्वरूपमुत्पत्तिं चाभिधास्यन् तन्निमित्तं चास्य ज्योतिरिति संज्ञां निवेक्ष्यन् प्रथममनयैव संज्ञया इदमुपादाय विशिष्टफलसाधनत्वमस्य दर्शयति—प्रजननं ज्योति-

---

*आ—अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, अप्तोर्याम इति.

सं तिष्ठते विराजमभि सं पद्यते

राट् । वाचः । अग्नौ । समिति । तिष्ठते । विराजमिति वि-राजम् । अभि । समिति । पद्यते ।

---

रिति ॥ एषां च सर्वविकारार्थतां द्योतयितुं काण्डभेदः । अस्य च सर्वप्रकृतितां सूचयितुं काण्डभेदेन पृथक्कारः कृतः । तत्राद्यमनुवाकत्रयं सौम्यम्, शिष्टमपि सर्वं काण्डं वैश्वदेवम् । प्रजननं सर्वासां प्रजानां जन्महेतुः, वक्ष्यति च—'अग्निष्टोमेन वै प्रजापतिः प्रजा असृजत'* इति । ज्योतिरग्निष्टोमः । ज्योतिष्ट्वं चास्येदानीं प्रतिपादयति—अग्निरिति । देवानां मध्ये अग्निर्ज्योतिः द्योतमानो भवति, छन्दसां मध्ये विराट् दशाक्षरा ज्योतिर्विराजमाना भवति । भवतामग्निविराजौ ज्योतिषी, किन्निमित्तमग्निष्टोमस्य ज्योतिष्ट्व†मित्याह—विराड्वाच इत्यादि । वाचस्तोमलक्षणायास्सम्बन्धिन्यग्नावाग्नेये अग्निष्टोमाख्ये यज्ञायज्ञीये सामनि संस्थिते विराट् संतिष्ठते विराट्संख्या पूर्यते, 'वाचोग्नौ सन्तिष्ठते' इति तलवकारब्राह्मणम् । तां च विराजं संपद्यमानामभि अग्निष्टोमोपि सम्पद्यते । 'अभिरभागे' इत्यभेः लक्षणे कर्मप्रवचनीयत्वम् । यस्मादयं ज्योतिर्द्वयसंपत्त्यधीनोस्यात्मलाभः तस्मात्सोग्निष्टोमो ज्योतिरुच्यते । तत्र बहिष्पवमाने नव स्तोत्रिया त्रिवृद्बहिष्पवमान इति । पञ्चदशान्याज्यानि; तत्र षष्टिः स्तोत्रीयाः । पञ्चदशो माध्यन्दिनः पवमान इति पञ्चदश स्तोत्रीयाः । सप्तदशानि पृष्ठानि; तत्र अष्टषष्टिः स्तोत्रीयाः । सप्तदशार्भवः पवमान इति

---

* सं. ७-१-१३

† मं—किमेतावताऽग्निष्टोमस्य ज्योतिष्ट्व

तस्मात्तज्ज्योतिरुच्यते द्वौ स्तोमौ
प्रातस्सवनं वहतो यथा प्राणश्चा-
पानश्च द्वौ माध्यन्दिनꣳ सवनं यथा
चक्षुश्च श्रोत्रं च द्वौ तृतीयसवनं

तस्मात् । तत् । ज्योतिः । उच्यते । [2]द्वौ । स्तो-
मौ । प्रातस्सवनमिति प्रातः—सवनम् । वहतः ।
यथा । प्राण इति प्र—अनः । च । अपान इत्यप—अ-
नः । च । द्वौ । माध्यन्दिनम् । सवनम् । यथा ।
चक्षुः । च । श्रोत्रम् । च । द्वौ । तृतीयसवनमिति

---

सप्तदश स्तोत्रीयाः । एकविंशमग्निष्टोमसामेति एकविंशतिः स्तोत्रीयाः । एवमग्निष्टोमस्य द्वादशस्तोत्रस्य* नवतिशतं स्तोत्रीया भवन्ति । ताश्च दशाभिर्ह्रियमाणाः शुद्धं भागं प्रयच्छन्तीति विराट्सम्पत्तिः, नैव-मुक्थ्यादीनां दशके सम्पूर्णे समाप्तिरिति ॥

[2]अथ के पुनस्ते स्तोमाः? को वा यज्ञस्य तदुपकारः? इत्या-ह—द्वावित्यादि ॥ त्रिवृत्पञ्चदशौ प्रातस्सवनं धारयतः, यथा प्राणापानौ पुरुषं धारयतः । जन्मकाल एवानेन संयुज्येते इति पूर्वभावित्वमेतयोः । द्वौ माध्यन्दिनं पञ्चदशसप्तदशौ वहत इत्येव, यथा चक्षुश्च श्रोत्रं च पुरुषं वहतः । जननोत्तरकालं विषय-ग्रहणमेतयोर्भवतीति मध्यभावित्वमेतयोः । द्वौ तृतीयसवनं वहतः

---

*पराक्वृत्तिभेदेनेत्याधिकं कोशान्तरे.

यथा वाक्चं प्रतिष्ठा च पुरुंषसंमि-
तो वा एष यज्ञोस्थूरिः ॥ १ ॥ यं
कामं कामयंते तमेतेनाभ्यंश्नुते स-

तृतीय–सवनम् । यथा । वाक् । च । प्रतिष्ठेति प्रति–स्था । च । पुरुंषसम्मित इति पुरुंष–संम्मितः । वै । एषः । यज्ञः । अस्थूरिः ॥ १ ॥ यम् । कामम् । कामयंते । तम् । एतेन । अभीति । अश्नुते । सर्वम् । हि । अस्थूरिणा । अभ्य-

---

सप्तदशैकविंशौ, यथा वाक्च प्रतिष्ठा चादौ पुरुषं वहतः। वाक्प्रतिष्ठयोः स्वकार्यकरणसामर्थ्ये कतिपयदिवसव्यपगतौ भवत इति चरमभावित्वमेतयोः । यथा प्राणादिवृत्तित्वेऽविशिष्टेऽपि विशिष्टोपकारजनकतया प्राणापानादिषट्कं भिद्यते एवं सवनभेदेनोपकारविशेषजनकतया पञ्चदशसप्तदशयोरावृत्तचाऽवस्थानात् पट्त्वोपपत्तिस्स्तोमानाम् । यस्मादेवं तस्मादेष यज्ञः पुरुषसम्मितः पुरुषेण तुल्यः । उपमानपूर्वपदप्रकृतिस्वरत्वम्, 'तृतीया कर्मणि' इति वा । अस्थूरिः अग्निष्टोमः । शाखान्तरीयपाठे च इयमग्निष्टोमस्याख्या । सर्वं स्वर्गादिफलं अस्थूरिणाऽग्निष्टोमेन अभ्यश्नुते, न प्रजापतिमेव । अस्थूरित्वं चास्य 'द्वौ स्तोमौ प्रातस्सवनम्' इत्यादिना प्रतिपादितम् । तथा अस्थूरिः पृष्ठवाही स चतुर्भिः पादैर्युज्यमानः स्वकार्यवहनं करोति यथा गवादिः । अयं तु

वँ ह्यश्वतरिणाऽभ्यश्नुतेऽग्निष्टोमेन
वै प्रजापतिः प्रजा असृजत ता अ-
ग्निष्टोमेनैव पर्यगृह्णात्तासां परिगृही-
तानामश्वतरोत्यप्रवत तस्यानुहाय
रेत आऽदत्त तद्गर्दभे न्यमार्ट्तस्माद्गर्द-

श्नुत इत्यभि—अश्नुते । [3]अग्निष्टोमेनेत्यग्नि—स्तो-मेन । वै । प्रजापतिरिति प्रजा—पतिः । प्रजा इति प्र—जाः । असृजत । ताः । अग्निष्टोमेनेत्यग्नि—स्तोमेन । एव । परीति । अगृह्णात् । तासाम् । परिगृहीतानामिति परि—गृहीतानाम् । अश्वतरः । अतीति । अप्रवत । तस्य । अनुहायेत्यनु—हाय । रेतः । एति । अदत्त । तत् । गर्दभे । नीति । अ-

प्रतिसवनं द्वाभ्यां युज्यमानस्स्वकार्यं करोति यथा शिरोवाही पुरुषः । तस्मादेष पुरुषसम्मित इति । 'हि च' इति निघाताभावः, 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम्, समासश्च ॥

[3]अथ यदुक्तं 'प्रजननं ज्योतिः'* इति, तत्समर्थयते—अग्निष्टोमेनेत्यादिना ॥ अप्रजाताः प्रजा अजनयत्, प्रजाताश्च पर्यगृह्णात् विधेयीकृतवान् । अग्नेस्स्तोमो यज्ञायज्ञीयः, तदन्तः क्रतुरग्निष्टोमः 'अग्नेस्तुत्स्तोमसोमाः' इति षत्वम् । तासां परिगृहीतानां प्रजानां

*सं ७-१-१.1

भो द्विरेता अथो आहुर्वडबायां न्यमार्डिति तस्माद्वडबा द्विरेता अथो आहुरोषधीषु ॥ २ ॥ न्यमार्डिति तस्मादोषधयोनभ्यक्ता रेभन्त्यथो आहुः प्रजासु न्यमार्डि-

मार्ट् । तस्मात् । गर्दभः । द्विरेता इति द्वि—रेताः । अथो इति । आहुः । वडबायाम् । नीति । अमार्ट् । इति । तस्मात् । वडबा । द्विरेता इति द्वि—रेताः । अथो इति । आहुः । ओषधीषु ॥ २ ॥ नीति । अमार्ट् । इति । तस्मात् । ओषधयः । अनभ्यक्ता इत्यनभि—अक्ताः । रेभन्ति । अथो इति ।

---

मध्ये अश्वतरोत्यप्रवत परिग्रहमतीत्यागच्छत् । ज्युङ् प्रुङ् प्लुङ् गतौ । अश्वायां गर्दभेनोत्पन्नोश्वतरः । 'वत्सोक्षाश्व' इत्यादिना ष्टरच् । तस्यानुहायानुगम्य रेत आदत्त गृहीतवान् । ओहाङ् गतौ । तद्रेतो गर्दभे न्यमार्ट् निमृष्टवान् । मृजेर्लङि तिपि 'मृजेर्वृद्धिः' इति वृद्धिः, व्रश्चादिना षत्वम्, तिपो हल्ङ्यादिलोपे कृते 'रात्सस्य' इति नियमादन्त्यस्य न संयोगान्तलोपः । तस्माद्गर्दभो द्विरेताः द्वयोर्गर्दभ्या वडबायाश्च प्रजायते इति कृत्वा द्विशक्तिकं रेतोस्येति द्विरेताः । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । अथो अन्ये वडबायामश्वायां न्यमार्डित्याहुः । तस्मा-

ति तस्माद्यमौ जायेते तस्मादश्वत-
रो न प्रजायत आत्तरेता हि तस्मा-
द्बर्हिष्यनवक्लृप्तस्सर्ववेदसे वा स-

आहुः । प्रजास्विति प्र–जासु । नीति । अमार्ट् । इति । तस्मात् । यमौ । जायेते इति । तस्मात् । अश्वतरः । न । प्रेति । जायते । आत्तरेता इत्यात्त–रेताः । हि । तस्मात् । बर्हिषि । अनवक्लृप्त इत्यनव–क्लृप्तः । [4]सर्ववेदस इति सर्व–वे-

---

द्वडबा द्विरेता द्वाभ्यामश्वगर्दभाभ्यां प्रजायते इति कृत्वा द्वे रेतसी अस्मा[स्मि]न्निषिच्येते इति द्विरेताः । अथो अन्ये ओषधीषु न्यमार्डित्याहुः । 'ओषधेश्च विभक्तौ' इति दीर्घः । तस्मादोषधयोऽनभ्यक्ता अकृतमैथुना रेभन्ति जगति । प्रथने रेभशब्दः । अथापरे प्रजासु न्यमार्डित्याहुः । तस्माद्यमौ प्रजासु प्रजायेते, रेतोद्वयस्य विद्यमानत्वात् । तस्मादश्वतरो न प्रजायते इति यस्मात्तस्मादनुहाय रेत आदत्ते इति प्रकृतेनान्वीयते । तदेवाह—आत्तरेता हीति । हेतौ हिशब्दः । तस्मादेव बर्हिषि यज्ञे अश्वतरोनवक्लृप्तः दक्षिणादौ योग्यतां न भजते, आत्तरेतस्त्वेनासारत्वात् ॥

[4]सर्ववेदस इत्यादि ॥ सर्वाणि वेदांसि अस्मिन्देयानीति सर्ववेदसं सर्वस्वदानम् 'अनसन्तात्' इत्यच्समासान्तः । यद्वा—सर्वधनवत्सर्ववेदसं, अर्शआदिनाऽच्समासान्तः । सहस्रदक्षिणत्वात्सहस्रमित्युपचारः, तत्रावक्लृप्तः देय एव । 'गतिरनन्तरः' इति

हस्रे वाऽर्व क्लृप्तोति ह्यप्रवत य एवं विद्वानग्निष्टोमेन यजते प्राजाताः प्रजा जनयति परि प्रजाता

दृसे । वा । सहस्रे । वा । अर्वक्लृप्त इत्यर्व—क्लृप्तः । अतीति । हि । अप्रवत । [5]यः । एवम् । विद्वान् । अग्निष्टोमेनेत्यग्नि—स्तोमेन । यजते । प्रेति । अजाताः । प्रजा इति प्र—जाः । जनयति । परी-

---

गतेः प्रकृतिस्वरत्वम् । हेतुमाह—अति ह्यप्रवतेति । 'हि च' इति निघातप्रतिषेधः । अयं च बर्हिष्यनवक्लृप्तत्वे इतरत्र प्रदेयत्वे हेतुः । अग्निष्टोमदक्षिणाभूतगवादिसकाशात् निष्क्रान्तत्वात् तत्र तावदनवक्लृप्तः सोयं 'गौश्चाश्वतरश्च' इति प्रकृतावाम्नानात् इह च प्रतिषिद्धत्वात् साप्तदश्यवत् विकृत्यर्थो भवति । तदिदमुक्तं—अति ह्यप्रवतेति । प्राकृतीर्दक्षिणा अतीत्य गतोयं इदानीं विकृत्यर्थोपि यदि न स्यात् आम्नानवैयर्थ्यं स्यात् । प्रासंगिकोयमश्वतरस्य क्षेपः ॥

[5]य एवमित्यादि ॥ तस्मादग्निष्टोमेन यजेतेति विधिरनुमीयते । 'चादिलोपे विभाषा' इति प्रथमा तिङ्विभक्तिर्न निहन्यते । तस्मादाहुरिति । यस्मादेवं प्रजासृष्ट्यर्थं प्रजापतिरनेनायजत तस्मादिममग्निष्टोमं ज्येष्ठयज्ञमाहुः ज्येष्ठस्य प्रशस्तस्य प्रजापतेः यज्ञ इति कृत्वा । तदेवाह—प्रजापतिर्वावेत्यादि । अग्र इतीदानीमधिकं स्यात्; तस्मादन्यथा व्याख्यायते—ज्येष्ठः प्रथमः ज्ये-

गृह्णाति तस्मादाहुर्ज्येष्ठयज्ञ इति
॥ ३ ॥ प्रजापतिर्वाव ज्येष्ठस्स ह्ये-
तेनाग्रेऽयजत प्रजापतिरकामयत
प्र जायेयेति स मुखतस्त्रिवृतं निर-

ति। प्रजाता इति प्र—जाताः। गृह्णाति। तस्मात्। आहुः। ज्येष्ठयज्ञ इति ज्येष्ठ—यज्ञः। इति ॥ ३ ॥ प्रजापतिरिति प्रजा—पतिः। वाव। ज्येष्ठः। सः। हि। एतेन। अग्रे। अयजत। [6]प्रजापतिरिति प्र-जा—पतिः। अकामयत। प्रेति। जायेय। इति। सः। मुखतः। त्रिवृतमिति त्रि—वृतम्। निरिति। अ-

---

ष्ठश्चासौ यज्ञश्चेति ज्येष्ठयज्ञः। प्राथम्ये हेतुमाह—यस्मात्प्रजापतिरनेनाग्रे प्रथममयजत ततोन्यः क्रतुभिः अयष्ट तस्मात् अयं प्रथमो यज्ञानामासीदिति, यथोक्तं—'एष वाव प्रथमो यज्ञो यज्ञानाम्' इति। इदमिदानीं किमर्थं प्रजापतिर्वाव ज्येष्ठ इति? नानेन ज्येष्ठपदं व्याख्यायते, अपि तर्हि? वृद्धतमत्वं प्रजापतेरुच्यते; यथाऽनेन कृतं तथाऽन्यैः कर्तव्यमिति प्रतिपादनार्थम्। तस्मादनेनानिष्ट्वा अन्येन विकारेण न यजेतेति। 'हि च' इति निघाताभावः॥

[6]प्रजापतिरकामयतेत्यादि ॥ स्तोमानामुत्पत्तिरिहोच्यते। प्रासङ्गिकमग्न्यादीनाम्। त्रिवृतं नवस्तोत्रीयं स्तोमं मुखतो निरमि-

मिमीत तमग्निर्देवताऽन्वसृज्यत गा-
यत्री छन्दो रथन्तरꣳ साम ब्राह्मणो
मनुष्याणामजः पशूनां तस्मात्ते मु-
ख्या मुखतो ह्यसृज्यन्तोरसो बाहु-
भ्यां पञ्चदशं निरमिमीत तमिन्द्रो

मिमीत । तम् । अग्निः । देवता । अन्विति । अ-
सृज्यत । गायत्री । छन्दः । रथन्तरमिति रथं-
तरम् । साम । ब्राह्मणः । मनुष्याणाम् । अजः ।
पशूनाम् । तस्मात् । ते । मुख्याः । मुखतः । हि ।
असृज्यन्त । [7]उरसः । बाहुभ्यामिति बाहु-भ्याम् ।
पञ्चदशमिति पञ्च-दशम् । निरिति । अमिमीत ।

---

मीत । 'अपादाने चाहीयरुहोः' इति तसिः । त्र्यवयवास्तिस्रो वृत्तयोस्येति त्रिवृत्, त्रिचक्रादित्वादुत्तरपदान्तोदात्तत्वम् । तमनु तेन सहाग्न्यादयोन्वसृज्यन्त । तृतीयार्थे अनोः कर्मप्रवचनीयत्वम् । मुख्याः प्रधाना इत्यर्थः । तमेव हेतुमाह—मुखत इति । मुखे भवत्वान्मुख्यस्य च प्रधानत्वात् । दिगादित्वाद्यत् । यतो हि यत् निर्मीयते तत्र भवति तत् । न हि निष्क्रमणमात्रं निर्माणमिति । पूर्ववन्निघाताभावः ॥

[7]उरसो बाहुभ्यां पञ्चदशं पञ्चदशस्तोत्रीयं निरमिमीत । 'स्तोमे डविधिः पञ्चदशाद्यर्थे' इति डः । ततस्त्विन्द्रादयोसृज्यन्त

देवताऽन्वंसृज्यत त्रिष्टुप्छन्दों बृहत्
॥ ४ ॥ सामं राजन्यों मनुष्यां-
णामविंः पशूनां तस्मात्ते वीर्यांव-
न्तो वीर्याद्ध्यसृंज्यन्त मध्यतस्सं-
प्तदशं निरमिमीत तं विश्वें देवा
देवता अन्वंसृज्यन्त जगंती छ-

तम् । इन्द्रंः । देवतां । अन्विति । असृज्यत ।
त्रिष्टुप् । छन्दंः । बृहत् ॥ ४ ॥ सामं । राजन्यंः ।
मनुष्यांणाम् । अविंः । पशूनाम् । तस्मात् । ते ।
वीर्यांवन्त इति वीर्यं—वन्तः । वीर्यात् । हि । अ-
सृज्यन्त । [8]मध्यतः । सप्तदशमिति सप्त—दशम् ।
निरिति । अमिमीत । तम् । विश्वें । देवाः । देव-
ताः । अन्विति । असृज्यन्त । जगंती । छन्दंः ।

---

वीर्यावन्तः । 'अन्येषामपि' इति दीर्घत्वम् । तमेव हेतुमाह—वीर्यादिति । वीर्यवतः स्थानादित्यर्थः । वीर्यवत्त्वातिशयप्रदर्शनार्थं ताच्छब्द्यम् । लुप्तमत्वर्थीयो वा ॥

[8]मध्यत उदरात् सप्तदशस्तोत्रं निरमिमीत । तमनु विश्वेदेवाद-योन्वसृज्यन्त । आद्या उपजीव्याः, कृष्यादीनां क्षीरादीनां च तद-धीनत्वात् । तमेव हेतुमाह—अन्नधानादित्यादि । अन्नानि अश-

न्द्रो वैरूपꣳ साम वैश्यो मनुष्या-
णां गावः पशूनां तस्मात्त आद्या
अन्नधानाद्ध्यसृज्यन्त तस्माद्भूयाꣳ-
सोन्येभ्यो भूयिष्ठा हि देवता
अन्वसृज्यन्त पत्त एकविꣳशं नि-
रमिमीत तमनुष्टुप्छन्दः ॥ ५ ॥ अ-

वैरूपम् । साम । वैश्यः । मनुष्याणाम् । गावः । पशूनाम् । तस्मात् । ते । आद्याः । अन्नधानादित्यन्न–धानात् । हि । असृज्यन्त । तस्मात् । भूयाꣳसः । अन्येभ्यः । भूयिष्ठाः । हि । देवताः । अन्विति । असृज्यन्त । [9]पत्तः । एकविꣳशमित्येक–विꣳशम् । निरिति । अमिमीत । तम् । अ-

---

नानि धीयन्ते अस्मिन्नित्यन्नधानमुदरम् । तस्माद्भूयांसो बहुतराः अन्येभ्यः उत्पन्नेभ्यः । तमेव हेतुमाह—यस्मात् भूयिष्ठाभिर्बहुतमाभिः देवताभिर्विश्वेदेवाख्याभिस्सहासृज्यन्त जगत्यादयः तस्मात् भूयांसोन्येभ्यः, अन्ये त्वेकैकामनूत्पन्ना इति नातिभूयांसः ॥

[9]पत्तः पद्भ्यां एकविंशस्तोत्रीयं निरमिमीत । 'पद्दन्नः' इत्यादिना पद्भावः । तमनुष्टुबादयोन्वसृज्यन्त । तौ भूतसंक्रामिणौ विदितावेतावनन्तरोक्तावश्वशूद्रौ भूतानां संक्रामयितारौ वोढृत्वेन

न्वसृज्यत वैराजꣳ साम शूद्रो मनु-
ष्याणामश्वः पशूनां तस्मात्तौ भूत-
संक्रामिणावश्वश्च शूद्रश्च तस्माच्छू-
द्रो यज्ञेऽनवक्लृप्तो न हि देवता अ-
न्वसृज्यत तस्मात्पादावुप जीवतः

नुष्टुबित्यनु—स्तुप् । छन्दः ॥ ५ ॥ अन्विति । असृ-
ज्यत । वैराजम् । साम । शूद्रः । मनुष्याणाम् ।
अश्वः । पशूनाम् । तस्मात् । तौ । भूतसङ्क्रामि-
णाविति भूत—सङ्क्रामिणौ । अश्वः । च । शूद्रः ।
च । तस्मात् । शूद्रः । यज्ञे । अनवक्लृप्त इत्यन-
व—क्लृप्तः । न । हि । देवताः । अन्विति । असृ-
ज्यत । तस्मात् । पादौ । उपेति । जीवतः । पू-

देशाद्देशान्तरं प्रापयतः कृष्यादिव्यापारद्वारा इत्यर्थः । वक्ष्यमाणः 'पत्तो ह्यसृज्येताम्' इति हेतुः अत्रापि द्रष्टव्यः । तस्मादेव शूद्रो यज्ञे सर्वात्मनाऽनवक्लृप्तः । हेतुं चाह—न हीति । न ह्यश्वशूद्रौ देवताभिस्सहासृज्यत, एकविंशसृष्ट्यादौ देवतासृष्ट्यभावात् । नन्वश्वस्यापि समानमेतत् । सत्यम् । तस्य स्वयमेव सर्वदेवताधा*रत्वात् न देवताभिस्सह सृष्ट्यभावो यागायोग्यतामस्यावहतीति

*देवतात्मा इत्यपि पाठः.

पृत्तो ह्यसृंज्येतां प्राणा वै त्रिवृदर्ध-
मासाः पंञ्चदृशः प्रजापंतिस्सप्तदृश-
स्त्रयं इमे लोका असावादित्य एंक-
विꣳश एतास्मिन्वा एते श्रिता ए-

त्तः । हि । असृंज्येताम् । [10]प्राणा इति प्र–अनाः । वै । त्रिवृदिति त्रि–वृत् । अर्धमासा इत्यर्ध–मा-साः । पञ्चदश इति पञ्च–दृशः । प्रजापंतिरिति प्रजा–पतिः । सप्तदश इति सप्त–दृशः । त्रयः । इमे । लोकाः । असौ । आदित्यः । एकविꣳश इत्येक–विꣳशः । [11]एतास्मिन्न् । वै । एते । श्रि-

नूनं मन्यन्ते । यथोक्तं—'तस्मादश्वे सर्वा देवता अन्वायत्ताः'* इति । तस्मात्पादावुपजीवत इति । स्वप्रयासाधीनजीवना इत्यर्थः । कस्मादित्याह—पत्तो हीति ॥

[10]प्राणा वा इत्यादि ॥ स्तोमानां स्तुतिः । नवत्वान्वयात्त्रिवृदादीनां प्राणादित्वेन स्तुतिः 'न व वै पुरुषे प्राणाः'† इति । अर्धमासाः पञ्चदशदिवसाः पञ्चदशः । प्रजापतिः सप्तदशात्मा छन्दस्यः । यथा—'यो वै सप्तदशम्'‡ इत्यादि । यद्वा—प्रजोत्पत्तिहेतुत्वात्सप्तदशस्य प्रजापतित्वेन स्तुतिः । सप्तदशेन प्रजापतिना त्रिभिश्च लोकैः सम्मितः । आदित्यः एकविंशत्यन्वयादेकविंशः स्तोमः ॥

[11]एतस्मिन्नित्यादि ॥ एवमनेन प्रकारेण एतस्मिन्नेतत्स्तोमचतुष्ट-

*ब्रा. ३-८-७. †सं. ६-१-१.[18] ‡सं. १-६-११.[1]

तस्मिन्प्रतिष्ठिता य एवं वेदैतस्मिं-
न्नेव श्रयत एतस्मिन्प्रति तिष्ठ-
ति ॥ ६ ॥

प्रातस्सवने वै गायत्रेण छन्दसा

ताः । एतस्मिन्न् । प्रतिष्ठिता इति प्रति—स्थिताः । यः । एवम् । वेद । एतस्मिन्न् । एव । श्रयते । एतस्मिन्न् । प्रतीति । तिष्ठति ॥ ६ ॥

अस्थूरिरोषधीषु ज्येष्ठयज्ञ इति बृहदनुष्टु-
प्छन्दः प्रतिष्ठिता नव च ॥ १ ॥

[1]प्रातस्सवन इति प्रातः—सवने । वै । गायत्रे-

---

यवत्यग्निष्टोमे एते प्राणादय आदित्यपर्यन्ताश्श्रिताः, एतस्मिन्नेव प्रतिष्ठिताः अत्रैव नियतं वर्तन्ते, न कदाचिदिमं त्यजन्ति । एवं वेदिता एतस्मिन्नग्निष्टोमे श्रितः प्रतिष्ठितश्च भवति एतदनुष्ठानशीलो भवति ॥

इति सप्तमे प्रथमे प्रथमोनुवाकः.

---

[1]इदानीं पुरुषमिव प्राणाः त्रिवृदादयो यज्ञाङ्गसाहित्येन भवन्तीति प्रतिपादयितुमाह—प्रातस्सवन इत्यादि ॥ अयं यज्ञः

त्रिवृते स्तोमाय ज्योतिर्दधदेति त्रिवृता ब्रह्मवर्चसेन पञ्चदशाय ज्योतिर्दधदेति पञ्चदशेनौजसा वीर्येण सप्तदशाय ज्योतिर्दधदेति सप्तदशेन प्राजापत्येन प्रजननेनैकविꣳशाय

णं । छन्दसा । त्रिवृत इति त्रि-वृते । स्तोमाय । ज्योतिः । दधत् । एति । त्रिवृतेति त्रि-वृता । ब्रह्मवर्चसेनेति ब्रह्म-वर्चसेन । पञ्चदशायेति पञ्च-दशाय । ज्योतिः । दधत् । एति । पञ्चदशेनेति पञ्च-दशेन । ओजसा । वीर्येण । सप्तदशायेति सप्त-दशाय । ज्योतिः । दधत् । एति । सप्तदशेनेति सप्त-दशेन । प्राजापत्येनेति प्राजा-पत्येन । प्रजननेनेति प्र-जननेन । एकविꣳशायेत्येक-विꣳ-

---

प्रातस्सवने गायत्रेण छन्दसा त्रिवृत्सम्बन्धिना ज्योतिर्दीप्तिं दधत् त्रिवृते स्तोमाय गच्छति त्रिवृत्सकाशं गच्छति गायत्रत्वात्प्रातस्सवनस्य । गायत्र्येव गायत्रम् । 'छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसंख्यानम्' इत्यण् । छन्दोग्रहणं सामनिवृत्त्यर्थम् । 'क्रियाग्रहणं कर्तव्यम्' इति कर्मणस्सम्प्रदानत्वम् । यावत्त्रिवृद्गायत्र्यन्वयाज्ज्योतिष्मान् भवति यज्ञः ततस्त्रिवृता ब्रह्मवर्चसनिमित्तेन ज्योतिर्दधत् पञ्चदशाय स्तोमायैति । ओजोवीर्ये हे-

ज्योतिर्दधदेति स्तोम एव तत्स्तो
माय ज्योतिर्दधदेत्यथो स्तोम एव
स्तोमम॒भि प्रणयति यावन्तो वै
स्तोमास्तावन्तः कामास्तावन्तो लो-

शाय । ज्योतिः । दधत् । एति । स्तोमः । एव ।
तत् । स्तोमाय । ज्योतिः । दधत् । एति । अथो
इति । स्तोमे । एव । स्तोमम् । अभि । प्रेति ।
नयति । [2]यावन्तः । वै । स्तोमाः । तावन्तः । का-
माः । तावन्तः । लोकाः । तावन्ति । ज्योतींषि ।

---

तुना पञ्चदशेन ज्योतिर्दधत् सप्तदशायैति । ततः प्रजननहेतुना प्राजापत्येन सप्तदशेन ज्योतिर्दधत् एकविंशायैति । तस्मात्स्तोम एव भूत्वा ज्योतिर्दधदयं यज्ञः स्तोमायोत्तरस्मै एति । अथो अपि च अयमेव यज्ञः स्तोमे पञ्चदशादिके स्तोमं त्रिवृदादिकमभि प्रणयति आभिमुख्येन नयति अतस्स्तोमाधीनमस्य सर्वफलसाधनत्वमिति ॥

[2]तदेवाह—यावन्त इत्यादि ॥ यावन्तो यावत्परिमाणास्स्तोमाः तावन्ति कामलोकज्योतींषि तत्रैव समाप्तानि । कामाः धनपुत्रादयः । लोकाः स्वर्गादयः । ज्योतींषि तेजांसि ब्रह्मवर्चसादीनि । एतावत इत्यादि । एतावत्परिमाणान्यभिमतस्तोमादिनाऽवरुन्धे लभते । एतत्स्तोमसाध्यानि सर्वाण्यपि एवमादीन्यवरुन्धे ।

कास्तावन्ति ज्योतीꣳष्येतावत एव स्तोमानेतावतः कामानेतावतो लोकानेतावन्ति ज्योतीꣳष्यवरुन्धे ॥

ब्रह्मवादिनो वदन्ति स त्वै यजेत योऽग्निष्टोमेन यजमानोऽथ सर्वस्तो-

एतावतः । एव । स्तोमान् । एतावतः । कामान् । एतावतः । लोकान् । एतावन्ति । ज्योतीꣳषि । अवेति । रुन्धे ॥ ७ ॥

तावन्तो लोकास्त्रयो दश च ॥ २ ॥

[1]ब्रह्मवादिन इति ब्रह्म—वादिनः । वदन्ति । सः । तु । वै । यजेत । यः । अग्निष्टोमेनेत्यग्नि—स्तोमेन ।

---

तदेवाह—एतावत इत्यादि । एतत्स्तोमसाध्यानि सर्वाण्यपि कामलोकज्योतींषि अवरुन्धे इत्यर्थः । कः ? पूर्वानुवाकशेषत्वात् 'येऽग्निष्टोमेन यजते' इति गम्यते ॥

इति सप्तमे प्रथमे द्वितीयोऽनुवाकः.

---

[1]अधुना स्तोमान्तरयं निन्दन्विशिष्टरूपतामस्य ज्ञात्वैव यष्टव्यमनेनेति दर्शयितुमाह—ब्रह्मवादिन इत्यादि ॥ स एव यष्टुमर्हति ।

मेन यजेतेति यस्यं त्रिवृतमन्तर्य-
न्ति प्राणाः॒स्तस्यान्तर्यन्ति प्राणेषु
मेऽप्यसदिति खलु वै यज्ञेन यज-

यजमानः । अथ । सर्वस्तोमेनेति सर्व—स्तोमेन । यजेत । इति । [2]यस्यं । त्रिवृतमिति त्रि—वृतम् । अन्तर्यन्तीत्यन्तः—यन्ति । प्राणानिति प्र—अनान् । तस्यं । अन्तः । यन्ति । प्राणेष्विति प्र—अनेषु । मे । अपीति । असत् । इति । खलु । वै । यज्ञे-

'अर्हे कृत्यतृचश्च' इति यजेर्लिङादि । इतः पूर्वं योग्निष्टोमेन यजमानस्सन् इदानीं सर्वस्तोमेन यजेत । 'शकि लिङ् च' इति द्वितीये पर्याये लिङ् । चतुष्टोमेनाप्यन्तरितेन सर्वस्तोमेन स्तोमानां याथात्म्यं विदित्वा अप्रमत्तो यष्टुं शक्नोतीति ब्रह्मवादिन आहुः । संहितायां तोरन्तलोपश्छान्दसः, उक्तं च प्रातिशाख्ये—'तुनुपूर्वं उदात्तयोर्वकारः'* इति ॥

[2]यस्येत्यादि ॥ अन्तर्यन्ति प्रमादादुत्सृजन्ति । 'अन्तरपरिग्रहे' इति गतित्वात् 'तिङि चोदात्तवति' इति अन्तश्शब्दो निहन्यते, 'उदात्तवता तिङा' इति समासः, प्राणान्यजमानस्योत्सृजन्ति विनाशयन्ति साम्यात् । ननु यद्यन्तरिताः प्राणाः प्रेप्सितस्य स्वर्गस्य का गतिरित्याह—प्राणेष्विति । न केवलं स्वर्ग एव अपि तु प्राणेष्वपि मे मम भागित्वमसत् अस्तीति खलु वै यज्ञेनानेन अ-

*प्रा. ५-१३.

मानो यजते यस्यं पञ्चदशमंन्तर्य-
न्ति वीर्यं तस्यान्तर्यन्ति वीर्यं मेऽ-
प्यंसदिति खलु वै यज्ञेन यजंमा-
नो यजते यस्यं सप्तदशमंन्तर्यन्ति
॥ ८ ॥ प्रजां तस्यान्तर्यन्ति प्रजा-
यां मेऽप्यंसदिति खलु वै यज्ञेन

नं । यजंमानः । यजते । [3]यस्यं । पञ्चदशमिति पञ्च–दशम् । अन्तर्यन्तीत्यंन्तः–यन्ति । वीर्यम् । तस्यं । अन्तः । यन्ति । वीर्यं । मे । अपीति । असत् । इति । खलु । वै । यज्ञेनं । यजंमानः । यजते । [4]यस्यं । सप्तदशमिति सप्त–दशम् । अन्तर्यन्तीत्यंन्तः–यन्ति ॥ ८ ॥ प्रजामिति प्र–जाम् । तस्यं । अन्तः । यन्ति । प्रजायामिति प्र–जायाम् । मे । अपीति । असत् । इति. । ख-

---

ग्निष्टोमेनं यजमानो यजते सर्वेभ्यः कामेभ्योग्निष्टोम इति । यद्वा— प्राणेष्विति निमित्तसप्तमी । न केवलं स्वर्गार्थमेव, अपि तु प्राणार्थमपि ममायं यज्ञोस्तु इति यजमानो यजते, एवं सर्वत्र द्रष्टव्यम् ॥

[3]वीर्यमिति ॥ पञ्चदशस्य वीर्यस्थानादुत्पन्नत्वात् ॥

[4]प्रजामिति ॥ प्रजननसाधनत्वात्सप्तदशस्य ॥

यजमानो यजते यस्यैकविꣳशमन्तर्यन्ति प्रतिष्ठां तस्यान्तर्यन्ति प्रतिष्ठायां मेऽप्यसदिति खलु वै यज्ञेन यजमानो यजते यस्य त्रिण-

लु । वै । यज्ञेन । यजमानः । यजते । [5]यस्य । एकविꣳशमित्येक–विꣳशम् । अन्तर्यन्तीत्यन्तः–यन्ति । प्रतिष्ठामिति प्रति–स्थाम् । तस्य । अन्तः । यन्ति । प्रतिष्ठायामिति प्रति–स्थायाम् । मे । अपीति । असत् । इति । खलु । वै । यज्ञेन । यजमानः । यजते । [6]यस्य । त्रिणवमिति

---

[5]प्रतिष्ठामिति ॥ एकविंशस्य पङ्क्त्यामुत्पन्नत्वात् ॥

[6]त्रिणवमिति ॥ त्रीणि नवकानि परिमाणमस्येति पूर्ववत् डः । सप्तविंशस्तोत्रियस्त्रिणवः । 'पूर्वपदात्संज्ञायामगः' इति णत्वम् । ननु त्रिणवत्रयस्त्रिंशयोः चतुष्टोमेऽस्मिन् कः प्रसंगः । सत्यम्, एतयोरप्यन्तरयदोषश्रवणात् एतावप्यग्निष्टोमे ऋद्ध्या संपाद्याविति भावः । तत्कथमेतौ संपादितौ स्यातामिति? उच्यते—आज्यानि चत्वारि पञ्चदशान्नानि संभूय षष्टिस्स्तोत्रिया भवन्ति ताश्च द्वौ त्रिंशद्वर्गौ तत्रैकस्मात्तिस्र उद्धियन्ते एताश्चेतरत्र दीयन्ते । एवमेतौ संपन्नावनन्तरितौ भवतः । ततश्च तदन्तरयदोषो न भविष्यतीति । ऋतूनिति । नक्षत्रसंख्यान्वयेन संवत्सरात्मकत्वात्त्रिण-

वर्मन्तर्यन्त्यृतूꣳश्च तस्य नक्षत्रियां
च विराजमन्तर्यन्त्यृतुषु मेऽप्यसन्न-
क्षत्रियायां च विराजीति ॥ १ ॥
खलु वै यज्ञेन यजमानो यजते य-
स्य त्रयस्त्रिꣳशमन्तर्यन्ति देवता-

त्रि–नवम् । अन्तर्यन्तीत्यन्तः–यन्ति । ऋतून् । च । तस्य । नक्षत्रियाम् । च । विराजमिति वि–राजम् । अन्तः । यन्ति । ऋतुषु । मे । अपीति । असत् । नक्षत्रियायाम् । च । विराजीति वि–राजि । इति ॥ १ ॥ खलु । वै । यज्ञेन । यजमानः । यजते । [7]यस्य । त्रयस्त्रिꣳशमिति त्रयः–त्रिꣳशम् । अन्तर्यन्तीत्यन्तः–यन्ति । देवताः ।

वस्य । ऋत्वन्तरये च सर्वपुरुषार्थलोपः । नक्षत्रियामिति । नक्षत्रसमूहात्मिकां विराजमन्तर्यन्ति । 'नक्षत्राद्घः' इति समूहे घः। सप्तविंशतिनक्षत्राणीति तिस्रो विराजो निवृतः एकैकाक्षरोनत्वात् । एकैव त्रिवत् त्रिपदा विराट् । त्रिणवत्वस्यान्तरये नक्षत्राण्ये-वान्तरितानि स्युः ततोऽस्य सर्वार्थलोपः । यद्वा—जीवितविषयत्वात् जन्मदिनानामावृत्त्या त्रिंशन्नक्षत्राणि भवन्तीति पूर्णा एव तिस्रो विराजः । तदन्तरये जीवितलोप इति ॥

[7]त्रयस्त्रिंशमिति ॥ त्रयश्च त्रिंशच्च त्रयस्त्रिंशत्, 'त्रेस्त्रयः'

स्तस्यान्तर्यन्ति देवतासु मेऽप्यंस-
दिति खलु वै यज्ञेन यजमानो य-
जते यो वै स्तोमानामवमं परम-
तां गच्छन्तं वेद परमतामेव गच्छ-
ति त्रिवृद्वै स्तोमानामवमस्त्रिवृत्पर-

तस्य । अन्तः । यन्ति । देवतासु । मे । अपीति । असत् । इति । खलु । वै । यज्ञेन । यजमानः । यजते । [8]यः । वै । स्तोमानाम् । अवमम् । परम-ताम् । गच्छन्तम् । वेद । परमताम् । एव । ग-च्छति । त्रिवृदिति त्रि—वृत् । वै । स्तोमानाम् ।

---

इति त्रयसादेशः । तावत्यस्स्तोत्रियाः परिमाणमस्येति पूर्ववत् डः । देवता इति । तासां त्रयस्त्रिंशत्वात् द्युपृथिव्यन्तरिक्षस्थानां प्रत्येकमेकादशत्वात् ॥

[8]एवं सर्वप्रकृतिरग्निष्टोमः सगुणो विहितः । अथ विकृतीनामप्युदाहरणार्थं अतिरात्रो यज्ञक्रतूनां परमो विधीयते । यथोक्तं—'अतिरात्रः परमो यज्ञक्रतूनाम्'* इति । तदर्थं तद्गतं कंचिद्गुणविशेषं विधातुमाह—यो वा इत्यादि ॥ अवमः अल्पः, परमः उत्तमः । यद्वा—अवमः आद्यः परमः अन्त्यस्त्रिवृत् स्तोमानामवमः सोतिरात्रे परमो भवतीति 'त्रिवृद्रथन्तरसन्धिः' इति सन्धिस्तोत्रस्य त्रिवृत्त्वात् । एवं वेदिता परमतामुत्तमतां गच्छ-

---

* सं. ७-४-१०.

मो य एवं वेद परमतामेव गं-
च्छति ॥ १० ॥

अङ्गिरसो वै सत्रमासत ते सुवर्गं
लोकमायन्तेषाँ हविष्माँश्च हावि-
ष्कृच्चाहीयेतां तावकामयेताँ सुव-

अवमः । त्रिवृदिति त्रि—वृत् । परमः । यः । ए-
वम् । वेद । परमताम् । एव । गच्छति ॥ १० ॥

सप्तदशमन्तर्यन्ति विराजीति चतु-
श्चत्वारिँशच्च ॥ ३ ॥

[1]अङ्गिरसः । वै । सत्रम् । आसत । ते । सुव-
र्गमिति सुवः—गम् । लोकम् । आयन् । तेषाम् ।
हविष्मान् । च । हविष्कृदिति हविः—कृत् । च । अ

---

ति । तस्मात् तथा कर्तव्यमिति शेषः । एवंगुणकोतिरात्रः कर्तव्य इति विधिरनुमीयते उपलक्षणत्वाच्च सर्वेऽप्येकाहा विहिता भवन्तीति ॥

इति सप्तमे प्रथमे तृतीयोनुवाकः.

---

[1]एवं सर्वेऽप्येकाहा विहिताः । द्विरात्रादयोप्यहीनाः क्रमेण वि-
धीयन्ते । सर्वे चाहीनाः अन्यतरतोतिरात्रा भवन्ति । यदि चै-

गं लोकमियावेति तावेतं द्विरात्र-
मपश्यतां तमाऽहरतां तेनायजेतां
ततो वै तौ सुवर्गं लोकमैतां य एवं
विद्वान्द्विरात्रेण यजते सुवर्गमेव लो-

हीयेताम् । तौ । अकामयेताम् । सुवर्गमिति सु-
वः-गम् । लोकम् । इयाव । इति । तौ । एतम् ।
द्विरात्रमिति द्वि-रात्रम् । अपश्यताम् । तम् ।
एति । अहरताम् । तेन । अयजेताम् । ततः ।
वै । तौ । सुवर्गमिति सुवः-गम् । लोकम् ।
ऐताम् । यः । एवम् । विद्वान् । द्विरात्रेणेति
द्वि-रात्रेण । यजते । सुवर्गमिति सुवः-गम् ।

---

वाहीनो यदि च सत्रं, उभयथैवोभयतोतिरात्रो द्वादशाहो भवति आदेशात् । अन्यथाऽहीनोपि उभयतोतिरात्रो भवति । सर्वमुत्तरत्र वक्ष्यते । अङ्गिरस इत्यादि ॥ आसिरयमकर्मकः, सोस्मिन्विषये आस्थानकर्मेत्येके । यथा सत्रं भवति तथाऽऽसतेत्यन्ये । सत्रासनं सहासनं क्रतुविशेषस्याख्या, तदकुर्वतेत्यपरे । यथा 'प्रति प्रातिष्ठदध्वरे'* इत्यादि । तेषां मध्ये हविष्मद्धविष्कन्नामानौ अहीयेतां तस्मात्स्थानात्प्रच्युतौ । तावकामयेतामिति । चत्वारो द्विरात्राः व्युष्टिद्विरात्राङ्गिरसकापिवन†चैत्ररथनामानः । तत्रै-

---

*तै. ब्रा. ३-१२-९. †कापिनव.

कर्मैति तावैतां पूर्वेणाह्नाऽगच्छता-
मुत्तरेण ॥ ११ ॥ अभिप्लवः पूर्व-
मर्हर्भवति गतिरुत्तरं ज्योतिष्टोमोऽ-
ग्निष्टोमः पूर्वमहर्भवति तेजस्तेनाव

एव । लोकम् । एति । तौ । ऐताम् । पूर्वेण । अह्ना । अगच्छताम् । उत्तरेणेत्युत्–तरेण ॥ ११ ॥ अभिप्लव इत्यभि–प्लवः । पूर्वम् । अहः । भवति । गतिः । उत्तरमित्युत्–तरम् । [2]ज्योतिष्टोम इति ज्योतिः–स्तोमः । अग्निष्टोम इत्यग्नि–स्तोमः । पूर्वम् । अहः । भवति । तेजः । तेन । अवेति ।

---

तमित्याङ्गिरसं निर्दिशति इतरनिवृत्त्यर्थम् । तमाहरतां इष्टसाधनत्वेन गृहीतवन्तौ, तेनायजेतां इष्टं साधितवन्तौ । यद्वा—तमाहरतां तमारभेतां तेन अयजेतां देवान् पूजितवन्तौ ततस्स्वर्गं गतौ । ऐतां स्वर्गार्थं प्रस्थितौ, अगच्छतां स्वर्गं प्राप्तवन्तौ । अभिप्लवः षडहस्याद्यमहः अस्य पूर्वमहर्भवति । गतिरुत्तरमिति । अष्टमोतिरात्रविशेषः उत्तरमहर्भवति ॥

[2]तयोः स्तोमविधानार्थमाह—ज्योतिष्टोमः त्रिवृदादिस्तोमचतुष्टयवानाग्निष्टोमः अग्निष्टोमसामान्तं पूर्वमहर्भवति । सर्वस्तोमः सर्वसंस्थासंबन्धिस्तोमवानतिरात्रो द्वितीयमहर्भवति । यथोक्तं—' चतुर्विंशाः पवमानाः पञ्चदशानि त्रीण्याज्यानि, सप्तदशमच्छावाकस्य

रुन्धे सर्वस्तोमोतिरात्र उत्तरꣳ स-
र्वस्याप्त्यै सर्वस्यावरुध्यै गायत्रं पू-
र्वेऽहन्त्सामं भवति तेजो वै गांय-
त्री गायत्री ब्रह्मवर्चसं तेजं एव ब्रं-
ह्मवर्चसमात्मन्धत्ते त्रैष्टुभमुत्तर ओ-

रुन्धे । सर्वस्तोम इति सर्व-स्तोमः । अतिरात्र इत्यति-रात्रः । उत्तरमित्युत्-तरम् । सर्वस्य । आप्त्यै । सर्वस्य । अवरुद्ध्या इत्यव-रुद्ध्यै । [3]गायत्रम् । पूर्वे । अहन् । सामं । भवति । तेजः । वै । गायत्री । गायत्री । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । तेजः । एव । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । आत्मन् । धत्ते । त्रैष्टुभम् । उत्त-

---

एकविंशानि त्रीणि पृष्ठानि, त्रिणव*मच्छावाकस्य त्रयस्त्रिंशो-ग्निष्टोमसामानि एकविंशान्युक्थ्यानि सषोडशिकानि पञ्चदशी रात्रिः त्रिवृत्सन्धिः' इति ॥

[3]गायत्रं गायत्रीप्रभवं पूर्वेऽह्नि साम भवति, त्रैष्टुभमुत्तरस्मिन्नह्नि । आज्ये त्रैष्टुभस्य साम्नोभावात् होतुराज्ये विधानम् । यथोक्तमाचार्येण—'होतुराज्यं† संपादयेत्' इति ॥

---

*त्रिवृतं. †राज्यमेतानि.

जो वै वीर्यं त्रिष्टुगोज एव वीर्यमा-
त्मन्धत्ते रथन्तरं पूर्वे ॥ १२ ॥ अ-
हन्त्साम भवतीयं वै रथन्तरमस्या-
मेव प्रति तिष्ठति बृहदुत्तरेऽसौ वै
बृहदमुष्यामेव प्रति तिष्ठति तदा-
हुः क्व जगती चानुष्टुप्चेति वैखा-

र इत्युत्-तरे । ओजः । वै । वीर्यम् । त्रिष्टुप् ।
ओजः । एव । वीर्यम् । आत्मन्न् । धत्ते । रथन्त-
रमिति रथम्-तरम् । पूर्वे ॥ १२ ॥ अहन्न् ।
साम । भवति । इयम् । वै । रथन्तरमिति रथम्-
तरम् । अस्याम् । एव । प्रतीति । तिष्ठति । बृ-
हत् । उत्तर इत्युत्-तरे । असौ । वै । बृहत् । अ-
मुष्याम् । एव । प्रतीति । तिष्ठति । [4]तत् । आ-
हुः । क्व । जगती । च । अनुष्टुबित्यनु-स्तुप् ।
च । इति । [5]वैखानसम् । पूर्वे । अहन्न् । साम ।

---

[4]रथन्तरं बृहच्च पृष्ठेषु नियम्यते । तदाहुरिति । तत्र चोदयन्तीत्यर्थः । एते गायत्रीत्रिष्टुभौ दृष्टे । क्वेदानीं जगत्यनुष्टुभौ द्रष्टव्ये इति ॥

[5]परिहरति—वैखानसमिति ॥ पृष्ठेषु बार्हतं साम वैखानसं भवति

नसं पूर्वेऽहन्त्साम भवति तेन ज-
गत्यै नैति षोडश्युत्तरे तेनानुष्टुभोथा-
हुर्यत्समानेऽर्धमासे स्यातामन्यतर-
स्याह्नो वीर्यमनु पद्येतेत्यमावास्या-
यां पूर्वमहर्भवत्युत्तरस्मिन्नुत्तरं नानै-

भवति । तेन । जगत्यै । न । एति । षोडशि । उत्तर इत्युत्–तरे । तेन । अनुष्टुभ इत्यनु–स्तुभः । [6]अथ । आहुः । यत् । समाने । अर्धमास इत्यर्ध–मासे । स्याताम् । अन्यतरस्य । अह्नः । वीर्यम् । अन्विति । पद्येत । इति । अमावास्यायामित्यमा–वास्यायाम् । पूर्वम् । अहः । भवति । उत्तरस्मिन्नित्युत्–तरस्मिन् । उत्तरमित्युत्–तरम् ।

---

बृहतीचतुरभ्यासात् षट्त्रिंशदक्षरा । तत्र चतस्रो जगत्यो भवन्ति । तेन जगत्यै जगत्याः नैति न हीयते यज्ञः । षोडशीसाम गौरिवीतमुत्तरस्मिन्नह्नि भवति उक्थ्येभ्यः पुरस्तात् भवति । द्वे चानुष्टुभौ । तेनानुष्टुभो नैतीत्येव ॥

[6]अथाहुः—यदि समाने एकस्मिन्नर्धमासे स्यातां द्वे अप्यहनी अन्यतरस्याह्नः वीर्यं फलसाधनसामर्थ्यं अनुपद्येत प्रसज्येत, एकमेवाहस्स्यादिति यावत् । तस्मादमावास्या यां पूर्वमहर्भवति ।

वार्धमासयोर्भवतो नानावीर्ये भवतो हविष्मन्निधनं पूर्वमहर्भवति हविष्कृन्निधनमुत्तरं प्रतिष्ठित्यै ॥ १३ ॥

नाना । एव । अर्धमासयोरित्यर्ध–मासयोः । भवतः । नानावीर्ये इति नाना–वीर्ये । भवतः । हविष्मन्निधनमिति हविष्मत्–निधनम् । पूर्वम् । अहः । भवति । हविष्कृन्निधनमिति हविष्कृत्–निधनम् । उत्तरमित्युत्–तरम् । प्रतिष्ठित्या इति प्रति–स्थित्यै ॥ १३ ॥

उत्तरेण रथन्तरं पूर्वेऽन्वेकविंशतिश्च ॥ ४ ॥

---

उत्तरस्मिन्यजनीयेऽह्नि द्वितीयमहर्भवति । एवं क्रियमाणे नानाभूतयोः पृथग्भूतयोरर्धमासयोः कृतौ भवतः । हविष्मन्निधनमिति । हविष्मच्छब्दवत् हविष्मत् निधनं स्तोमो यस्य तद्धविष्मान्निधनं पूर्वमहः । एवं हविष्कान्निधनमुत्तरमहः । तत्प्रतिष्ठित्यै भवति द्वयोरभ्यां संबन्धेन अह्नोस्स्थिरत्वं भवति । एतेनाङ्गिरसेन सर्वे द्विरात्रा व्याख्याताः ॥

इति सप्तमे प्रथमे चतुर्थोनुवाकः.

---

आपो वा इदमग्रे सलिलमासीत्त-
स्मिन्प्रजापतिर्वायुर्भूत्वाऽचरत्स इ-
मामपश्यत्तां वराहो भूत्वाऽहरत्तां
विश्वकर्मा भूत्वा व्यमार्ट्साऽप्रथत सा

[1]आपः । वै । इदम् । अग्रे । सलिलम् । आसीत् । तस्मिन्न् । प्रजापतिरिति प्रजा–पतिः । वायुः । भूत्वा । अचरत् । सः । इमाम् । अपश्यत् । ताम् । वराहः । भूत्वा । एति । अहरत् । ताम् । विश्वकर्मेति विश्व–कर्मा । भूत्वा । वीति । अमार्ट् । सा । अप्रथत । सा । पृथिवी । अभवत् । तत् । पृथिव्यै । पृथिवित्वमिति पृथिवि–

[1]अथ त्रिरात्रो विधीयते* । गर्गत्रिरात्रः अश्वमेधः बैद†त्रिरात्रः छन्दोमनपवमानः पराक इति पञ्च त्रिरात्राः । तत्र प्रथमं गर्गत्रिरात्र आरभ्यते—आपो वा इदमग्रे सलिलमासीदिति ॥ इदं विश्वमग्रे आदौ सलिलमासीत् प्रत्यस्तामितसमस्तविकारं केवलं जलमेवासीदिति प्रतिपादनार्थः । अन्य आहुः—यदिदं सलिलविकारं क्षित्यादि एतत्सर्वमग्रे आप एवासीदिति । तस्मिन्नुदके प्रजापतिस्सिसृक्षुः वायुर्भूत्वाचरत् । स वायुरूपः प्रजापतिः इमां पृथिवीं अन्तर्जलेऽपश्यत् । तां पृथिवीं वायुरूपमुत्सृज्य वराहो

*त्रिरात्रा विधीयन्ते, †वैद.

पृथिव्यभवत्तत्पृथिव्यै पृथिवित्वं त-
स्यामश्राम्यत्प्रजापतिस्स देवानसृ-
जत वसून्रुद्रानादित्यान्ते देवाः प्र-
जापतिमब्रुवन्प्रजायामहा इति सो-
ऽब्रवीत् ॥ १४ ॥ यथाऽहं युष्माꣳ-

त्वम् । [2]तस्याम् । अश्राम्यत् । प्रजापतिरिति प्रजा-पतिः । सः । देवान् । असृजत । वसून् । रुद्रान् । आदित्यान् । ते । देवाः । प्रजापतिमिति प्रजा-पतिम् । अब्रुवन् । प्रेति । जायामहै । इति । सः । अब्रवीत् ॥१४॥ यथा । अहम् । युष्मान् ।

---

भूत्वा जलस्योपर्याहरत् । आहृत्य वराहरूपमुत्सृज्य विश्वकर्मा भूत्वा तां पृथिवीं व्यमार्ट् विस्तारितवान् । मृजेर्लिङि तिपि 'मृजेर्वृद्धिः' इति वृद्धिः । विश्वं कर्मास्येति विश्वकर्मा विश्वनिर्माणकुशलः । 'बहुव्रीहौ विश्वं संज्ञायाम्' इति पूर्वपदान्तोदात्तत्वम् । ततस्सा पृथिवी अप्रथत विस्तीर्णाऽभवत् । तत्तस्याः पृथिवीत्वम् । 'प्रथेष्षिवन्सम्प्रसारणं च' इति षिवन्प्रत्ययः । पृथिवीशब्दो ङीषन्तोन्तोदात्तः ॥

[2]ततः प्रजापतिस्तस्यामश्राम्यत्, तपोतप्यत । ततस्स देवानसृजत वस्वादीन् । अथ ते देवाः प्रजापतिमब्रुवन्—प्रजायामहै प्रजामुत्पादयामहे इति । सोब्रवीत्प्रजापतिः—यथाऽहं युष्मान् तप-

स्तपसाऽसृक्ष्येवं तपसि प्रजननमि-
च्छध्वमिति तेभ्योग्निमायतनं प्राय-
च्छदेतेनायतनेन श्राम्यतेति तेऽग्नि-
नाऽऽयतनेनाश्राम्यन्ते संवत्सर ए-
कां गामसृजन्त तां वसुभ्यो रुद्रे-

तपसा । असृक्षि । एवम् । तपसि । प्रजननमिति प्र—जननम् । इच्छध्वम् । इति । [3]तेभ्यः । अग्निम् । आयतनमित्या—यतनम् । प्रेति । अयच्छत् । एतेन । आयतनेनेत्या—यतनेन । श्राम्यत । इति । ते । अग्निना । आयतनेनेत्या—यतनेन । अश्राम्यन् । ते । संवत्सर इति सं—वत्सरे । एकाम् । गाम् । असृजन्त । ताम् । वसुभ्य इति

---

साऽसृक्षि सृष्टवान् । 'लिङ्गिचौ' इति कुत्वम् । एवं यूयमपि तपसि वर्तमानाः प्रजननमिच्छध्वमिति । यद्वा—प्रयोजकनिमित्तसप्तमी तपसा निमित्तेनेति । इच्छध्वमिति व्यत्ययेनात्मनेपदम् ॥

[3]एवमुक्त्वा तेभ्योग्निमायतनस्थानं तपस्स्थानमौपासनाख्यं प्रायच्छत् एतेनायतनेन तपः कुरुतेति । ते च तथाऽकुर्वत । ते संवत्सरान्तेन पाकयज्ञेन एकां गामसृजन्त । तां प्रथमं वसुभ्यो दत्तवन्तः एतां रक्षध्वमिति वयं तप्यामह इति । ते च वसवस्तामरक्षन् । सा च तेभ्यः प्राजायत प्रजा अजनयत् । कियतीः?

भ्य॑ आदि॒त्येभ्यः॒ प्राय॑च्छन्ने॒ताꣳ र॑-
क्षध्व॒मिति॒ तां वस॑वो रु॒द्रा आ॑दि॒-
त्या अ॑रक्षन्त॒ सा वसु॑भ्यो रु॒द्रेभ्य॑
आदि॒त्येभ्यः॒ प्राजा॑यत॒ त्रीणि॑ च
॥१५॥ श॒तानि॒ त्रय॑स्त्रिꣳशतं॒ चा-

वसु॑-भ्यः॒ । रु॒द्रेभ्य॑ः । आ॒दि॒त्येभ्य॑ः । प्रेति॑ । अ॒-
य॒च्छ॒न् । ए॒ताम् । र॒क्ष॒ध्व॒म् । इति॑ । ताम् । वस॑-
वः । रु॒द्राः । आ॒दि॒त्याः । अ॒र॒क्ष॒न्त॒ । सा । वसु॑-
भ्य॒ इति॒ वसु॑-भ्यः॒ । रु॒द्रेभ्य॑ः । आ॒दि॒त्येभ्य॑ः । प्रेति॑ ।
अ॒जा॒य॒त॒ । त्रीणि॑ । च॒ ॥१५॥ श॒तानि॑ । त्रय॑स्त्रिꣳ-
शत॒मिति॒ त्रय॑ः-त्रि॒ꣳश॒त॒म् । च॒ । अथ॑ । सा । ए॒व ।

---

त्रीणि च शतानि त्रयस्त्रिंशतं च । त्रयश्च त्रिंशच्च त्रयस्त्रिंशत्, 'संख्या' इति पूर्वपदप्रकृतिस्वरत्वम् । एवं रुद्रेष्वादित्येषु द्रष्टव्यम् । यथा—तां रुद्रेभ्यः प्रायच्छन् एतां रक्षध्वमिति । तां च रुद्रा अरक्षन् । सा च रुद्रेभ्यः प्राजायत त्रीणि च शतानि त्रयस्त्रिंशतं च । तथाऽऽदित्येभ्यः प्रायच्छन् एतां रक्षध्वमिति। ते च तामरक्षन् । सा चादित्येभ्यः प्राजायत त्रीणि च शतानि त्रयस्त्रिंशतं च । एवं समुदायो ददाति अवयवः प्रतिगृह्णाति । वाक्यत्रयमिदं तन्त्रेण निर्दिष्टम् । एवं वसुरुद्रादित्यानां संभूय एकोनसहस्रं गावोऽभवन् । अथ सैव गौः सहस्रतमी सहस्रस्य पूरण्यभवत् । 'नित्यं शतादि' इत्यादिना डट् तमडागमः ॥

थ सैव संहस्रतम्यंभवत्ते देवाः प्र-
जापतिमब्रुवन्त्सहस्रेण नो याजयेति
सोऽग्निष्टोमेन वसूनयाजयत्त इमं
लोकमजयन्तच्चाददुस्स उक्थ्येन रु-
द्रानयाजयत्तेऽन्तरिक्षमजयन्तच्चाद-
दुस्सोऽतिरात्रेणादित्यानयाजयत्तेऽमुं

सहस्रतमीति सहस्र-तमी । अभवत् । [4]ते । देवाः। प्रजापतिमिति प्रजा-पतिम् । अब्रुवन् । सहस्रेण । नः । याजय । इति । सः । अग्निष्टोमेनेत्यग्नि-स्तोमेन । वसून् । अयाजयत् । ते । इमम् । लोकम् । अजयन् । तत् । च । अददुः । सः । उक्थ्येन । रुद्रान् । अयाजयत् । ते । अन्तरिक्षम् । अजयन् । तत् । च । अददुः । सः । अतिरात्रेणेत्यति-रात्रेण । आदित्यान् । अयाजयत् । ते । अमुम् । लोकम् । अजयन् । तत् ।

---

[4]अथ देवाः प्रजापतिमब्रुवन् अनेन सहस्रेणास्मान्याजयेति । सोऽग्निष्टोमेन वसूनयाजयत् । ते वसव इमं लोकमजयन् । तच्चात्मीयत्रयस्त्रिंशदधिकशतत्रयं गोधनं दत्तवन्तः दक्षिणां कृतवन्तः। अथ प्रजापतिरुक्थ्येन रुद्रानयाजयत् इत्यादि । गतम् ॥

लोकमंजयन्तच्चाददुस्तदन्तरिक्षम् ॥
१६ ॥ व्यवैर्यत तस्माद्रुद्रा घा-
तुका अनायतना हि तस्मादाहुश्शि-
थिलं वै मध्यममहस्त्रिरात्रस्य वि हि
तदवैर्यतेति त्रैष्टुभं मध्यमस्याह्न आ-

च । अददुः । [5]तत् । अन्तरिक्षम् ॥ १६ ॥ व्यवै-
र्यतेति वि-अवैर्यत । तस्मात् । रुद्राः । घातुकाः ।
अनायतना इत्यना-यतनाः । हि । तस्मात् ।
आहुः । शिथिलम् । वै । मध्यमम् । अहः । त्रि-
रात्रस्येति त्रि-रात्रस्य । वीति । हि । तत् । अवै-
र्यतेत्यव-ऐर्यत । इति । त्रैष्टुभम् । मध्यमस्य ।

---

[5]अथ तदन्तरिक्षं व्यवैर्यत विशीर्णमधोपतत् । ईर प्रेरणे, कर्मणि लङ्, यकि 'गतिर्गतौ' इति गतेरनुदात्तत्वम्, उदात्तवत्या गत्या आख्यातसमुदायेन समासः । तस्माद्रुद्रा घातुकाः हननशीलाः । 'लषपत' इत्यादिना उकञ् । अनायतना हि विशीर्णस्थानत्वात् । तस्मात्त्रिरात्रस्य मध्यममहः शिथिलमित्याह । हेतुं चाह—वि हि तदवैर्यतेति । तन्मध्यममहः व्यवैर्यत विशीर्णमभवत् । फलस्य विशीर्णत्वात् । 'हि च' इति निघातप्रतिषेधः । 'तिङि चोदात्तवति' इति गतेरनुदात्तत्वम्, समासश्च । तस्मान्मध्यमस्याह्नः आज्यं त्रैष्टुभं भवति । पूर्ववत् होतुराज्य-

ज्यं भवति संयानानि सूक्तानि शꣳसति षोडशिनꣳ शꣳसत्यह्नो धृत्या अशिथिलं भावाय तस्मात्त्रिरात्रस्याग्निष्टोम एव प्रथममहस्स्यादथोक्थ्योथातिरात्र एषां लोकानां विधृत्यै त्रीणित्रीणि शतान्यनूचीनाहमव्यं-

अह्नः । आज्यम् । भवति । संयानानीति सं—यानानि । सूक्तानीति सु—उक्तानि । शꣳसति । षोडशिनम् । शꣳसति । अह्नः । धृत्यै । अशिथिलम्भावायेत्यशिथिलं—भावाय । तस्मात् । त्रिरात्रस्येति त्रि—रात्रस्य । अग्निष्टोम इत्यग्नि—स्तोमः । एव । प्रथमम् । अहः । स्यात् । अथ । उक्थ्यः । अथ । अतिरात्र इत्यति—रात्रः । एषाम् । लोकानाम् । विधृत्या इति वि—धृत्यै । [6]त्रीणित्रीणीति त्रीणि—त्रीणि । शतानि । अनू-

---

मिति वेदितव्यम् । संयानानि सूक्तानि शंसति तेषां महत्त्वात् । षोडशिनं च शस्त्रं शंसति अह्नो दुर्बलत्वात् । तस्य धृत्यै धारणार्थं, अशिथिलंभावाय । छान्दसः खश् । यस्मादेवमेनान् एतैरयाजयत् तस्मात् त्रिरात्रस्येत्यादि । स्पष्टम् ॥

[6]त्रीणित्रीणीत्यादि ॥ अनूचीनाहमव्यवच्छिन्नानि ददाति ।

वच्छिन्नानि ददाति ॥ १७ ॥ एषां लोकानामनु संतत्यै दशातं न वि-

चीनाहमित्यनूचीन–अहम् । अव्यवच्छिन्नानी-त्यवि–अवच्छिन्नानि । ददाति ॥ १७ ॥ एषाम् । लोकानाम् । अन्विति । सन्तत्या इति सं–तत्यै । [7]दशतम् । न । वीति । छिन्द्यात् । विराजमिति वि–राजम् । न । इत् । विच्छिनदानीति वि–छि-

---

उत्तमेऽह्नि चत्वारिंशता । अन्वश्चतीति 'ऋत्विक्' इत्यादिना क्विप्, 'अनिदिताम्' इति नलोपः, 'विभाषाश्वेः' इत्यादिना खः, 'चौ' इति दीर्घत्वम्, अनूचीनाहं, समासे 'राजाहस्सखिभ्यष्टच्' एषां लोकानामनुक्रमेण सन्तत्यै सन्तानार्थं तद्भवति ॥

[7]दशतमित्यादि ॥ दशानां वर्गो दशत्, 'पञ्चद्दशतौ वर्गे वा' इति निपात्यते । तं न विच्छिन्द्यात् दक्षिणां ददत् दशभ्यो न्यूनं न दद्यात् विराजं नेद्विच्छिनदानीति विराजोन्नस्य विच्छित्तिर्मे मा भूदिति यावत् । 'निपातैर्यद्यदिहन्त' इत्यादिना निघाताभावः । पूर्ववद्गतिस्वरसमासौ । अथ यस्मै एकां गां दास्यन् स्यात् द्वे पञ्च वा तत्र कथं भवितव्यम् ? अत्रोक्तमाचार्येण—'यस्मा एकां गां दास्यन् स्यात् दशभ्यस्तेभ्यो दशतमपाकुर्यात् । यस्मै द्वे पञ्चभ्यः यस्मै पञ्च द्वाभ्यामेवमा शतादासहस्रात्' इति ॥

च्छिन्द्याद्विराजं नेदिदाच्छिनदानीत्यथ
या सहस्रतम्यासीत्तस्यामिन्द्रश्च वि-
ष्णुश्च व्यायच्छेतास्स इन्द्रोमन्य-
तानया वा इदं विष्णुस्सहस्रं वर्क्ष्यत
इति तस्यामकल्पेतां द्विभाग इन्द्र-
स्तृतीये विष्णुस्तद्वा एषाऽभ्यनू-

नदानि । इति । [8]अथ । या । सहस्रतमीति सह-स्र–तमी । आसीत् । तस्याम् । इन्द्रः । च । वि-ष्णुः । च । व्यायच्छेतामिति वि–आयच्छेताम् । सः । इन्द्रः । अमन्यत । अनया । वै । इदम् । विष्णुः । सह-स्रम् । वर्क्ष्यते । इति । तस्याम् । अकल्पेताम् । [9]द्विभा-ग इति द्वि–भागे । इन्द्रः । तृतीये । विष्णुः । तत् । वै । एषा । अभ्यनूच्यत इत्यभि–अनूच्य-

---

[8]अथ या सहस्रतमी गौरासीत् तस्यां तन्निमित्तं इन्द्रो विष्णुश्च व्यायच्छेतां ममेयं ममेयमिति विप्रतिपन्नावभवताम् । 'गतिर्गतौ' इति गतेरनुदात्तत्वम्, समासश्च पूर्ववत् । अथेन्द्रोमन्यत यदीमां विष्णुर्लभेत ततोनया सहस्रमपि वर्क्ष्यते वशीकरोति । वृजिरावर्जनकर्मा, लृट् स्यः । तस्मादधिकभाजा मया भवितव्यमिति तस्यां तावकल्पेतां व्यवस्थां कृतवन्तौ भागयोः ॥

[9]द्विभाग इत्यादि ॥ द्वयोर्भागयोरिन्द्रो व्यवस्थितः । 'द्विगौ

च्यत उभा जिग्यथुरिति तां वा ए-
तामच्छावाकः ॥ १८ ॥ एव शꣳ-
सत्यथ या सहस्रतमी सा होत्रे दे-
येति होतारं वा अभ्यतिरिच्यते य-
दतिरिच्यते होताऽनाप्तस्यापयिताऽ-

ते । उभा । जिग्यथुः । इति । ताम् । वै । एताम् । अच्छावाकः ॥ १८ ॥ एव । शꣳसति । अथ । या । सहस्रतमीति सहस्र—तमी । सा । होत्रे । देया । इति । होतारम् । वै । अभ्यतिरिच्यत इत्यभि—अतिरिच्यते । यत् । अतिरिच्यत इत्यति—रिच्यते । होता । अनाप्तस्य । आपयिता ।

प्रमाणे' इति पूर्वपदप्रकृतिस्वरत्वम् ॥ द्वयोर्भागयोस्समाहारो द्विभागः। तृतीयो भागस्त्रिभागः। तत्र विष्णुर्व्यवस्थितः 'पूरणाद्भागे तीयादन्' इत्यन्प्रत्ययः । तदेतदर्थरूपमभिलक्ष्य एषा वक्ष्यमाणा ऋगुच्यते 'उभा जिग्यथुः'* इति। व्याख्याता चेयं 'प्रसो अग्ने'* इत्यत्र उत्तरत्र चानुवाके व्यक्तार्था भविष्यति । तामेतामच्छावाक एव शंसति। अथ सहस्रतमी होतुर्भागे देया। हेतुमाह—यद्यज्ञेऽतिरिच्यते तस्योत्तरमभिलक्ष्यातिरिच्यते तस्मादतिरिक्तस्स्याद्धोता । पूर्ववत् 'गतिर्गतौ' इति गतेरनुदात्तत्वम्, उत्तरत्र 'तिङि चोदात्तवति' इति, उभयत्र समासः पूर्ववत् । किंच—अनाप्तस्य आपयिता होता यद्यज्ञस्योन्नतस्य पूरयिता समीकर्ता होता तां गामर्हतीति॥

*सं. ३-२-११.

थाहुरुन्नेत्रे देयेत्यतिरिक्ता वा एषा
सहस्रस्यातिरिक्त उन्नेतार्त्विजामथा-
हुस्सर्वेभ्यस्सदस्येभ्यो देयेत्यथाहुरु-
दाकृत्या सा वशं चरेदित्यथाहुर्ब्र-

[10]अथ । आहुः । उन्नेत्र इत्युत्–नेत्रे । देया। इति । अतिरिक्तेत्यति–रिक्ता । वै । एषा । सहस्रस्य । अतिरिक्त इत्यति–रिक्तः । उन्नेतेत्युत्–नेता । ऋत्विजाम् । अथ । आहुः । सर्वेभ्यः । सदस्येभ्यः । देया । इति । अथ । आहुः । उदाकृत्येत्युत्–आकृत्या । सा । वशम् । चरेत् । इति । [1]अथ ।

---

[10]अथाहुः अन्ये उन्नेत्रे देयेति ॥ हेतुं चाहुः—अतिरिक्ता खल्वेषा सवीर्या सहस्रस्य । उन्नेता च ऋत्विजां हारियोजनस्य धारयिता । अथान्ये वदन्ति—सर्वेभ्य इति । गतम् । अथाहुरपरे—उदाकृत्या सावशं चरेदिति । उदाकरणमुत्सर्जनं, तदर्हा असंज्ञायामपि क्यप्च' इति अर्हार्थे क्यप्, तुगागमः । सा वशं चरेदिति यथेष्टं स्वतन्त्रा गच्छेदित्यर्थः । न तु कश्चिदपि स्वामितया विशेषेण सहस्रतमी नियन्तुमर्हतीति ॥

[11]अथापरे ब्रुवते—ब्रह्मण इत्यादि ॥ गतम् । यथैवेति । यथैव इन्द्रविष्णुभ्यां कल्पितं तथैव तदीययोः ब्रह्माग्नीध्रयोः युक्तं भवितुमर्हतीति ॥

ह्मणे चाग्नीधे च देयेति ॥ ११ ॥
द्विभागं ब्रह्मणे तृतीयमग्नीधं ऐन्द्रो
वै ब्रह्मा वैष्णवोऽग्नीद्यथैव तावकल्पे-
तामित्यथाहुर्या कल्याणी बहुरूपा
सा देयेत्यथाहुर्या द्विरूपोभयतएनी

आहुः । ब्रह्मणे । च । अग्नीध इत्यग्नि-इधे । च । देया । इति ॥ ११ ॥ द्विभागमिति द्वि-भागम् । ब्रह्मणे । तृतीयम् । अग्नीध इत्यग्नि-इधे । ऐन्द्रः । वै । ब्रह्मा । वैष्णवः । अग्नीदित्यग्नि-इत् । यथा । एव । तौ । अकल्पेताम् । इति । [12]अथ । आहुः । या । कल्याणी । बहुरूपेति बहु-रूपा । सा । देया । इति । अथ । आहुः । या । द्विरूपेति द्वि-रूपा । उभयतएनीत्युभयतः-एनी । सा । देया । इति ।

[12]अथान्ये आचक्षते—या कल्याणी गुणवती अनेकरूपा च तादृशी अन्या देयेति । 'वहोर्नञ्वत्' इति नञ्वद्भावात् 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । अपरे चाहुः—या द्विरूपा उभयतएनी उभयपार्श्वशुक्ला सा तादृशी देयेति । तत्सहस्रस्य परिगृहीत्यै सहस्रस्य परिग्रहार्थं भवति । अन्यासां* गवाम् । 'वर्णादनुदात्तात्' इति ङीप्, एनीशब्दस्य नत्वम्, 'तत्पुरुषे' अव्यय-

*तत्तासां.

सा देयेति सहस्रस्य परिगृहीत्यै तद्वा
एतत्सहस्रस्यायनꣳ सहस्रꣳ स्तो-
त्रीयास्सहस्रं दक्षिणास्सहस्रसंमित-

सहस्रस्य । परिगृहीत्या इति परि—गृहीत्यै ।
[13]तत् । वै । एतत् । सहस्रस्य । अयनम् । सह-
स्रम् । स्तोत्रीयाः । सहस्रम् । दक्षिणाः । सहस्र-
संमित इति सहस्र—संमितः । सुवर्ग इति सुवः—
गः । लोकः । सुवर्गस्येति सुवः—गस्य । लोक-

---

पूर्वपदप्रकृतिस्वरत्वम् ‘नञ्कुनिपातानामेव’ इति चेत् व्यत्ययेन भविष्यति । द्विरूपशब्दः निरुदकादिषु द्रष्टव्यः ॥

[13]तद्वा इत्यादि ॥ तदेतत्त्रिरात्राख्यं कर्म सहस्रस्यायनं लाभहेतुः । सहस्रमस्य स्तोत्रीया भवन्ति, नवत्यधिकशतमग्निष्टोमस्य, त्रिपञ्चाशदधिकं शतद्वयमुक्थ्यस्य । द्विचत्वारिंशदधिकानि चत्वारि शतान्यतिरात्रस्य । शेषं वैकृतं पञ्चदशाधिकं शतं च द्विरात्रे दर्शितम् । सर्वस्तोमे स्तोत्रे भवाः स्तोत्रीयाः । गर्गादित्वाच्छः । अथास्य सहस्रं दक्षिणा भवन्ति । यस्मादेवं तस्मात् सहस्रसम्मितस्य महत्वात् सहस्रतुल्यस्य स्वर्गस्य लोकस्य विजयाय भवति । ‘तादौ च’ इति गतेः प्रकृतिस्वरत्वम् । सहस्रेण सम्मितं

स्सुवर्गो लोकस्सुवर्गस्यं लोकस्या-
भिजिंत्यै ॥ २० ॥

सोमो वै सहस्रमविन्दत्तमिन्द्रोन्वं-
विन्दत्तौ यमो न्यागंच्छत्तावब्रवीदस्तु

स्यं । अभिजिंत्या इत्यभि-जित्यै ॥ २० ॥

अब्रवीच्च तदन्तरिक्षं ददात्यच्छा वाकश्च-
देयेति सप्तचत्वारिंशच्च ॥ ५ ॥

[1]सोमः । वै । सहस्रम् । अविन्दत् । तम् । इ-
न्द्रः । अन्विति । अविन्दत् । तौ । यमः । न्यागं-
च्छदिति नि-आगच्छत् । तौ । अब्रवीत् । अस्तु ।

---

तुल्यमिति । 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । उपमानपूर्वपदप्रकृतिस्वरत्वं वा ॥

इति सप्तमे प्रथमे पञ्चमोनुवाकः.

---

[1]इदानीं प्रकारान्तरेण सहस्रतमी स्तूयते—सोमो वा इत्यादि ॥ सोमो गवां सहस्रमलभत । इन्द्रोपीमं सोममागम्य तदेव गवां सहस्रमविन्दत् । एवं तदुभयोरभवत् भागः तौ सोमेन्द्रौ यमोन्यागच्छत् निकामयमान आगच्छत् । 'गतिर्गतौ' इति गतेरनुदात्तत्वम्, समासश्च । तौ

मेऽत्रापीत्यस्तु ही३ इत्यब्रूता१ँ स
यम एकस्यां वीर्यं पर्यपश्यदियं वा
अस्य सहस्रस्य वीर्यं बिभर्तीति
तावब्रवीदियं ममास्त्वेतद्युवयोरिति
तावब्रूता१ँ सर्वे वा एतदेतस्यां वी-

मे । अत्र । अपीति । इति । अस्तु । ही३ । इति ।
अब्रूताम् । सः । यमः । एकस्याम् । वीर्यम् । प-
रीति । अपश्यत् । इयम् । वै । अस्य । सहस्रस्य ।
वीर्यम । बिभर्ति । इति । तौ । अब्रवीत् । इयम् । मम ।
अस्तु । एतत् । युवयोः । इति । [2]तौ । अब्रूताम् ।
सर्वे । वै । एतत् । एतस्याम् । वीर्यम् ॥ २१ ॥

---

चाब्रवीत्—ममाप्यत्र गवां सहस्रे अंशित्वमस्त्विति । अथास्तु हि इति तमब्रूताम् । 'प्रतिश्रवणे च' इति प्लुतः, अभिपूजिते वा । ततः प्रतिश्रुतांशो यमः एकस्यां सहस्रतम्यां सर्वस्मादपि गोसमूहात् वीर्यं पर्यपश्यत् कात्स्न्र्येनापश्यत् इयमेकैव अस्य सहस्रस्य वीर्यं बिभर्तीति । एवं पश्यन् तौ सोमेन्द्रौ यमोब्रवीत्—इयमेकैव ममास्तु एतत्सहस्रं युवयोरस्त्विति । 'युष्मदस्मदोर्ङसि' इति ममशब्द आद्युदात्तः ॥

[2]अथ तच्छ्रुत्वा विदिताभिप्रायौ तावब्रूताम्—सर्वे वयमेतस्यां विद्यमानं वीर्यं सहस्रसम्मितं परिपश्यामः, अंशं च हरामहे

यैम् ॥ २१ ॥ परिं पश्यामोऽंशमा हरामहा इति तस्यामंशमाऽहरन्त तामप्सु प्रावेशयन्थ्सोमायोदेहीति सा रोहिणी पिङ्गलैकहायनी रूपं कृत्वा त्रयंस्त्रिंशता च त्रिभिश्च शतैस्सहोदैत्तस्माद्रोहिण्या पिङ्गलयै-

परीति । पश्यामः । अंशम् । एति । हरामहै । इति । तस्याम् । अंशम् । एति । अहरन्त । [3]ताम् । अप्स्वित्यप्-सु । प्रेति । अवेशयन् । सोमाय । उदेहीत्युत्-एहि । इति । सा । रोहिणी । पिङ्गला । एकहायनीत्येक-हायनी । रूपम् । कृत्वा । त्रयंस्त्रिंशतेति त्रयः-त्रिंशता । च । त्रि-

---

अंशानियमं चानयैव कुर्म इतीत्थं कृतमतयस्सर्वेऽपि सोमेन्द्रयमाः तस्यामंशमाहरन्त तामेव नियमहेतुं कृत्वा स्वंस्वमंशं गृहीतवन्तः ॥

[3]कथमित्याह—तामित्यादि ॥ सोमो यादृशीं त्वामर्हति यावतीश्च गा अर्हति तदनुरूपा उदेहि उदयं प्रतिपद्यस्वेति तामप्सु प्रावेशयन् । पूर्ववद्गतिस्वरसमासौ । सेत्यादि । रोहिणी रोहितवर्णा । 'वर्णादनुदात्तात्' इति ङीप् । पिङ्गला पिङ्गलाक्षी एकहायनी एकवर्षा । 'दामहायनान्ताच्च' इति ङीप् । ईदृशी

कंहायन्या सोमं क्रीणीयाद्य एवं विद्वान्रोहिण्या पिङ्गलयैकंहायन्या सोमं क्रीणाति त्रयंस्त्रिꣳशता चैवा- स्यं त्रिभिश्चं ॥ २२ ॥ शतैस्सोमः क्रीतो भवति सुक्रींतेन यजते ता-

भिरिति त्रि-भिः । च । शतैः । सह । उदैदित्युत्-ऐत् । तस्मात् । रोहिण्या । पिङ्गलया । एकहायन्येत्येक-हायन्या । सोमम् । क्रीणीयात् । यः । एवम् । विद्वान् । रोहिण्या । पिङ्गलया । एकहायन्येत्येक-हायन्या । सोमम् । क्रीणाति । त्रयंस्त्रिꣳशतेति त्रयः-त्रिꣳशता । च । एव । अ-स्य । त्रिभिरिति त्रि-भिः । च ॥ २२ ॥ शतैः । सोमः । क्रीतः । भवति । सुक्रीतेनेति सु-क्रीतेन । यजते । [4]ताम् । अप्स्वित्यप्-सु । प्रेति ।

---

भूत्वा रूपं चैतदनुगुणं कृत्वा त्रयस्त्रिंशदधिकशतत्रयसङ्ख्याभिर्गोभिस्सह उदैत् उदगच्छत् । पूर्ववन्निघातसमासौ । तस्मादित्यादि गतम् ॥ त्रयस्त्रिंशता चैवेत्यादि । तदात्मकत्वात्तासाम् । ततस्सुक्रीतेन सोमेन यजते । प्रादिसमासे 'गतिरनन्तरः' इति स्वरः ॥

[4]तामित्यादि ॥ इन्द्रायानुरूपमुदेहीति तां पुनरप्सु प्रावेशयन् । रोहिणी उक्तलक्षणा । लक्ष्मणा लक्ष्मवती । पामादित्वान्नप्रत्ययः ।

मप्सु प्रावेशयन्निन्द्रायोदेहीति सा रोहिणी लक्ष्मणा पष्ठौही वार्त्रघ्नी रूपं कृत्वा त्रयस्त्रिंशता च त्रिभिश्चं शतैस्सहोदैत्तस्माद्रोहिणीं लक्ष्मणां पष्ठौहीं वार्त्रघ्नीं दद्याद्य एवं विद्वान्रोहिणीं लक्ष्मणां पष्ठौहीं वार्त्रघ्नीं ददाति त्रयस्त्रिंशच्चैवास्य त्रीणि

अवेशयन्न् । इन्द्राय । उदेहीत्युत्–एहि । इति । सा । रोहिणी । लक्ष्मणा । पष्ठौही । वार्त्रघ्नीति वार्त्र–घ्नी । रूपम् । कृत्वा । त्रयस्त्रिंशतेति त्रयः–त्रिंशता । च । त्रिभिरिति त्रि–भिः । च । शतैः । सह । उदैदित्युत्–ऐत् । तस्मात् । रोहिणीम् । लक्ष्मणाम् । पष्ठौहीम् । वार्त्रघ्नीमिति वार्त्र–घ्नीम् । दद्यात् । यः । एवम् । विद्वान् । रोहिणीम् । लक्ष्मणाम् । पष्ठौहीम् । वार्त्रघ्नीमिति वा-

---

पष्ठौही चतुर्वर्षा । पष्ठं वहतीति 'वहश्च' इति ण्विः, 'वाहः' इति ङीप्, 'वाह ऊठ्' इत्यूठ्, 'एत्येधत्यूठ्सु' इति वृद्धिः । वार्त्रघ्नी द्विरूपेत्येके । इन्द्ररूपधारिणीत्यन्ये । गतमन्यत् । 'षपूर्वस्य' इत्यादिना अल्लोपः, वृषादित्वादाद्युदात्तत्वम् । सा दत्ता भवतीति सैवैका दत्ता त्रयस्त्रिंशदधिकशतत्रयतुल्या भवतीति ।

च शतानि सा दत्ता ॥ २३ ॥ भवति तामप्सु प्रावेशयन् यमायोदेहीति सा जरती मूर्खा तज्जघन्या रूपं कृत्वा त्रयस्त्रिंशता च त्रिभिश्चं शतैस्सहोदैत्तस्माज्जरतीं मूर्खां त-

त्रै—ग्रीम् । ददाति । त्रयस्त्रिंशदिति त्रयः—त्रिंशत् । च । एव । अस्य । त्रीणि । च । शतानि । सा । दत्ता ॥ २३ ॥ भवति । [5]ताम् । अप्स्विति अप्—सु । प्रेति । अवेशयन् । यमाय । उदेहीत्युत्—एहि । इति । सा । जरती । मूर्खा । तज्जघन्येति तत्—जघन्या । रूपम् । कृत्वा । त्रयस्त्रिंशतेति त्रयः—त्रिंशता । च । त्रिभिरिति त्रि—भिः । च । शतैः । सह । उदैदित्युत्—ऐत् । त-

---

क्व पुनरियं दातव्या भवति? उक्तमाचार्येण—'सङ्ग्रामं जित्वा राजन्ये एतां दद्यात्' इति । तत्र वचनात् प्रकरणं बाध्यते ॥

[5]पुनरपि प्रावेशयन् यमायेति ॥ जरती वृद्धा । जीर्यतेरतृन् । मूर्खा रोषणशीला । तज्जघन्या जघन्यरूपा जाता । दुश्शीलेत्यन्ये । सैव जघन्या तज्जघन्या, नेदृश्यन्या जघन्यास्तीति । तस्मादित्यादि । ईदृशीमनुस्तरणीं पितृमेधे कुर्वीत । मृताय या

जघन्यामनुस्तरणीं कुर्वीत य एवं
विद्वाञ्जरतीं मूर्खां तंज्जघन्यामनुस्त-
रणीं कुरुते त्रयस्त्रिंशञ्चैवास्य त्री-
णिं च शतानि साऽमुष्मिन्लोके भ-
वति वागेव संहस्रतमी तस्मात्

स्मात् । जरतीम् । मूर्खाम् । तज्जघन्यामिति तत्--
जघन्याम् । अनुस्तरणीमित्यनु--स्तरणीम् । कु-
र्वीत । यः । एवम् । विद्वान् । जरतीम् । मूर्खाम् ।
तज्जघन्यामिति तत्--जघन्याम् । अनुस्तरणीमि-
त्यनु--स्तरणीम् । कुरुते । त्रयस्त्रिंशदिति त्रयः--
त्रिंशत् । च । एव । अस्य । त्रीणि । च । श-
तानि । सा । अमुष्मिन् । लोके । भवति । [6]वाक् ।

---

हन्यते सानुस्तरणी । अनु स्तीर्यते इत्यनुस्तरणिः, कर्मणि ल्युट् । अत्रापि वचनात्प्रकरणबाधः । साऽमुष्मिन्निति । सा एवैका गौरमुष्मिन् लोके अस्य दातुः मृतस्य वा त्रयस्त्रिंशदधिकशतत्रयसङ्ख्यया परिणता भोगाय भवतीति ॥

[6]वागेवेत्यादि ॥ एवं दर्शितरूपत्रया एकोनसहस्रा या सहस्रतमी सा वागेव स्वयं प्रकृष्टतमेति यावत् । तस्माद्वरो देयः । सहस्रदक्षिणेऽमुष्मिन् सहस्रं दत्तं भवतीति भावः । कः पुनस्स द्रव्यविशेष इत्याह--सा हीति । एषा खलु सहस्रतमी उत्कृष्टो

॥ २४ ॥ वरो देयस्सा हि वरस्सह-
स्रमस्य सा दत्ता भवति तस्माद्वरो
न प्रतिगृह्यस्सा हि वरस्सहस्रम-
स्य प्रतिगृहीतं भवतीयं वर इति

एव । सहस्रतमीति सहस्र–तमी । तस्मात्॥२४॥
वरः । देयः । सा । हि । वरः । सहस्रम् । अस्य ।
सा । दत्ता । भवति । तस्मात् । वरः । न । प्रति-
गृह्य इति प्रति–गृह्यः । सा । हि । वरः । सह-
स्रम् । अस्य । प्रतिगृहीतमिति प्रति–गृहीतम् ।
भवति । [7]इयम् । वरः । इति । ब्रूयात् । अथ ।
अन्याम् । ब्रूयात् । इयम् । मम । इति । तथा ।

---

द्रव्यविशेषः, सर्वस्माद्गोसहस्राद्भागात्मकत्वात् । तस्मात्सैवैका दत्ता अस्य दातुस्सहस्रं भवति । तस्मादेव हेतोर्वरो विशिष्टो द्रव्यविशेषः सहस्रतम्यादिः न प्रतिगृह्यः न प्रतिगृहीतव्यः । 'प्रत्यपिभ्यां ग्रहेः' इति क्यप् । हेतुमाह—सा हीति । सा खलु सहस्रतमी विशिष्टद्रव्यात्मिका, तामेव चायं ददाति, तस्मात्तत्परिग्रहे सहस्रमस्य प्रतिगृहीतं भवति । ततश्च सहस्रस्य प्रतिग्रहदोषः ॥

[7]समाधत्ते—इयं वर इति ॥ 'इयं वरः' इति सहस्रतमीं प्रतिग्राहयिता ब्रूयात् । अथान्यामन्यो ब्रूयात् 'इयं मम'

ब्रूयादथान्यां ब्रूयादियं ममेति त-
थाऽस्य तथ्सहस्रमप्रतिगृहीतं भव-
त्युभयतएनी स्यात्तदाहुरन्यतएनी
स्याथ्सहस्रं परस्तादेतमिति यैव व-
रः ॥ २५ ॥ कल्याणी रूपसमृद्धा

अस्य । तत् । सहस्रम् । अप्रतिगृहीतमित्यप्रति–
गृहीतम् । भवति । [8]उभयतएनीत्युभयतः–एनी ।
स्यात् । तत् । आहुः । अन्यतएनीत्यन्यतः–एनी ।
स्यात् । सहस्रम् । परस्तात् । एतम् । इति । या ।
एव । वरः ॥ २५ ॥ कल्याणी । रूपसमृद्धेति रू-
प–समृद्धा । सा । स्यात् । सा । हि । वरः । स-

---

इति । तथा सति 'इयं वरः' इति वचनात् तेन सहस्रं दत्तं भवति । इयं ममेत्यन्यस्या वचनात् इतरेण सहस्रं प्र[मप्र]तिगृहीतं भवति ॥

[8]उभयतएनीत्यादि ॥ व्यत्ययेन 'नञ्कुनिपातानाम्' इति वचनात्समासान्तोदात्तत्वमेव । तदाहुरिति ॥ तत्राहुरन्ये इत्यर्थः । अन्यतः एकपार्श्वे शुक्ला सहस्रतमी स्यात् । परस्तात् इतरस्मिन् भागे सहस्रभूतमेतं शुक्लं स्यात् । उभयमिदं तुल्यं, तस्यास्सहस्रेण तुल्यत्वात् इत्येवमस्यास्स्तुतिः । पक्षान्तरमाह—यैवेति । या वरद्रव्यात्मिका कल्याणगुणवती रूपसमृद्धा शोभनरूपा च ।

सा स्याथ्सा हि वरस्समृंद्ध्यै तामु-
त्तरेणाग्नींध्रं पर्याणीयांहवनीयस्या-
न्तें द्रोणकलशमवं घ्रापयेदा जिंघ्र
कलशं मह्युरुधारा पयस्वत्या त्वां
विशन्त्विन्दंवस्समुद्रमिंव सिन्धंव-

मृंद्ध्या इति सं-ऋद्ध्यै । [9]ताम् । उत्तरेणेत्युत्-त-रेण । आग्नींध्रमित्याग्नि-इध्रम् । पर्याणीयेति प-रि-आनीयं । आहवनीयस्येत्यां-हवनीयंस्य । अ-न्तें । द्रोणकलशमिति द्रोण-कलशम् । अवेति । घ्रापयेत् । एति । जिघ्र । कलशंम् । महि । उरु-

---

'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरत्वम् । सा स्याद्देया सहस्रमध्ये सा हि तद्रूपा हि वरो भवति । तस्मात्सा दातुस्समृद्ध्यै भवति । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् ॥

[9]तामुत्तरेणेत्यादि ॥ अग्नीधश्शरणमाग्नीध्रम् । 'अग्नीधश्शरणे च' इति रण् । तदुत्तरेण तां गां पर्याणीय परित आनीयाहवनीयस्यान्ते समीपे 'आ जिघ्र' इति मन्त्रेण द्रोणकलशमवघ्रापयेत् । इयं च सप्तपदा शक्करी सर्वे च पादा अष्टाक्षराः । हे महि मंहनीये कलशमाजिघ्र आभिमुख्येन जिघ्र । उरुधारा विस्तीर्णधारा त्वं पयस्वती बहुक्षीरा, त्वां इन्दवस्सोमरसाः आविशन्तु समुद्रमिव नद्यः सा त्वमेवंविशिष्टा मां सहस्र

स्सा मां सहस्र आ भंज प्रजयां
पशुभिस्सह पुनर्माऽऽ विंशताद्रयि-
रिति प्रजयैवैनं पशुभीं रय्या सम् ॥
॥ २६ ॥ अर्धयति प्रजावांन्पशुमा-
न्रंयिमान्भंवति य एवं वेद तयां

धारेत्युरु—धारा । पयंस्वती । एति । त्वा । विश-न्तु । इन्दंवः । समुद्रम् । इव । सिन्धंवः । सा । मा । सहस्रे । एति । भज । प्रजयेति प्र—जयां । पशुभिरिति पशु—भिः । सह । पुनः । मा । एति । विशतात् । रयिः । इति । प्रजयेति प्र—जयां । एव । एनम् । पशुभिरिति पशु—भिः । रय्या । समिति ॥ २६ ॥ अर्धयति । प्रजावानिति प्रजा—वान् । पशुमानिति पशु—मान् । रयिमानिति र-यि—मान् । भवति । यः । एवम् । वेद । [10]तयां ।

आभज स्वामित्वेन स्थापय । निमित्तसप्तमी वा । सहस्रार्थमा-भज । प्रजया पशुभिश्च सह त्वत्प्रसादात् पुनर्मा विशतात् दानानन्तरमेव गोसहस्रलक्षणा रयिर्मा प्राप्नोतु । प्रजयेत्यादि ॥

[10]तया सहेत्यादि ॥ आग्नीध्रं परेत्य परागत्य तस्याः पुर-स्तात् प्रतीच्यां तिष्ठन्त्यां प्रत्यङ्मुख्यां 'उभा जिग्यथुः'* इति

*सं. ३-२-११.

सहाग्नीध्रं परेत्य पुरस्तात्प्रतीच्यां तिष्ठन्त्यां जुहुयादुभा जिग्यथुर्न प- रा जयेथे न परा जिग्ये कतरश्चनै- नोः । इन्द्रश्च विष्णो यदपस्पृधेथां त्रेधा सहस्रं वि तदैरयेथामिति त्रे-

सह । आग्नीध्रमित्याग्नि–इध्रम् । परेत्येति परा–इत्य । पुरस्तात् । प्रतीच्याम् । तिष्ठन्त्याम् । जुहुयात् । उभा । जिग्यथुः । न । परेति । जयेथे इति । न । परेति । जिग्ये । कतरः । चन । एनोः । इन्द्रः । च । विष्णो इति । यत् । अपस्पृधेथाम् । त्रेधा । सहस्रम् । वीति । तत् । ऐरयेथाम् । इति । [11]त्रेधाविभक्तमिति त्रेधा–विभक्तम् । वै । त्रिरात्र

जुहोति—त्रिष्टुबियं 'प्रसो अग्ने'* इत्यत्र व्याख्याता । एवं दर्शितौ उभावपि युवां सर्वधा जिग्यथुः जयथः न कदा चिदपि पराजयेथे । तथा हि—एनयोर्मध्ये कतरश्च एकतरोपि न कदाचित्पराजिग्ये । किं च—हे विष्णो त्वं च इन्द्रश्च यदपस्पृधेथां स्पर्धां कृतवन्तौ यथा 'तस्यामिन्द्रश्च विष्णुश्च व्यायच्छेताम्'† इति तद्रवां सहस्रं त्रेधा व्यैरयेथां विभक्तवन्तौ विभज्य च व्यवस्थितवन्तौ द्विभागे इन्द्रः तृतीये त्वमिति ॥

[11]तदिदमनेन मन्त्रेणोक्तमिति दर्शयति—त्रेधा विभक्तं वा इत्यादि ॥ गतम् । साहस्रीं सहस्रस्य संबन्धिनीं सहस्रतमीमेवैनां करोति

*सं ३-२-११. †सं. ७-१-५.

धाविभक्तं वै त्रिरात्रे सहस्रꣳ साह-
स्रीमेवैनां करोति सहस्रस्यैवैनां
मात्राम् ॥ २७ ॥ करोति रूपाणि
जुहोति रूपैरेवैनाꣳ समर्धयति त-
स्या उपोत्थाय कर्णमा जपेदिडे

इति त्रि–रात्रे । सहस्रम् । साहस्रीम् । एव । ए-
नाम् । करोति । सहस्रस्य । एव । एनाम् ।
मात्राम् ॥ २७ ॥ करोति । रूपाणि । जुहोति ।
रूपैः । एव । एनाम् । समिति । अर्धयति ।
[12]तस्याः । उपोत्थायेत्युप–उत्थाय । कर्णम् ।
एति । जपेत् । इडे । रन्ते । अदिते । सर-

त्रेधाविभक्तसहस्रानुवादेन । किं च—सहस्रस्य मात्रां तुल्यप्रमाणामेनां करोति । मीयतेऽनयेति मात्रा उपमानम् । रूपाणीत्यादि।यान्यश्वमेधे प्रसिद्धानि 'अञ्चेताय'* इत्यादीनि रूपाणि तानि यथार्थमूहित्वा जुहोति रूपसमृद्धामेनां करोति ॥

[12]तस्या उपोत्थाय कर्णसमीपमागत्य स्थित्वा जपेत्—इडे रन्ते इति इयं विराट्चतुष्पदा ॥ सर्वाण्येतान्यामन्त्रितानि 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यविद्यमानत्वान्निघाताभावः, ततष्षाष्टिकमाद्युदात्तत्वम् । अष्टौ गाव एताः, तादात्म्येन संस्तूयते । तेन 'नामन्त्रिते समानाधिकरणम्' इति निषेधाभावः । तेन पदात्परत्वा-

*सं. ७-३-१७.

रन्तेऽदिते सरस्वति प्रिये प्रेयसि म-
हि विश्रुत्येतानि ते अघ्निये नामानि
सुकृतं मा देवेषु ब्रूतादिति देवेभ्य
एवैनमा वेदयत्यन्वेनं देवा बुध्यन्ते॥

स्वति । प्रिये । प्रेयसि । महि । विश्रुतीति वि-श्रुति । एतानि । ते । अघ्निये । नामानि । सुकृतमिति सु-कृतम् । मा । देवेषु । ब्रूतात् । इति । देवेभ्यः । एव । एनम् । एति । वेदयति । अन्विति । एनम् । देवाः । बुध्यन्ते ॥ २८ ॥

एतदेतस्या वीर्यमस्य त्रिभिश्च दत्ता सहस्र-
तमी तस्मादेव वरस्सं मात्रामेकान्न
चत्वारिꣳशञ्च ॥ ६ ॥

---

भावात् षाष्टिकमाद्युदात्तत्वमेव । हे इडे अन्नवति, रन्ते रतिहेतो, अदिते अखण्डिते, सरस्वति सरणवति, प्रिये सर्वस्य प्रीणयित्रि, प्रेयसि प्रियतरे रत्नादेरपि, महि महनीये, विश्रुति विशेषेण श्रुते । 'क्तिच्क्तौ च' इति क्तिच्, 'कृदिकारादक्तिनः' इति ङीष् । हे अघ्निये अहन्तव्ये आयुष्मति एतानि तव नामानि, सा त्वं किं नाम न कुर्याः, किं वा कर्तुं न शक्यं त्वया । सा तादृशी महानुभावा त्वं देवेषु सुकृतं शोभनकर्माणं मां ब्रूयात् अविदयतादित्याशास्ते । 'सुकर्मपाप' इत्यादिना क्विप् । देवेभ्य इत्यादि । एवमनेन प्रार्थिता सा देवेभ्य एवमावेदयत्येव । आवेदनानन्तरं च एनं देवा बुद्ध्यन्ते सुकर्माणं निश्चिन्वन्ति ॥

इति सप्तमे प्रथमे षष्ठोनुवाकः.

सहस्रतम्यां वै यजमानस्सुवर्गं लो-
कमेति सैनꣳ सुवर्गं लोकं गंमयति
सा मां सुवर्गं लोकं गंमयेत्याह
सुवर्गमेवैनं लोकं गंमयति सा मा
ज्योतिष्मन्तं लोकं गंमयेत्याह
ज्योतिष्मन्तमेवैनं लोकं गंमयति

[1]सहस्रतम्येति सहस्र–तम्यां । वै । यजमानः सुवर्गमिति सुवः–गम् । लोकम् । एति । सा एनम् । सुवर्गमिति सुवः–गम् । लोकम् । गमयति । सा । मा । सुवर्गमिति सुवः–गम् । लोकम् । गमय । इति । आह । सुवर्गमिति सुवः–गम् । एव । एनम् । लोकम् । गमयति । सा । मा । ज्योतिष्मन्तम् । लोकम् । गमय । इति । आह । ज्योतिष्मन्तम् । एव । एनम् । लोकम् ।

---

[1]सहस्रतम्येत्यादि ॥ सहस्रतम्या यजमानस्स्वार्गं गच्छति सा चैनं स्वर्गं गमयति यद्येतैर्मन्त्रैस्स्तुता । तस्मात् 'सा मा सुवर्गम्' इत्यादिभिरुदीचीं नीयमानामनुमन्त्रयते सा त्वं गच्छन्ती मां सुवर्गं लोकं गमयेति, सुवर्गं गमयेत्येव । एक एव मन्त्रोऽवयुत्यैव ब्राह्मणेन व्याख्यायते । गता मन्त्राः, ब्राह्मणानि च । ज्यो-

सा मा सर्वान्पुण्यांल्लोकान्गमये-
त्याह सर्वानेवैनं पुण्यांल्लोकान्गम-
यति सा ॥ २१ ॥ मा प्रतिष्ठां गं-
मय प्रजया पशुभिस्सह पुनर्माऽऽ
विंशताद्रयिरिति प्रजयैवैनं पशुभी
रय्यां प्रतिष्ठापयति प्रजावान्पशुमा-

गमयति । सा । मा । सर्वान् । पुण्यान् । लोकान् । गमय । इति । आह । सर्वान् । एव । एनम् । पुण्यान् । लोकान् । गमयति । सा॥२१॥ मा । प्रतिष्ठामिति प्रति-स्थाम् । गमय । प्रजयेति प्र-जया । पशुभिरिति पशु-भिः । सह । पुनः । मा । एति । विशतात् । रयिः । इति । प्रजयेति प्र-जया । एव । एनम् । पशुभिरिति पशु-भिः । रय्याम् । प्रतीति । स्थापयति । प्रजावानिति प्रजा-वान् । पशुमानिति पशु-मान् । रयिमानिति रयि-मान् । भवति । यः । एवम् ।

---

तिष्मान् लोकः आदित्यः । पुण्या लोका इन्द्रादीनां लोकाः ब्रह्मलोकपर्यन्ताः । प्रतिष्ठा प्रजादिभिस्सहास्मिन् लोके धनविषयमैश्वर्यम् । प्रजावानित्यादि । विदुषस्सिद्धिः ॥

र्य॒यि॒मान्भ॑वति॒ य ए॒वं वेद॒ ताम॒-
ग्नीधे॑ वा ब्र॒ह्मणे॑ वा॒ होत्रे॑ वोद्गा॒त्रे वा॑ऽ-
ध्व॒र्यवे॑ वा दद्या॒त्स॒हस्र॑मस्य॒ सा द॒त्ता
भ॑वति स॒हस्र॑मस्य॒ प्रति॑गृहीतं भवति॒
यस्ताम॑विद्वान् ॥ ३० ॥ प्र॒ति॒गृ॒-
ह्णाति॒ तां प्रति॑ गृह्णी॒यादेका॑ऽसि॒ न
स॒हस्र॒मेकां॑ त्वा भू॒तां प्रति॑ गृह्णामि॒

वेद॑ । [2]ताम् । अ॒ग्नीध॒ इत्य॑ग्नि–इधे॑ । वा॒ । ब्र॒ह्मणे॑ । वा॒ । होत्रे॑ । वा॒ । उ॒द्गात्र इत्यु॑त्–गा॒त्रे । वा॒ । अ॒ध्व॒र्यवे॑ । वा॒ । द॒द्या॒त् । स॒हस्र॑म् । अ॒स्य॒ । सा । द॒त्ता । भ॒व॒ति॒ । स॒हस्र॑म् । अ॒स्य॒ । प्रति॑गृहीत॒मिति॒ प्रति॑–गृ॒ही॒त॒म् । भ॒व॒ति॒ । यः । ताम् । अवि॑-द्वान् ॥३०॥ प्र॒ति॒गृ॒ह्णा॒तीति॑ प्रति–गृ॒ह्णाति॑ । ताम् । प्रतीति॑ । गृ॒ह्णी॒या॒त् । एका॑ । अ॒सि॒ । न । स॒हस्र॑म् । एका॑म् । त्वा॒ । भू॒ताम् । प्रतीति॑ । गृ॒ह्णा॒मि॒ । न ।

---

[2]तामित्यादि ॥ गतम् । सहस्रमस्येत्यादि । यस्तामविद्वानिति । विशेषं वक्ष्यामीति पुनर्वचनम् । अविदुषा प्रतिगृह्णता सहस्रं प्रतिगृहीतं भवति तस्मादेवं विदित्वा तां प्रतिगृह्णीयात्—'एकाऽसि' इत्यादिना मन्त्रेण 'सुशेवामाविश' इत्यन्तेन । एका त्वमसि न

न सहस्रमेका मा भूताऽऽविश मा
सहस्रमित्येकामेवैनां भूतां प्रति गृह्णा-
ति न सहस्रं य एवं वेद स्योनाऽसि
सुषदा सुशेवा स्योना माऽऽविश सु-
षदा माऽऽ विश सुशेवा माऽऽविश ॥
इत्याह स्योनैवैनꣳ सुषदा सुशेवा

सहस्रम् । एका । मा । भूता । एति । विश । मा।
सहस्रम् । इति । [3]एकाम् । एव । एनाम् । भू-
ताम् । प्रतीति । गृह्णाति । न । सहस्रम् । यः ।
एवम् । वेद । स्योना । असि । सुषदेति सु—सदा।
सुशेवेति सु—शेवा । स्योना । मा । एति । विश ।
सुषदेति सु—सदा । मा । एति । विश । सुशेवेति
सु—शेवा । मा । एति । विश ॥३१॥ इति । आ-
ह । स्योना । एव । एनम् । सुषदेति सु—सदा ।

---

सहस्रं, तस्मादेकामेव भूतां त्वां प्रतिगृह्णामि, न सहस्रभूतां, तस्मात्त्वमप्येकैव भूता मामाविश, मा सहस्रभूता ॥

[3]एकामेवेत्यादि ॥ विदुषो ब्राह्मणम् । स्योना सुखहेतुरस्माकं, सुपरिचारा वा त्वमसि । सुषदा सुखेन सदनीया दोहनादाविति । खलि कृदुत्तरपदप्रकृतिस्वरत्वम् । सुशेवा सुफला बहुदुग्ध-

भूताऽऽविशति नैनꣳ हिनस्ति ब्रह्म-
वादिनो वदन्ति सहस्रꣳ सहस्रत-
म्यन्वेती३ सहस्रतमीꣳ सहस्रा३-
मिति यत्प्राचीमुथ्सृजेथ्सहस्रꣳ स-
हस्रतम्यन्वियात्तथ्सहस्रमप्रज्ञात्रꣳ

सुशेवेति सु-शेवा। भूता। एति। विशति। न। एनम्। हिनस्ति। [4]ब्रह्मवादिन इति ब्रह्म-वादिनः। वदन्ति। सहस्रम्। सहस्रतमीति सहस्र-तमी। अन्विति। एती३। सहस्रतमीमिति सहस्र-तमीम्। सहस्रा३म्। इति। [5]यत्। प्राचीम्। उत्सृजेदित्युत्-सृजेत्। सहस्रम्। सहस्रतमीति सहस्र-तमी।

---

त्वात्। 'आद्युदात्तश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्। सा त्वं तादृशी स्योना अविगुणा सती मामाविश यथा मे न कदाचिदपि हिंसा स्यात् तथा मामाविशेति। स्योनैवेत्यादि। ब्राह्मणम्। गतम्॥

[4]ब्रह्मवादिन इत्यादि॥ किं सहस्रं सहस्रतम्यन्वेति अनुगच्छति? उत सहस्रं सहस्रतमीमन्वेति। उभयत्र 'विचार्यमाणानाम्' इति प्लुतः। एवं ब्रह्मवादिनो विचारं वदन्ति॥

[5]इदानीं पक्षद्वयस्योत्थापनं फलभेदं चाह—यत्प्राचीमित्यादि॥ यत् यद्यर्थे। यद्येनां प्राचीमुत्सृजेत् सहस्रतमी सहस्रमन्वियात् अनुगच्छेत् अग्रे सहस्रं गच्छेत् तत्सहस्रतम्यनुगच्छेत्। ततश्च

सुवर्गं लोकं न प्र जानीयात्प्रतीची-
मुथ्सृजति ताᳬ सहस्रमनु पर्यावं-
र्तते सा प्रजानती सुवर्गं लोकमेति
यजमानमभ्युथ्सृजति क्षिप्रे स-

अन्विति । इयात् । तत् । सहस्रम् । अप्रज्ञात्रमि-
त्यप्र—ज्ञात्रम् । सुवर्गमिति सुवः—गम् । लोकम् ।
न । प्रेति । जानीयात् । प्रतीचीम् । उदिति । सृ-
जति । ताम् । सहस्रम् । अन्विति । पर्यावर्तत इ-
ति परि—आवर्तते । सा । प्रजानतीति प्र—जानती।
सुवर्गमिति सुवः—गम् । लोकम् । एति । यजमा-
नम् । अभि । उदिति । सृजति । क्षिप्रे ।

---

तत्सहस्रमप्रज्ञात्रं प्रज्ञानरहितं स्वर्गं न प्रजानीयात् ततश्च स्वर्गं न गच्छेत् यजमानः, प्रकृष्टज्ञानं प्रज्ञात्रम् । औणादिकस्त्रप्रत्ययः, बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् । तस्मात्प्रतीची-मुत्सृजतीति विधिः । 'चौ' इति पूर्वपदस्य दीर्घत्वम्, अन्तो-दात्तत्वं च । तां सहस्रतमीमग्रे गच्छन्तीं सहस्रमनु पर्यावर्तते अनु गच्छति । 'गतिर्गतौ' इति पूर्ववन्निघातस्समासश्च । अनुः कर्मप्र-वचनीय उदात्त एव । सा च प्रजानती सुवर्गं गच्छति । 'शतुरनुमः' इति नद्या उदात्तत्वम् । तत्र चैवं वक्तव्यमित्याह— यजमानमभि यजमानं लक्षीकृत्य तामुत्सृजति, ततश्च क्षिप्रे काले

हस्रं प्र जायत उत्तमा नीयते प्र-
थमा देवान्गच्छति ॥ ३२ ॥
अत्रिरददादौर्वाय प्रजां पुत्रकामा-

सहस्रम् । प्रेति । जायते । उत्तमेत्युत्-तमा । नी-
यते । प्रथमा । देवान् । गच्छति ॥ ३२ ॥

लोकान्गमयति साऽविद्वान्त्सुशेवा माऽऽविश
यजमानं द्वादश च ॥ ७ ॥

[1]अत्रिः । अददात् । और्वाय । प्रजामिति प्र-
जाम् । पुत्रकामायेति पुत्र-कामाय । सः । रिरि-

---

सहस्रं बहु प्रजायते यजमानः । उत्तमा नीयते पश्चात्सर्वान्ते नीयते । प्रथमा देवान् गच्छति प्रथममेव यजमानमपि गृहीत्वा देवसकाशं गच्छति । उत्तमशब्दः उञ्छादित्वादन्तोदात्तः ॥

इति सप्तमे प्रथमे सप्तमोनुवाकः.

---

[1]अथ चत्वारश्चतूरात्रा भवन्ति आत्रेयजामदग्न्यवसिष्ठसंसर्प विश्वामित्रसंजयाख्याः । तत्रात्रेयाश्च षष्ठोमाचतुरा[....याश्चतुर्वीरषोडशिमच्चतुर्थी]दिनामानः चत्वारश्चतूरात्राः । जामदग्न्यादीनां त्रयाणां चैक इति । तत्रात्रेयचतूरात्रेषु चतुर्षु प्रथमं चतुर्वीराख्यं चतूरात्रं विधातुमाह—अत्रिरददादित्यादि ॥ ऊर्वपुत्रः और्वः । 'अनृष्यानन्तर्ये' इति बिदा-

य स रिरिचानोमन्यत निर्वीर्यश्शि-
थिलो यातयामा स एतं चतूरात्र-
मपश्यत्तमाऽहरत्तेनायजत ततो वै
तस्य चत्वारो वीरा आऽजायन्त
सुहोता सूद्गाता स्वध्वर्युस्सुसंभेयो

चानः । अमन्यत । निर्वीर्य इति निः–वीर्यः । शिथिलः । यातयामेति यात–यामा । [2]सः । एतम् । चतूरात्रमिति चतुः–रात्रम् । अपश्यत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । तस्य । चत्वारः । वीराः । एति । अजायन्त । सुहोतेति सु–होता । सूद्गातेति सु–उद्गाता । स्वध्वर्युरिति सु–अध्वर्युः । सुसंभेय इति सु–सभे-

दित्वादञ् । तस्मै और्वाय पुत्रकामायात्मीयां प्रजामपत्यत्वेनाददात् । पुत्रं कामयत इति 'शीलिकामि' इत्यादिना णः, पूर्वपदप्रकृतिस्वरत्वं च । अथ स रिरिचानः रिच्यमानः प्रजारहितः इत्थममन्यत—निर्वीर्यः प्रजोत्पादनसामर्थ्यरहितोस्मि, शिथिलः कार्याक्षमः यातयामा गतसारश्चास्मि ॥

[2]स एतं चतूरात्रमित्यादि ॥ गतम् । आहरत् आहरत । तेनायजत तेन कर्मणा देवानपूजयत् । ततस्तस्यात्रेः चत्वारो वीरा आजायन्त, आभिमुख्ये मर्यादायां वा । सुहोता सूद्गाता

य एवं विद्वाꣳश्चतूरात्रेण यजंत आऽस्यं चत्वारो वीरा जायन्ते सुहोता सूद्गाता स्वध्वर्युस्सुसंभेयो ये चतुर्विꣳशाः पवमाना ब्रह्मवर्चसं

यः । यः । एवम् । विद्वान् । चतूरात्रेणेति चतुः—रात्रेण । यजंते । एति । अस्य । चत्वारः । वीराः । जायन्ते । सुहोतेति सु—होता । सूद्गातेति सु—उद्गाता । स्वध्वर्युरिति सु—अध्वर्युः । सुसंभेय इति सु—सभेयः । [3]ये । चतुर्विꣳशा इति चतुः—विꣳशाः । पवमानाः । ब्रह्मवर्चसमिति ब्रह्म—वर्च-

---

स्वध्वर्युः सुसभेयः । शोभनत्वं च होत्रादीनां आत्मीयसमस्तवेदव्याख्यानकुशलत्वम् । सभायां साधुस्सभेयः, 'छन्दसि' इति ढः । सर्वयज्ञप्रयोगवित् सुसभेयस्सदस्य इत्येते । सर्वत्राव्ययपूर्वपदप्रकृतिस्वरत्वम् । द्वितीये 'स्वरितो वा नुदात्ते पदादौ' इत्येकादेशस्स्वर्यते, तृतीये 'उदात्तस्वरितयोर्यणः' इत्यादिना । य एवमित्यादि । गतम् ॥

[3]ये चतुर्विंशा इत्यादि ॥ चतुर्विंशस्तोत्रियास्त्रयोपि पवमानाबहिष्पवमानादयो भवन्ति ब्रह्मवर्चसं तत् गायत्रसामान्यात् । चतुर्विंशस्य 'चतुर्विंशत्यक्षरा गायत्री'* इति कृत्वा, तद्धेतुत्वात्ताच्छब्द्यम् ।

---

*सं. २-५-१०.७

तत् ॥ ३३ ॥ य उद्यन्तस्स्तोमा-
श्श्रीस्साऽत्रिꣳ श्रद्धादेवं यजमानं
चत्वारि वीर्याणि नोपानमन्तेजं इ-
न्द्रियं ब्रह्मवर्चसमन्नाद्यꣳ स एताꣳ-

सम् । तत् ॥ ३३ ॥ ये । उद्यन्त इत्युत्-यन्तः । स्तोमाः । श्रीः । सा । [4]अत्रिम् । श्रद्धादेवमिति श्रद्धा-देवम् । यजमानम् । चत्वारि । वीर्याणि । न । उपेति । अनमन् । तेजः । इन्द्रियम् । ब्रह्म-वर्चसमिति ब्रह्म-वर्चसम् । अन्नाद्यमित्यन्न-अ-द्यम् । सः । एतान् । चतुरः । चतुष्टोमानिति च-

---

य उद्यन्तस्स्तोमा भवन्ति उत्तरोत्तरमहीयांसः यथा—त्रिवृत्प्रथममहः, पञ्चदशो द्वितीयः, सप्तदशस्तृतीयः, एकविंशश्चतुर्थ इति सा स्वयं श्रीः । पूर्ववत्ताच्छद्ब्यम् । त्रिवृत्प्रथमस्याह्नः प्रातस्सवनम्, पञ्चदशं माध्यन्दिनं सवनम्, सप्तदशं तृतीयं सवनम्, अथ द्वितीयस्याह्नः पञ्चदशं प्रातस्सवनं, सप्तदशं माध्यन्दिनं सवनम् । एकविंशं तृतीयसवनम् । अथ तृतीयस्याह्नस्सप्तदशं प्रातस्सवनम्, एकविंशं माध्यन्दिनं सवनं, त्रिणवं तृतीयसवनम् । चतुर्थस्याह्नः एकविंशं प्रातस्सवनम्, त्रिणवं माध्यन्दिनं सवनम्, त्रयस्त्रिंशं तृतीयसवनम्, एवमुद्यन्तस्स्तोमाः श्रीरिति ॥

[4]अत्रिमित्यादि ॥ श्रद्धादेवं श्रद्धाप्रधानं वीर्याणि वीर्यहेतुभूतानि तेजः प्रभृतीनि नोपानमन् नोपागच्छन् । सोत्रिः एतान् चतुरश्च-

श्चतुरश्चतुष्टोमान्थ्सोमानपश्यत्तानाऽ-
हरत्तैरयजत तेज एव प्रथमेनावारु-
न्धेन्द्रियं द्वितीयेन ब्रह्मवर्चसं तृती-
येनान्नाद्यं चतुर्थेन य एवं विद्वाꣳश्-
श्चतुरश्चतुष्टोमान्थ्सोमानाहरति तैर्य-
जते तेज एव प्रथमेनाव रुन्ध इन्द्रियं

तुः—स्तोमान् । सोमान् । अपश्यत् । तान् । एति । अहरत् । तैः । अयजत । तेजः । एव । प्रथमेन । अवेति । अरुन्ध । इन्द्रियम् । द्वितीयेन । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । तृतीयेन । अन्नाद्यमित्यन्न—अद्यम् । चतुर्थेन । [5]यः । एवम् । विद्वान् । चतुरः । चतुष्टोमानिति चतुः—स्तोमान् । सोमान् । आहरतीत्या—हरति । तैः । यजते ।

---

तुष्टोमान् त्रिवृदादिस्तोमकान् स्तोमान् चतूरात्रानपश्यत्, तानाहरत् तैश्चायजत । तत्र प्रथमेन चतूरात्रेण तेजोवरुन्धे, इन्द्रियादीनि च द्वितीयादिभिः ॥

[5]य एवं विद्वानित्यादि ॥ ननु 'यामेवात्रिर् ऋद्धिमार्ध्नोत्' इति किमुच्यते, 'तेज एव प्रथमेन' इत्यादिना गतत्वात् । नैवम्, न तेजः प्रभृत्युपसंहारार्थमिदं भवति, अपि तु यामन्यामप्यत्रिः

द्वितीयेन ब्रह्मवर्चसं तृतीयेनान्नाद्यं
चतुर्थेन यामेवात्रिर् ऋद्धिमार्ध्नोत्ता-
मेव यजमान ऋध्नोति ॥ ३४ ॥

जमदग्निः पुष्टिकाममश्वतूरात्रेणाय-

तेजः । एव । प्रथमेन । अवेति । रुन्धे । इन्द्रियम् । द्वितीयेन । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । तृतीयेन । अन्नाद्यमित्यन्न—अद्यम् । चतुर्थेन । याम् । एव । अत्रिः । ऋद्धिम् । आर्ध्नोत् । ताम् । एव । यजमानः । ऋध्नोति ॥ ३४ ॥

तत्तेज एवाष्टादश च ॥ ८ ॥

[1]जमदग्निः । पुष्टिकाम इति पुष्टि—कामः ।

---

ऋद्धिमार्ध्नोत्, तामपीति प्रतिपादयितुम् । तेन 'तस्य चत्वारो वीरा आऽजायन्त '* इत्येतदपि संगृहीतं भवति । ऋद्धिमार्ध्नोदिति गोपोषं पुष्णातीतिवद्द्रष्टव्यम् ॥

इति सप्तमे प्रथमे अष्टमोनुवाकः.

---

[1]अथ जामदग्न्यं चतूरात्रं विधातुमाह—इतरौ तु वसिष्ठसंस-

*सं. ७-१-८[2]

जत स एतान्पोषा॑ँ अपुष्यचस्मा॑-
त्पलितौ जाम॑दग्नियौ न सं जा॑ना-
ते एतानेव पोषा॑न्पुष्यति य एवं

चतूरात्रेणेति॑ चतुः—रा॒त्रेण॑ । अयजत । सः । ए-
तान् । पोषा॑न् । अपुष्यत् । तस्मा॑त् । पलितौ ।
जाम॑दग्नियौ । न । समिति॑ । जानाते इति॑ । ए-
तान् । एव । पोषा॑न् । पुष्यति । यः । एवम् ।

र्पविश्वामित्रसंजयाख्यौ शाखान्तरे द्रष्टव्यौ । जमदग्निरित्या-दि । पुष्टिकामः अन्नपशुपुत्रादिवृद्धिकामश्चतूरात्रेणायजत । चतु-र्णामह्नां समाहारश्चतूरात्रः । 'अहस्सर्वैकदेश' इत्यादिनाऽच्समा-सान्तः । तत एतान्पोषानपुष्यत् । सामान्यपुष्टेर्विशेषपुष्टिः कर्मे-त्युक्तम् । तस्मादित्यादि । अवधारणमत्र द्रष्टव्यम् । पलिता-वेव केवलमिति महापुष्टिरहितौ वृथैव पलितावस्थां प्राप्तौ दरिद्रौ जामदग्न्यौ पितापुत्रौ न संजानाते अद्यत्वेऽपि न जायेते; समा-सादिताशेषपुष्टेः जमदग्नेरन्वये जातत्वात्, सर्वेषां सुपुष्टत्वात् । जनेर्व्यत्ययेन श्ना । यद्वा—जानातेरेव कर्मणि लट्, व्यत्य-येन श्ना । तादृशौ न ज्ञायेते, न स्त एवेति यावत् । यद्वा—'संप्रतिभ्यां' इत्यात्मनेपदम् । वृथा पलितात्मानौ*जामदग्न्यौ न संजानाते न प्रतिजानाते । अस्त्वेकः पुष्टिरहितः तथाऽपि आन-न्तर्येण द्वौ दरिद्रौ न स्त इति ख्यापनार्थं द्वयोरुपादानम् । जमदग्निशब्दो गर्गादिः । एतानेवेत्यादि । विदुषः ॥

*पलितावात्मानं.

विद्वाꣳश्चतूरात्रेण यजते पुरोडाशिन्य उपसदो भवन्ति पशवो वै पुरोडाशः पशूनेवाव रुन्धेऽन्नं वै पुरोडाशोन्नमेवाव रुन्धेऽन्नादः पशुमान्भवति य एवं विद्वाꣳश्चतूरात्रेण यजते ॥ ३५ ॥

विद्वान् । चतूरात्रेणेति चतुः—रात्रेण । यजते । [2]पुरोडाशिन्यः । उपसद इत्युप—सदः । भवन्ति । पशवः । वै । पुरोडाशः । पशून् । एव । अवेति । रुन्धे । अन्नम् । वै । पुरोडाशः । अन्नम् । एव । अवेति । रुन्धे । अन्नाद इत्यन्न—अदः । पशुमानिति पशु—मान् । भवति । यः । एवम् । विद्वान् । चतूरात्रेणेति चतुः—रात्रेण । यजते ॥ ३५ ॥

जमदग्निरष्टाचत्वारिꣳशत् ॥ ९ ॥

---

[2]पुरोडाशिन्य इत्यादि ॥ अत्रोक्तमाचार्येण—'आग्नेय एककपालः आश्विनो द्विकपालः वैष्णवस्त्रिकपालः सौम्यश्चतुष्कपालः सावित्रः पञ्चकपालो धात्रष्षट्कपालः मारुतस्सप्तकपालः बार्हस्पत्योष्टाकपालः मैत्रो नवकपालो वारुणं दशकपालमैन्द्राग्न एकादशकपालो वैश्वदेवो द्वादशकपालो दर्विहोमा भवन्ति' इति । एवमौषध्ययुक्ता द्वादशोपसदो भवन्तीति । पशवो वा इत्यादि । गतम् ॥

इति सप्तमे प्रथमे नवमोनुवाकः.

संवथ्सरो वा इदमेक आसीथ्सो-
कामयतर्तून्थ्सृजेयेति स एतं पंञ्चरा-
त्रमंपश्यत्तमाऽहंरत्तेनायजत ततो वै
स ऋतूनसृजत य एवं विद्वान्पंञ्चरा-
त्रेण यजंते प्रैव जायते त ऋतवं-

[1]संवत्सर इतिं सं—वत्सरः । वै । इदम् । ए-
कः । आसीत् । सः । अकामयत । ऋतून् । सृ-
जेय । इतिं । सः । एतम् । पञ्चरात्रमितिं पञ्च—
रात्रम् । अपश्यत् । तम् । एतिं । अहरत् । तेन ।
अयजत । ततः । वै । सः । ऋतून् । असृजत ।
यः । एवम् । विद्वान् । पञ्चरात्रेणेतिं पञ्च—रात्रे-
णं । यजंते । प्रेतिं । एव । जायते । [2]ते । ऋत-

[1]अथ पञ्च पञ्चरात्रा भवन्ति—संवत्सराख्यः प्रथमः, अ-भ्यासंगो द्वितीयः, उपशारद*स्तृतीयः, अन्तर्महाव्रतश्चतुर्थः, पुरुषमेधः पञ्चमः । तत्र प्रथमो विधीयते—संवत्सरो वा इत्यादि ॥ इतरे त्वभ्यासंगादयः पञ्चरात्राश्शाखान्तरे द्रष्टव्याः । यदिदं दृश्यमानं ऋतुमासनक्षत्रादि, एतदात्माऽयं संवत्सरः पूर्वमेकरूपः ऋत्वादिविभागरहितः आसीत् । सोकमायत ऋत्वादीन् सृजेयेति । यद्वा—ऋतूंस्तावत्सृजेय ततश्च स्वयमेव मासादयो भविष्यन्तीति । स एतमित्यादि । गतम् । एवं विद्वान् प्रजायते प्रजावान्भवतीति ॥

[2]त ऋतव इत्यादि ॥ न व्यावर्तन्त विभक्तस्वभावभाजो

*पञ्चशारदीय.

स्सृष्टा न व्यावर्तन्त त एतं पञ्चरा-
त्रमपश्यन्तमाऽहरन्तेनायजन्त त-
तो वै ते व्यावर्तन्त ॥ ३६ ॥ य एवं
विद्वान्पञ्चरात्रेण यजते वि पाप्मना
भ्रातृव्येणावर्तते सार्वसेनिश्शौचे-
योऽकामयत पशुमान्थ्स्यामिति स

वः । सृष्टाः । न । व्यावर्तन्तेति वि—आवर्तन्त । ते । एतम् । पञ्चरात्रमिति पञ्च—रात्रम् । अप-श्यन् । तम् । एति । अहरन् । तेन । अयजन्त । ततः । वै । ते । व्यावर्तन्तेति वि—आवर्तन्त ॥ ३६ ॥ यः । एवम् । विद्वान् । पञ्चरात्रेणेति पञ्च—रात्रेण । यजते । वीति । पाप्मना । भ्रातृव्येण । एति । वर्तते । [3]सार्वसेनिरिति सार्व—सेनिः । शौ-चेयः । अकामयत । पशुमानिति पशु—मान् ।

---

नाभवन् एकरूपा एव सर्वेऽप्यृतवोभवन् । उक्तौ निघातसमासौ । त एतमित्यादि । गतम् । एवं विद्वान् पाप्मना भ्रातृव्येण च व्यावर्तते तद्रहित एव भवति ॥

[3]सार्वसेनिरित्यादि ॥ सर्वसेनः पिता तस्यापत्यं सार्वसेनिः । 'अत इञ्' । शुचिर्माता तस्या अपत्यम्, 'इतश्चानिञः' इति ढक् । पशुमान्स्यामित्यकामयत । गतमन्यत् ॥

एतं पंञ्चरात्रमाऽहंरत्तेनांयजत ततो
वै स सहस्रं पशून्प्राप्नोद्य एवं वि-
द्वान्पंञ्चरात्रेण यजंते प्र सहस्रं पशू-
नांप्नोति बबरः प्रावांहणिरकामय-
त वाचः प्रंवदिता स्यामिति स एतं
पंञ्चरात्रमा ॥ ३७॥ अहरत्तेनांयज-

स्याम् । इतिं । सः । एतम् । पञ्चरात्रमितिं पञ्च-
रात्रम् । एतिं । अहरत् । तेनं । अयजत । ततंः ।
वै । सः । सहस्रंम् । पशून् । प्रेतिं । आप्नोत् ।
यः । एवम् । विद्वान् । पञ्चरात्रेणेतिं पञ्च-रात्रेणं ।
यजंते । प्रेतिं । सहस्रंम् । पशून् । आप्नोति । [4]ब-
बरः । प्रावांहणिः । अकामयत । वाचः । प्रव-
दितेतिं प्र-वदिता । स्याम् । इतिं । सः ।
एतम् । पञ्चरात्रमितिं पञ्च-रात्रम् । एतिं ॥ ३७॥

---

[4]बबर इत्यादि ॥ प्रावाहाणिः प्रवाहणस्यापत्यं बबरो नामा-कामयत । वाचः कृत्स्नायाः श्रुतिस्मृतिरूपायाः प्रवदिता प्रवक्ता व्याख्याता स्यामिति । यद्वा—वाचः प्रकर्षेण वक्ता स्यामिति । अथो इति । अपि चैनं वाचस्पतिरित्याहुः वाचः प्रभवितेत्याहुः वाचः प्रभुत्वेन लोके ख्यातिं गच्छति । उक्तौ स्वरसमासौ ॥

तं ततो वै स वाचः प्रवदिताऽभव-
द्य एवं विद्वान्पञ्चरात्रेण यजते प्र-
वदितैव वाचो भवत्यथो एनं वाच-
स्पतिरित्याहुरनाप्तश्चतूरात्रोतिरिक्त-
ष्षड्रात्रोथ वा एष संप्रति यज्ञो य-

अहरत् । तेन । अयजत । ततः । वै । सः । वा-
चः । प्रवदितेति प्र-वदिता । अभवत् । यः । ए-
वम् । विद्वान् । पञ्चरात्रेणेति पञ्च-रात्रेण । यजते ।
प्रवदितेति प्र-वदिता । एव । वाचः । भवति ।
अथो इति । एनम् । वाचः । पतिः । इति । आहुः ।
[5]अनाप्तः । चतूरात्र इति चतुः-रात्रः । अतिरिक्त
इत्यति-रिक्तः । षड्रात्र इति षट्-रात्रः । अथ ।
वै । एषः । संप्रतीति सं-प्रति । यज्ञः । यत् । पु-

---

[5]अनाप्त इत्यादि ॥ अत्रैव वक्ष्यते 'पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञः' इति । तेनाभिप्रायेणेदमुच्यते । तत्पाङ्क्तं यज्ञस्वरूपं, अनाप्तः चतूरात्रः ऊनत्वादप्राप्तः । षड्रात्रस्तु पाङ्क्तस्वरूपमतिरिक्तः अतिक्रम्य वर्तते अधिकत्वात् । अथेदानीमेव पञ्चरात्रः संप्रति यज्ञः अन्यूनानतिरिक्तपाङ्क्तस्वरूपवान्यज्ञः । प्रतिपत्त्या संगतं संप्रति, तिष्ठद्गुप्रभृतित्वादव्ययीभावः, निरुदकादिर्द्रष्टव्यः । संप्रत्येवेति । अन्यूनानतिरिक्तयज्ञस्वरूपवत्तेत्यर्थः । पञ्च वा ऋतव

त्पञ्चरात्रो य एवं विद्वान्पञ्चरात्रेण
यजते संप्रत्यैव यज्ञेन यजते पञ्च-
रात्रो भवति पञ्च वा ऋतवस्संव-
थ्सरः ॥ ३८ ॥ ऋतुष्वेव संवथ्सरे
प्रति तिष्ठत्यथो पञ्चाक्षरा पङ्क्तिः पा-
ङ्क्तो यज्ञो यज्ञमेवाव रुन्धे त्रिवृदग्नि-

ञ्चरात्र इति पञ्च-रात्रः । यः । एवम् । विद्वान् । पञ्चरात्रेणेति पञ्च-रात्रेण । यजते । सम्प्रतीति सं-प्रति । एव । यज्ञेन । यजते । पञ्चरात्र इति पञ्च-रात्रः । भवति । पञ्च । वै । ऋतवः । संवत्सर इति सं-वत्सरः ॥ ३८ ॥ ऋतुषु । एव । संवत्सर इति सं-वत्सरे । प्रतीति । तिष्ठन्ति । अथो इति । पञ्चाक्षरेति पञ्च-अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धे । [6]त्रिवृदिति त्रि-

---

इति । हेमन्तशिशिरयोरेकत्वाभिप्रायमिदम् । ऋत्वात्मनि संवत्सरे प्रतिष्ठितो भवति पञ्चसंख्यान्वयात् । अथो अपि च पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञः पङ्क्तिप्रभवत्वाद्धानादिपञ्चकप्रभवत्वाद्वा । उत्सादित्वादञ् ॥

[6]त्रिवृदित्यादि ॥ त्रिवृदग्निष्टोमः प्रथममहर्भवति तेजोवरुद्ध्यै

ष्टोमो भवति तेज एवाव रुन्धे प-
ञ्चदशो भवतीन्द्रियमेवाव रुन्धे
सप्तदशो भवत्यन्नाद्यस्यावरुद्ध्या
अथो प्रैव तेन जायते पञ्चवि॒ꣳ-
शोऽग्निष्टोमो भवति प्रजापतेराप्त्यै

वृत् । अग्निष्टोम इत्यग्नि-स्तोमः । भवति । तेजः । एव । अवेति । रुन्धे । पञ्चदश इति पञ्च-दशः । भवति । इन्द्रियम् । एव । अवेति । रुन्धे । सप्तदश इति सप्त-दशः । भवति । अन्नाद्यस्येत्यन्न-अद्यस्य । अवरुद्ध्या इत्यव-रुद्ध्यै । अथो इति । प्रेति । एव । तेन । जायते । पञ्चवि॒ꣳश इति पञ्च-वि॒ꣳशः । अग्निष्टोम इत्यग्नि-स्तोमः । भवति । प्रजापतेरिति प्रजा-पतेः । आप्त्यै । महाव्रतवा-

---

तद्भवति त्रिवृता सहोत्पन्नत्वात् । पञ्चदशो द्वितीयमहः उक्थ्यः इन्द्रियस्यावरुद्ध्यै, इन्द्रियेण सहोत्पन्नत्वात् । सप्तदशस्तृतीयमहः अन्नाद्यस्यावरुद्ध्यै, अनयोरन्नस्थाने* उत्पन्नत्वात् । अथो अपि च तेन सप्तदशेनाह्ना प्रजायते तस्य प्रजाहेतुत्वात् । पञ्चविंशोऽग्निष्टोमः चतुर्थमहः प्रजापतेराप्त्यै प्रजापतेः पञ्चविंशतित्वात् । महा-

---

*उभयोरभधानात्.

महाव्रतवान्नाद्यस्यावरुद्ध्यै विश्व-
जित्सर्वपृष्ठोतिरात्रो भवति सर्वस्या-
भिजित्यै ॥ ३९ ॥

निति महाव्रत–वान् । अन्नाद्यस्येत्यन्न–अद्यस्य । अवरुद्ध्या इत्यव–रुद्ध्यै । विश्वजिदिति विश्व–जित् । सर्वपृष्ठ इति सर्व–पृष्ठः । अतिरात्र इत्यति–रात्रः । भवति । सर्वस्य । अभिजित्या इत्यभि–जित्यै ॥ ३९ ॥

ते व्यावर्तन्त प्रवदिता स्यामिति स एतं पञ्च-
रात्रमा संवत्सरोभिजित्यै ॥ १० ॥

---

व्रतवानयं भवति अह्नोसंभवात् । महाव्रतधर्मवान् तदीयस्तोत्रवानित्यन्ये । अन्नाद्यस्यावरुद्ध्यै, तस्यान्नहेतुत्वात् । यथोक्तं महाव्रते 'तदन्नं पञ्चविंशमभवत्'* इति । विश्वजित् सर्वपृष्ठोतिरात्र पञ्चममहः । विश्वजित् सहस्रदक्षिणत्वादिधर्मा रथन्तरबृहद्वैरूपवैराजशाक्वररैवतपृष्ठः सर्वस्याभिजयार्थं भवति । सर्वपृष्ठः 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । त्रिवृदादयो निरुक्ताः ॥

इति सप्तमे प्रथमे दशमोनुवाकः.

---

*ब्रा. १-२-६.

देवस्य त्वा सवितुः प्रसवेऽश्विनो-
र्बाहुभ्यां पूष्णो हस्ताभ्यामा ददं इ-
मामंगृभ्णन्नशनामृतस्य पूर्व आ-
युषि विदथेषु कव्या। तया देवा-
स्सुतमा बंभूवुर् ऋतस्य सामं-

[1]देवस्य। त्वा। सवितुः। प्रसव इति प्र—सव।
अश्विनोः। बाहुभ्यामिति बाहु—भ्याम्। पूष्णः।
हस्ताभ्याम्। एति। ददे। [2]इमाम्। अगृभ्णन्।
रशनाम्। ऋतस्य। पूर्वे। आयुषि। विदथेषु।
कव्या। तया। देवाः। सुतम्। एति। बभूवुः।
ऋतस्य। सामन्न्। सरम्। आरपन्तीत्या—रपन्ती।

[1]इत ऊर्ध्वमश्वमेधमन्त्राः। तत्र रशनामादत्ते—देवस्य त्वेति॥ व्याख्यातं* दर्शपूर्णमासयोः। देवस्य सवितुराज्ञां लब्ध्वा अश्विनोरेव बाहुभ्यां नात्मयियाभ्यां पूष्ण एव हस्ताभ्यां त्वामाददे॥

[2]आदायाभिमन्त्रयते—इमामिति त्रिष्टुभा॥ इयमपि अग्निकाण्डे व्याख्याता†। ऋतस्य यज्ञस्य रशनां बन्धनीयां पूर्वे कव्याः कवयः। यद्वा—कवनीयेषु स्तोतव्येषु विदथेषु यज्ञेषु आयुरर्थमगृह्णन् गृहीतवन्तः। या ऋतस्य यज्ञस्य सामन् साम्नि समाप्तौ सरं सरणं आरपन्ती अभिवदन्ती भवति। रपतिश्शब्दकर्मा। शीघ्रं

*सं १-१-४.[8] †सं. ४-१-२.

न्थ्सरमार्पन्ती । अभिधा असि भुवनमसि यन्ताऽसि धर्ताऽसि सोऽग्निं वैश्वानरꣳ सप्रथसं गच्छ स्वाहाकृ-

[3]अभिधा इत्यभि-धाः । असि । भुवनम् । असि । यन्ता । असि । धर्ता । असि । सः । अग्निम् । वैश्वानरम् । सप्रथसमिति स-प्रथसम् । गच्छ । स्वाहाकृत इति स्वाहा-कृतः । पृथिव्याम् । य-

मया यज्ञं संपादयतेति । तया हि देवास्सुतं सोममाबभूवुः आभिमुख्येन प्राप्नुवन् । तादृशीमिमां गृह्णामीति ॥

[3]तया अश्वमभिदधाति—अभिधा असीति ॥ अभिपूर्वो दधातिः बन्धने वर्तते, कर्मणि क्विप् , । बन्धनीयस्त्वमसि । अत एव सर्वं भुवनं सर्वं भूतजातं च त्वमसि । यज्ञसाधनत्वेन सर्वेषां धारकत्वात् । यन्ता यमयिता चासि सर्वस्य । अत एव धर्ता धारयिता चासि लोकस्य । स त्वं वैश्वानरं विश्वेषां नराणां स्वामित्वेन संबन्धिनं सप्रथसं प्रथसा विस्तरेण सहितं विश्वव्यापिनं अग्निं गच्छ । 'इयं वा अग्निर्वैश्वानरः'* । स्वाहाकृतः स्वाहाकारेण संस्कृतः स्वाहाकारोच्चारणेन संस्कृतः । ब्राह्मणं च 'स्वाहाकृत इत्याह । होम एवास्यैषः । '† इति । स्वाहाशब्दस्योर्यादित्वेन गतित्वात् 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । निपाता आद्युदात्ताः । किञ्च—त्वमेव हि यन्ता नियन्ता मनु-

*ब्रा. ३-९-१७. †ब्रा. ३-८-३.

तः पृथिव्यां यन्ता राड्यन्ताऽसि य-
मनो धर्ताऽसि धरुणः कृष्यै त्वा
क्षेमाय त्वा रय्यै त्वा पोषाय त्वा
पृथिव्यै त्वाऽन्तरिक्षाय त्वा दिवे
त्वा सते त्वाऽसते त्वाऽद्भ्यस्त्वौष-

न्ता । राट् । यन्ता । असि । यमनः । धर्ता । अ-
सि । धरुणः । [4]कृष्यै । त्वा । क्षेमाय । त्वा । र-
य्यै । त्वा । पोषाय । त्वा । पृथिव्यै । त्वा । अ-
न्तरिक्षाय । त्वा । दिवे । त्वा । सते । त्वा । असं-
ते । त्वा । अद्भ्य इत्यत्–भ्यः । त्वा । ओषधीभ्य

---

ष्यादीनाम् । राट् दीप्यमानश्च पृथिव्यां अस्यामसि । अथ द्वितीयस्यामपि पृथिव्यां अन्तरिक्षे यन्ता नियन्ता ग्रहनक्षत्रादीनां च त्वमेवासि । यमनः यमसाधनभूतश्चासि । अथ तृतीयस्यामपि पृथिव्यां धर्ता धारयिता देवानां त्वमेवासि । धरुणो धारणशीलश्च त्वमेवासि । औणादिक उनप्रत्ययः । पृथिवीशब्दस्त्रिष्वपि लोकेषु वर्तते यथा—'यो द्वितीयस्यां तृतीयस्यां पृथिव्याम्'* इति ॥

[4]अथैनमभिप्रोक्षणेन प्रोक्षति—कृष्यै त्वेत्यादि ॥ कृष्याद्यर्थं त्वां प्रोक्षामीति । 'उदात्तयणः' इति स्वरः विभक्तेरुदात्तत्वम्, 'ऊडि-

---

*सं. १-२-१२.8—9

धीभ्यस्त्वा विश्वेभ्यस्त्वा भूतेभ्यः ॥

विभूर्मात्रा प्रभूः पित्राऽश्वोऽसि ह-
योस्यत्योऽसि नरोस्यर्वाऽसि सप्ति-

इत्योषधि-भ्यः । त्वा । विश्वेभ्यः । त्वा । भूते-
भ्यः ॥ ४० ॥

धरुणः पञ्चविꣳशतिश्च ॥ ११ ॥

[1]विभूरिति वि-भूः । मात्रा । प्रभूरिति प्र-भूः ।
पित्रा । अश्वः । असि । हयः । असि । अत्यः ।
असि । नरः । असि । अर्वा । असि । सप्तिः ।

---

दम्' इति दिवः, अङ्कयश्च । 'शतुरनुमः' इति सतः । 'ओषधेश्च विभक्तावप्रथमायाम्' इति ओषधिशब्दस्य संहितायां दीर्घत्वम् ॥

इति सप्तमे प्रथमे एकादशोनुवाकः.

---

[1]अश्वस्य दक्षिणे कर्णे यजमानमश्वनामानि वाचयति—विभूरित्यादि ॥ धारणान्माता पृथिवी । तत्र वृष्ट्या प्रजा उत्पादयतीति पिता द्यौः । ब्राह्मणं च भवति 'इयं वै माता । असौ

सि वाज्यसि वृषाऽसि नृमणा असि
ययुर्नामास्यादित्यानां पत्वान्वि-

असि । वाजी । असि । वृषा । असि । नृमणा इति नृ-मनाः । असि । ययुः । नाम । असि । [2]आदित्यानाम् । पत्वं । अन्विति । इहि । [3]अग्नये ।

पिता'* इति । तत्र मात्रा पृथिव्या त्वं विभूरसि विशेषेण भवसि विशिष्टोसि । पित्रा दिवा च त्वं प्रभूरसि प्रकर्षेण भवसि प्रकृष्टोसि । 'उदात्तयणः' इति तृतीयाया उदात्तत्वम् । अश्वः व्यापकोसि अध्वनाम् । हयः क्रमवानसि । हय गतिक्रान्त्योः। पचाद्यजन्तः, वृषादित्वादाद्युदात्तत्वम् । अत्यः सातत्येन गन्तुं समर्थोसि । अततेः 'कृत्यल्युटो बहुलम्' इति कर्तरि यत्, 'यतोऽनावः' इत्याद्युदात्तत्वम् । नरोसि कर्मणां नेताऽसि । नृ नये, पूर्ववदच्, स्वरश्च । अर्वा अरणकुशलोसि । अर्तेर्वनिप्, सप्तिः सर्वत्र समवेतोसि । षप समवाये, क्तिच् । वाजी वेगवानसि । वृषा वर्षिता सेक्ता वाऽसि । 'कनिन्युवृषि' इत्यादिना कनिन् । नृमणाः नृषु मनो यस्य, नॄन् मन्यते उपकरोति, नृभिर्वा मन्यसे उपकुर्विति । 'गतिकारकयोरपि' इत्यसुन् 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम्, 'पूर्वपदात्संज्ञयामगः' इति णत्वम् । ययुः यानशीलः । 'यो द्वे च' इत्युप्रत्ययः । ययुरित्यश्वमेधयोग्योश्व इत्याहुः । ययुर्नाम त्वमसि । ब्राह्मणं च 'एतद्वा अश्वस्य प्रियं नामधेयम्'* इति ॥

[2]उपतिष्ठते—आदित्यानामिति ॥ आदित्यानां यत्पत्वं पतनं

*ब्रा. ३-८-९.

ह्यग्नये स्वाहा स्वाहेन्द्राग्निभ्याꣳ
स्वाहा प्रजापतये स्वाहा विश्वेभ्यो
देवेभ्यस्स्वाहा सर्वाभ्यो देवताभ्य
इह धृतिस्स्वाहेह विधृतिस्स्वाहेह

स्वाहा । स्वाहा । इन्द्राग्निभ्यामितीन्द्राग्नि-भ्याम् । स्वाहा । प्रजापतय इति प्रजा-पतये । स्वाहा । विश्वेभ्यः । देवेभ्यः । स्वाहा । सर्वाभ्यः । देवताभ्यः । [4]इह । धृतिः । स्वाहा । इह । विधृतिरिति

---

तदनुगच्छ शीघ्रं गच्छेति यावत् । यद्वा—आदित्यानां यत्पत्व मार्गः व्योम तदनु गच्छ 'उर्वन्तारिक्षमन्विहि'* इति यावत् । पतेरौणादिको वनिप् ॥

[3]पूर्वहोमात्पुरस्ताद्भागान् जुहोति पञ्च—अग्नये स्वाहेत्यादि ॥ प्रथमः उपरिष्टात्स्वाहाकारः । अन्ये पुरस्तात्स्वाहाकाराः । इन्द्राग्निशब्दे 'नोत्तरपदेऽनुदात्तादौ' इति देवताद्वन्द्वलक्षणस्य स्वरस्य प्रतिषेधः ॥

[4]सायमश्वस्य पत्सु चतस्रो धृतीर्जुहोति—इह धृतिरित्यादि ॥ इहास्मिन् पादे धृतिर्धारणं तृप्तिर्वाऽस्तु । इह विधृतिः विद्यापुत्रादिसंपत्प्रभवा धृतिरस्तु । रन्तिः रतिसाधनभूता गवादयः

---

*सं. १-१-२,[18]

रन्तिस्स्वाहेह रमतिस्स्वाहा भूर-
सि भुवे त्वा भव्याय त्वा भविष्यते
त्वा विश्वेभ्यस्त्वा भूतेभ्यो देवा आ-

वि—धृतिः । स्वाहा । इह । रन्तिः । स्वाहा ।
इह । रमतिः । स्वाहा । [5]भूः । असि । भुवे ।
त्वा । भव्याय । त्वा । भविष्यते । त्वा । विश्वे-
भ्यः । त्वा । भूतेभ्यः । [6]देवाः । आशापालाः

सन्तु । 'क्तिच्क्तौ च' इति क्तिच् 'दीर्घश्च' इति नलोपाभावः । इह रमतिः इह रमणमस्तु । रमतेरौणादिकोतिप्रत्ययः, उभयत्र वृषादित्वादाद्युदात्तत्वम् ॥

[5]अश्वमुत्सृजति—भूरसीति ॥ भूः भावयिता विश्वस्यापि । 'बहुलमन्यत्रापि' इति णिलुक् । तस्मात् भुवे यत्किंचिद्भूतमतिक्रान्तं वस्तु तदर्थं तद्भावनार्थं त्वामुत्सृजामीति । 'भूतेऽपि दृश्यन्ते' इत्यौणादिकः क्विप्, 'सावेकाचः' इति विभक्तेरुदात्तत्वम् । भव्याय भवते वस्तुने । 'भव्यगेय' इति वर्तमाने यत्, 'यतोऽनावः' इत्याद्युदात्तत्वम् । भविष्यते वस्तुने च त्वामुत्सृजामि । 'शतुरनुमः' इति चतुर्थ्या उदात्तत्वम् । किं बहुना—विश्वेभ्यस्त्वा भूतेभ्यस्त्वामुत्सृजामीति ॥

[6]अथैनं देवताभ्यो रक्षार्थं परिददाति—देवा इत्यादि ॥ हे देवा आशापाला दिशां गोप्तारः । 'विभाषितं विशेषवचने

शापाला एतं देवेभ्योश्वं मेधाय
प्रोक्षितं गोपायत ॥ ४१ ॥

आयनाय स्वाहा प्रायणाय स्वाहो-
द्द्रावाय स्वाहोद्द्रुताय स्वाहा शूका-

इत्याशा-पालाः । एतम् । देवेभ्यः । अश्वम् । मेधाय । प्रोक्षितमिति प्र-उक्षितम् । गोपायत ॥ ४१ ॥

रन्तिस्स्वाहा द्वाविंशतिश्च ॥ १२ ॥

[1]आयनायेत्या-अयनाय । स्वाहा । प्रायणायेति प्र-अयनाय । स्वाहा । उद्द्रावायेत्युत्-द्रावाय ।

---

बहुवचनम्' इति पूर्वस्याविद्यमानवत्त्वाभावः । एवमश्वं मेधाय यज्ञायाभिप्रोक्षितं अत एव महार्घं एतमश्वं देवेभ्यो देवार्थं गोपायत रक्षत । 'शतं वै तल्प्या राजपुत्रा देवा आशापालाः'* इति ब्राह्मणम् ॥

इति सप्तमे प्रथमे द्वादशोनुवाकः.

---

[1]अथ त्रयोदश ध्रुवा जुहोति—आयनाय स्वाहेत्यादि ॥ आयनमागमनम्, प्रायणं प्रकृष्टगमनम्, गमनारम्भो वा । उभयत्रापि

*ब्रा. ३-८-९.

राय स्वाहा शूकृताय स्वाहा पला-
यिताय स्वाहाऽऽपलायिताय स्वा-
हाऽऽवल्गते स्वाहा परावल्गते स्वा-

स्वाहा । उद्द्रुतायेत्युत्–द्रुताय । स्वाहा । शूकारायेति शू–काराय । स्वाहा । शूकृतायेति शू–कृताय । स्वाहा । पलायिताय । स्वाहा । आपलायितायेत्या–पलायिताय । स्वाहा । आवल्गत इत्या–वल्गते । स्वाहा । परावल्गत इति परा–वल्गते ।

---

कृदुत्तरपदप्रकृतिस्वरत्वम् । उद्द्रावः उत्प्लुत्य गमनम् । 'उदि श्रयति यौति' इत्यादिना करणे घञ् । द्रवणहेतुः शक्तिविशेषः उद्द्रावः । थाथादिनोत्तरपदान्तोदात्तत्वम् । उद्द्रुतमुत्प्लुत्य गतिः । 'गतिरन्तरः' इत्यकर्मण्यपि व्यत्ययेन गतेः प्रकृतिस्वरत्वम् । कर्मणोभिधानं वा । शूकारः उद्द्रवणहेतुरनुकरणशब्दः सादिना साधारणकाले यः क्रियते । कशाघातेन सहितश्शूत्कारः। तत्करणं शूकृतं 'अनुकरणं चानिति परं' इति गतित्वात्पूर्वत्र थाथादिस्वरः, उत्तरत्र गतिस्वरः । पलायितं शीघ्रगमनम् । 'उपसर्गस्यायतौ' इति लत्वम् । विकारत्वादनवग्रहः, पूर्ववद्गतिस्वरः । आपलायितं शीघ्रगमनम् । अनन्तरस्य गतेः प्रकृतिस्वरत्वम् । आवल्गते वल्गनं गतिविशेषः विक्रमणपर्यायः, तेन गतिविशेषेणागच्छते । परावल्गनेनापि गतिविशेषेणागच्छते । उभयत्रापि कृदुत्तरपदप्रकृतिस्वरत्वम् । आयते आयनकुशलाय । वर्तमानविवक्षायामेतेर्लट्, शत्रादेशः । 'इणो यण्' । प्रयते प्रयाणकुशलाय

हाऽऽयते स्वाहा प्रयते स्वाहा सर्वस्मै स्वाहा॥ ४२ ॥

अग्नये स्वाहा सोमाय स्वाहा वायवे स्वाहाऽपां मोदाय स्वाहा स-

स्वाहा । आयत इत्या–यते । स्वाहा । प्रयत इति प्र–यते । स्वाहा । सर्वस्मै । स्वाहा ॥ ४२ ॥

आयनायोत्तरमापल्लायिताय षड्विंशतिः ॥ १३ ॥

[1]अग्नये । स्वाहा । सोमाय । स्वाहा । वायवे । स्वाहा। अपाम् । मोदाय । स्वाहा । सवित्रे । स्वाहा।

---

प्रकृष्टगमनकुशलाय । उभयत्रापि 'शतुरनुमः' इति चतुर्थ्या उदात्तत्वम् । सर्वस्मै अन्योपि यो गमनप्रकारोस्य दुर्निरूपः तस्मै सर्वस्मै स्वाहा । पूर्णाहुतिरियम् । 'सर्वस्य सुपि' इत्याद्युदात्तत्वम् ॥

इति सप्तमे प्रथमे त्रयोदशोनुवाकः.

---

[1]अथ पूर्वाश्वस्य स्तोत्रियाः—अग्नये स्वाहेत्यादि ॥ निगदसिद्धाः । अपां मोदः पर्जन्यः । सवित्रे 'उदात्तयणः' इति विभक्तेरुदात्तत्वम् । बृहस्पतये । सुत्वद्रावुक्तौ । सर्वस्मै अनुक्ताय

वित्रे स्वाहा सरस्वत्यै स्वाहेन्द्राय
स्वाहा बृहस्पतये स्वाहा मित्राय
स्वाहा वरुणाय स्वाहा सर्वस्मै
स्वाहा ॥ ४३ ॥

पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा
दिवे स्वाहा सूर्याय स्वाहा चन्द्रमं-

सरस्वत्यै । स्वाहा । इन्द्राय । स्वाहा । बृहस्पतये । स्वाहा । मित्राय । स्वाहा । वरुणाय । स्वाहा । सर्वस्मै । स्वाहा ॥ ४३ ॥

अग्नये वायवेऽपां मोदायेन्द्राय त्रयो-
विंशतिः ॥ १४ ॥

[1]पृथिव्यै । स्वाहा । अन्तरिक्षाय । स्वाहा । दिवे । स्वाहा । सूर्याय । स्वाहा । चन्द्रमसे ।

---

प्रजापत्यादये । पर्णाहुतिः । एवं सर्वत्र ॥

इति सप्तमे प्रथमे चतुर्दशोनुवाकः.

---

[1]अथ पूर्वा क्रतुदीक्षाः—पृथिव्यै स्वाहेत्यादि ॥ गताः । पृथिव्यास्स एव स्वरः । 'ऊडिदम्' इति दिवः । 'सावेकाचः'

से स्वाहा नक्षत्रेभ्यस्स्वाहा प्राच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहा प्रतीच्यै दिशे स्वाहोदीच्यै दिशे स्वाहोर्ध्वायै दिशे स्वाहा दिग्भ्यस्स्वाहाऽवान्तरदिशाभ्यस्स्वाहा समाभ्यस्स्वाहा शरद्भ्यस्स्वाहाऽहोरात्रेभ्यस्स्वाहाऽर्धमासेभ्यस्स्वाहा

स्वाहा । नक्षत्रेभ्यः । स्वाहा । प्राच्यै । दिशे । स्वाहा । दक्षिणायै । दिशे । स्वाहा । प्रतीच्यै । दिशे । स्वाहा । उदीच्यै । दिशे । स्वाहा । ऊर्ध्वायै । दिशे । स्वाहा । दिग्भ्य इति दिक्-भ्यः । स्वाहा । अवान्तरदिशाभ्य इत्यवान्तर–दिशाभ्यः । स्वाहा । समाभ्यः । स्वाहा । शरद्भ्य इति शरत्–भ्यः । स्वाहा । अहोरात्रेभ्य इत्यहः–रात्रेभ्यः । स्वाहा । अर्धमासेभ्य इत्यर्ध–मासेभ्यः । स्वाहा ।

---

इति दिशः । दिग्भ्य इति सामान्येनोच्यते । अवान्तरदिशाः कोणाः । समाशरच्छब्दौ संवत्सरविशेषवचनौ । गतौ गतेरिष्यन्? वर्षवचनावित्येके । इह तु ताभ्यां तदवयवभूताः सूक्ष्मा यामघटिकानिमेषादयो

मासेभ्यस्स्वाहर्तुभ्यस्स्वाहा संवत्स-
राय स्वाहा सर्वस्मै स्वाहा ॥४४॥

अग्नये स्वाहा सोमाय स्वाहा स-
वित्रे स्वाहा सरस्वत्यै स्वाहा पूष्णे

मासेभ्यः । स्वाहा । ऋतुभ्य इत्यृतु-भ्यः । स्वाहा । संवत्सरायेति सं-वत्सराय । स्वाहा । सर्वस्मै । स्वाहा ॥ ४४ ॥

पृथिव्यै दिवे सूर्याय नक्षत्रेभ्यः प्राच्यै
सप्तचत्वारिंशत् ॥ १५ ॥

[1]अग्नये । स्वाहा । सोमाय । स्वाहा । सवित्रे । स्वाहा । सरस्वत्यै । स्वाहा । पूष्णे । स्वाहा । बृ-

गृह्यन्ते । सर्वस्मै यौ दिक्कालकार्यौ यौ च दिक्कालावनुक्तौ* तस्मै सर्वस्मै स्वाहेति ॥

इति सप्तमे प्रथमे पञ्चदशोनुवाकः.

[1]अथोत्तरस्तोत्रीयाः—अग्नये स्वाहेति ॥ स्पष्टाः । अत्र विशेषः—वाय्वपांमोदशब्दौ बृहस्पतिमित्रयोर्मध्ये द्रष्टव्यौ विप-

*यौ अनुक्तौ दिक्कालकारीयौ दिवा दिक्कालावगतौ.

स्वाहा बृहस्पतये स्वाहाऽपां मोदा-
य स्वाहा वायवे स्वाहा मित्राय
स्वाहा वरुणाय स्वाहा सर्वस्मै
स्वाहा ॥ ४५ ॥

पृथिव्यै स्वाहाऽन्तरिक्षाय स्वाहा दि-

हस्पतये । स्वाहा । अपाम् । मोदाय । स्वाहा । वायवे । स्वाहा । मित्राय । स्वाहा । वरुणाय । स्वाहा । सर्वस्मै । स्वाहा ॥ ४५ ॥

अग्नये सवित्रे पूष्णोऽपां मोदाय वायवे
त्रयोविंशतिः ॥ १६ ॥

[1]पृथिव्यै । स्वाहा । अन्तरिक्षाय । स्वाहा ।

---

येस्तौ । इन्द्रस्य स्थाने पूषा भवति । पूर्वस्तोत्रियैः समानमन्यत् । उदात्तनिवृत्तिस्वरेण पूष्णो विभक्तेरुदात्तत्वम् । सर्वस्मै प्रजापत्यादये च ॥

इति सप्तमे प्रथमे षोडशोनुवाकः.

---

[1]अथ दीक्षाहुतयः—पृथिव्यै स्वाहेत्यादि ॥ एकविंशतिः । निगदव्याख्याताः । ऋज्वादयः पृथिव्यादयो लोकाः । यथोक्तं—'इयं

वे स्वाहाऽग्नये स्वाहा सोमाय स्वाहा सूर्याय स्वाहा चन्द्रमसे स्वाहाऽह्ने स्वाहा रात्रियै स्वाहर्जवे स्वाहा साधवे स्वाहा सुक्षित्यै स्वाहा क्षुधे स्वाहाऽऽशितिम्ने स्वाहा रोगाय स्वाहा हिमाय स्वाहा शीताय स्वाहाऽऽतपाय स्वाहाऽरण्याय स्वाहा सु-

दिवे । स्वाहा । अग्नये । स्वाहा । सोमाय । स्वाहा । सूर्याय । स्वाहा । चन्द्रमसे । स्वाहा । अह्ने । स्वाहा । रात्रियै । स्वाहा । ऋजवे । स्वाहा । साधवे । स्वाहा । सुक्षित्या इति सु-क्षित्यै । स्वाहा । क्षुधे । स्वाहा । आशितिम्ने । स्वाहा । रोगाय । स्वाहा । हिमाय । स्वाहा । शीताय । स्वाहा । आतपायेत्या-तपाय । स्वाहा । अरण्याय । स्वा-

वा ऋजुः । अन्तरिक्षं साधु । असौ सुक्षितिः'* इति । सुक्षित्यै, स एव स्वरः । क्षुधे 'सावेकाचः' इत्युदात्तत्वम् । आशितिम्ने आशितमसुहितं तत्स्वभावाय । छन्दसीमनिच् । यद्वा—आशीतृशब्दात् 'छन्दसि' इतीमनिच्, 'तुरिष्ठेमेयस्सु' इति एकदेशस्य ऋकारस्य लोपश्छान्दसः, उदात्तनिवृत्तिस्वरेण विभक्तेरु-

*तै. आ. ५-३.

वर्गाय स्वाहा लोकाय स्वाहा सर्व-
स्मै स्वाहा ॥ ४६ ॥

भुवो देवानां कर्मणाऽपसर्तस्यं प-

हां । सुवर्गायेति सुवः—गायं । स्वाहा । लोकाय । स्वाहा । सर्वस्मै । स्वाहा ॥ ४६ ॥

पृथिव्या अग्नयेऽह्ने रात्रियै चतुश्च-
त्वारिंशत् ॥ १७ ॥

[1]भुवः । देवानाम् । कर्मणा । अपसा । ऋत-

दात्तत्वम् । रोगाय । गतम् । सर्वस्मै याऽनुक्ता दीक्षादेवता, यश्च उपसर्गः, यश्च फलभूतः, पुण्यलोकः? तस्मै सर्वस्मै स्वाहेति ॥

सप्तमे प्रथमे सप्तदशोनुवाकः.

---

[1]अथोत्तरा ऋतुदीक्षाः—भुवो देवानामिति ॥ अत्र 'वसुभिः' इत्यादयः पञ्च पर्यायाः । तत्रादौ 'पथ्याऽसि' इत्यन्तं सर्वेषां तुल्यम् । अन्ते च 'आऽहं दीक्षाम्'* इत्यादि 'ऋतेऽधाम्'* इत्यन्तं सर्वेषां तुल्यमेव । ततोन्ते द्वे ऋचौ त्रिष्टुभौ 'महीमूषु मातरम्'† इत्येका, 'सुत्रामाणं पृथिवीम्'† इति द्वितीया । एते च 'वैश्वानरो न ऊत्या'† इत्यत्र व्याख्याते, इह तु प्रती-

*सं. ७-१-८.[5] †सं १-५-११.[18—19]

थ्याऽसि वसुभिर्देवेभिर्देवतया गायत्रे-
ण त्वा छन्दसा युनज्मि वसन्तेन त्व-
र्तुना हविषा दीक्षयामि रुद्रेभिर्देवेभि-

स्य । पथ्या । असि । वसुभिरिति वसु-भिः । दे-
वेभिः । देवतया । गायत्रेण । त्वा । छन्दसा । यु-
नज्मि । वसन्तेन । त्वा । ऋतुना । हविषा । दीक्ष-

कग्रहणम् । दीक्षे त्वं देवानां कर्मणा देवसंबन्धिना व्यापारेण होमादिना भुवः भव उत्पद्यस्व । भवतेर्लोटि शपो लुक्, 'लेटोऽडाटौ' इत्यडागमः, 'भूसुवोस्तिङि' इति गुणाभावः। ऋतस्य यज्ञस्य अपसा कर्मणा हेतुना भुव इत्येव । पथ्या हिता खल्वसि सर्वस्य लोकस्य । छान्दसमन्तस्वरितत्वम्, डादेशो वा विभक्तेः । तां त्वां देवेभिः वसुभिः देवैः गायत्रेण छन्दसा युनज्मि । त्वां च वसन्तेन ऋतुना वासन्तिकेन हविषा त्वां दीक्षयामि दीक्षां करोमि अविगुणं निर्वर्तयामीति यावत् । 'तत्करोति' इति णिच् । सोहं दीक्षामारुहं आरूढोस्मि । 'कृमृदृरुहिभ्यः' इति च्लेरङ् । ऋतस्य यज्ञस्य पत्नीं पालयित्रीम् । 'पत्युर्नः' इति ङीप्नकारौ । गायत्रेण छन्दसा ब्रह्मणा च ऋतं सत्ये अधां दधामि स्थापयामि । छान्दसो लुङ् । मानसं सत्यमृतं, वाचिकं सत्यम् । 'छन्दसः प्रत्ययविधाने नपुंसके स्वार्थ उपसंख्यानम्' इति गायत्र्यादिषु स्वार्थिकोण् । त्रिष्टुबादिभ्य उत्सादित्वादञ् ॥

देवतया त्रैष्टुभेन त्वा छन्दसा युनज्मि
ग्रीष्मेण त्वर्तुना हविषा दीक्षयाम्या-
दित्येभिर्देवेभिर्देवतया जागतेन त्वा
छन्दसा युनज्मि वर्षाभिस्त्वर्तुना
हविषा दीक्षयामि विश्वेभिर्देवेभिर्दे-
वतयाऽऽनुष्टुभेन त्वा छन्दसा युन-
ज्मि ॥ ४७ ॥ शरदा त्वर्तुना हवि-
षा दीक्षयाम्यङ्गिरोभि र्देवेभि र्देवतया
पाङ्क्तेन त्वा छन्दसा युनज्मि हेमन्त-

यामि । [2]रुद्रेभिः । देवेभिः । देवतया । त्रैष्टुभेन । त्वा । छन्दसा । युनज्मि । ग्रीष्मेण । त्वा । ऋतुना । हविषा । दीक्षयामि । [3]आदित्येभिः । देवेभिः । देवतया । जागतेन । त्वा । छन्दसा । युनज्मि । वर्षाभिः । त्वा । ऋतुना । हविषा । दीक्षयामि । [4]विश्वेभिः । देवेभिः । देवतया । आनुष्टुभेनेत्यानु-स्तुभेन । त्वा । छन्दसा । युनज्मि ॥४७॥ शरदा । त्वा । ऋतुना । हविषा । दीक्षयामि । [5]अङ्गिरोभि-रित्यङ्गिरः-भिः । देवेभिः । देवतया । पाङ्क्तेन ।

[2—5]एवं रुद्रादिपर्यायेष्वपि द्रष्टव्यम् ॥

शिशिराभ्यां त्वर्तुना हविषा दीक्षया-
भ्याऽहं दीक्षामरुहमृतस्य पत्नीं गाय-
त्रेण छन्दसा ब्रह्मणा चर्तं सत्येऽ-
धां सत्यमृतेऽधाम् । महीमूषु सु-
त्रामाणमिह धृतिस्स्वाहेह विधृ-

त्वा । छन्दसा । युनज्मि । हेमन्तशिशिराभ्यामिति हेमन्त—शिशिराभ्याम् । त्वा । ऋतुना । हविषा । दीक्षयामि । एति । अहम् । दीक्षाम् । अरुहम् । ऋतस्य । पत्नीम् । गायत्रेण । छन्दसा । ब्रह्मणा । च । ऋतम् । सत्ये । अधाम् । सत्यम् । ऋते । अधाम् । [6]महीम् । उ । स्विति । [7]सुत्रामाणमिति सु—त्रामाणम् । [8]इह । धृतिः । स्वाहा । इह ।

---

[6]महीमूष्वित्यादि ॥ सुव्रतानां शोभनकर्मणां मातरं मातृवत्पालयित्रीं महीं देवीमिव ऋतस्य यज्ञस्य पत्नीं पालयत्रीं अवसे रक्षणार्थं सुहुवेम सुष्ठु आह्वयामः तुविक्षत्रां प्रवृद्धबलां अजरन्तीं अनुपक्षयां उरूचीमुरुगमनां सुशर्माणं सुसुखां अदितिं अखण्डनीयां सुप्रणीतिं शोभनप्रणयनाम् । इति ॥

[7]अथ द्वितीया—सुत्रामाणं सुष्ठु त्रायन्तीं पृथिवीं द्यां दीपितवतीं अनेहसं अपापाम् । सुशर्माणमित्यादि । गतम् । दैवीं नावं स्वरित्रां अनागसं अनवद्यां अस्रवन्तीं अच्छिद्रामारुहेम स्वस्तये अविनाशायेति ॥

[8]उत्सृष्टे चतुर्षु पत्सु चतस्र आहुतीर्जुहोति—इह धृतिरि-

तिस्स्वाहेह रन्तिस्स्वाहेह रमंति-
स्स्वाहा ॥ ४८ ॥

ईङ्काराय स्वाहेङ्कृताय स्वाहा क्रन्दं-
ते स्वाहाऽवक्रन्दंते स्वाहा प्रोथंते

विधृतिरिति वि-धृतिः । स्वाहा । इह । रन्तिः । स्वाहा । इह । रमंतिः । स्वाहा ॥ ४८ ॥

आनुष्टुभेन त्वा छन्दसा युनज्म्ये-
कान्न पंञ्चाशच्चं ॥ १८ ॥

[1–11]ईङ्कारायेतीं-काराय । स्वाहा । ईंकृतायेतीं-कृताय । स्वाहा । क्रन्दंते । स्वाहा । अवक्र-

---

त्यादि ॥ व्याख्यातम्* ॥

इति सप्तमे प्रथमे अष्टादशोऽनुवाकः.

---

[1–11]अथ पुरस्तात्स्विष्टकृतः त्र्यशीतिमश्वचरितान्युपजुहोति— ईंकारायेति ॥ ईमित्यनुकरणशब्दस्सन्नाहादौ क्रियते अश्वेन । 'अनुकरणं चानितिपरम्' इतिगतित्वात्थाथादिस्वरः । निवर्तमानावस्थ उच्यते । ईंकृतः स एव निवृत्तावस्थ उच्यते । पूर्ववद्गतित्वात् 'गतिरनन्तरः' इति तस्य प्रकृतिस्वरत्वम् । क्रन्दते उच्चैर्हेषमाणाय । अवक्रन्दते अवाङ्मुखं निभृतं घोषमाणाय ।

---

*सं. ७-१-१२.4

स्वाहा॑ प्रप्रोथ॑ते स्वाहा॑ ग॒न्धाय॒ स्वा-
हा॑ घ्रा॒ताय॒ स्वाहा॑ प्रा॒णाय॒ स्वाहा॑
व्या॒नाय॒ स्वाहा॑ऽपा॒नाय॒ स्वाहा॑ स-
न्दी॒यमा॑नाय॒ स्वाहा॒ सन्दि॑ताय॒

न्दत॒ इत्य॑व-क्रन्द॑ते । स्वाहा॑ । प्रोथ॑ते । स्वाहा॑ । प्रप्रोथ॑त॒ इति॑ प्र-प्रोथ॑ते । स्वाहा॑ । ग॒न्धाय॑ । स्वाहा॑ । घ्रा॒ताय॑ । स्वाहा॑ । प्रा॒णायेति॑ प्र-अ॒नाय॑ । स्वाहा॑ । व्या॒नायेति॑ वि-अ॒नाय॑ । स्वाहा॑ । अ॒पा॒नायेत्य॑प-अ॒नाय॑ । स्वाहा॑ । [12-22]सं॒दी॒यमा॑ना॒येति॑ सं-दी॒यमा॑नाय । स्वाहा॑ । सं॒दि॑ता॒येति॒ सं-दि॒ता-

अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः, उत्तरत्र कृदुत्तरपदप्रकृतिस्वरत्वम् । प्रोथते नासापुटाभ्यां शब्दं विस्तारयते । प्रप्रोथते उपर्युपरि तथाकुर्वते । प्रोथृ पर्याप्तौ, स एव स्वरः । गन्धाय गन्धयित्रे गन्धं गृह्णते । गन्ध अर्दने, पचाद्यच् । घ्राताय घ्रातवते । घ्रा गन्धोपादाने, व्यत्ययेन कर्तरि निष्ठा । मत्वर्थीयो वा लुप्यते । 'नुदविदोन्दत्राघ्रा' इति निष्ठानत्वाभावः पाक्षिकः । प्राणव्यानापाना व्याख्याताः । *पचाद्यजन्ताः । द्वितीयस्य छान्दसं सांहितिकं दीर्घत्वम्, प्रातिशाख्ये चोक्तं— 'व्युत्पूर्व आननुदात्तोनूष्मवति '† इति ॥

[12-2]सन्दीयमानाय नियम्यमानाय‡ । दो अवखण्डने, संपूर्वो

*सं. ५-५-५. †३-१५. ‡आ-बध्यमानाय.

स्वाहा विचृत्यमानाय स्वाहा विचृ-
त्ताय स्वाहा पलायिष्यमाणाय स्वा-
हा पलायिताय स्वाहोपरꣳस्यते
स्वाहोपरताय स्वाहा निवेक्ष्यते स्वाहा

य । स्वाहा । विचृत्यमानायेति वि-चृत्यमानाय । स्वाहा । विचृत्तायेति वि-चृत्ताय । स्वाहा । पलायिष्यमाणाय । स्वाहा । पलायिताय । स्वाहा । उपरꣳस्यत इत्युप-रꣳस्यते । स्वाहा । उपरतायेत्युप-रताय । स्वाहा । निवेक्ष्यत इति नि-वेक्ष्यते । स्वाहा । निविशमानायेति नि-विशमानाय । स्वाहा । निविष्टायेति नि-विष्टाय । स्वा-

---

बन्धनकर्मा, 'घुमास्थागापा' इति सूत्रेणेत्वम् । सन्दिताय बद्धाय । 'द्यतिस्यति' इत्यादिना इत्वं, पूर्ववल्लसार्वधातुकानुदात्तत्वे गतिस्वरौ । विचृत्यमानाय विमुच्यमानाय । विचृत्ताय विमुक्ताय । चृती हिंसादौ, 'श्वीदितोनिष्ठायाम्' इतीट्प्रतिषेधः, पूर्ववत्स्वरौ । पलायिष्यमाणाय हविर्भूत्वा शीघ्रं देवसकाशं प्राप्स्यते । अय गतौ, 'उपसर्गस्यायतौ' इति लत्वम् । पलायिताय देवसकाशं प्राप्ताय । तावेव स्वरौ । उपरंस्यते मनुष्यलोकं हित्वा देवसकाशे रन्तुं यास्यते । 'उपाच्च' इति रमतेः परस्मैपदम्, 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । उपरताय देवसकाशं गतवते । पूर्ववद्गतिस्वरः । निवेक्ष्यते देवान् प्रवेक्ष्यते । अतः परं

निविशमानाय स्वाहा निविष्टाय
स्वाहा निषत्स्यते स्वाहा निषीदते
स्वाहा निषण्णाय स्वाहा ॥ ४१ ॥
आसिष्यते स्वाहाऽऽसीनाय स्वाहा-
ऽऽसिताय स्वाहा निपत्स्यते स्वाहा

हा । [23—34]निषत्स्यत इति नि–सत्स्यते । स्वाहा । निषीदत इति नि–सीदते । स्वाहा । निषण्णायेति नि–सन्नाय । स्वाहा ॥ ४१ ॥ आसिष्यते । स्वाहा । आसीनाय । स्वाहा । आसिताय । स्वाहा । निपत्स्यत इति नि–पत्स्यते । स्वाहा । निपद्यमा-

---

त्रिकालवर्तिचरितग्रहणम् । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । निविशमानाय । 'नेर्विशः' इत्यात्मनेपदम् । पूर्ववद्व्यत्ययेन कृतः सतिशिष्टस्वरः । निविष्टाय । कर्तरि निष्ठा । तत्र व्यत्ययेन गतेः प्रकृतिस्वरत्वम् ॥

[23—34]निषत्स्यते । निषीदनं आसनाधिकरणावस्थानपरिग्रहः । 'सदिरप्रतेः' इति षत्वम् । निषीदते पाघ्रादिना सीदादेशः । निषण्णाय 'रदाभ्यां' इति निष्ठानत्वम् । सर्वत्रोक्त एव स्वरः । आसिष्यते इत्यादि । गतम् । आसीनाय । अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वम् । निपत्स्यते निपतनं शयनाधिकरणस्थानपरिग्रहः । व्यत्ययेनैव परस्मैपदम् । निपद्यमानाय । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वात् 'ञ्नित्या-

निपद्यमानाय स्वाहा निपन्नाय स्वा-
हा शयिष्यते स्वाहा शयानाय स्वा-
हा शयिताय स्वाहा संमीलिष्यते
स्वाहा संमीलते स्वाहा संमीलिता-
य स्वाहा स्वप्स्यते स्वाहा स्वपते
स्वाहा सुप्ताय स्वाहा प्रभोत्स्यते

नायेति नि-पद्यमानाय । स्वाहा । निपन्नायेति नि-पन्नाय । स्वाहा । शयिष्यते । स्वाहा । शयानाय । स्वाहा । शयिताय । स्वाहा । [35—46]सम्मीलिष्यत इति सं-मीलिष्यते । स्वाहा । सम्मीलत इति सं-मीलते । स्वाहा । सम्मीलितायेति सं-मीलिताय । स्वाहा । स्वप्स्यते । स्वाहा । स्वपते । स्वाहा । सुप्ताय । स्वाहा । प्रभोत्स्यत इ-

---

दिर्नित्यम्' इत्याद्युदात्तत्वम्, उक्तमन्यत् । शयिष्यते । स्वरपरस्मैपदे उक्ते । शयानाय । शित्वाल्लसार्वधातुकानुदात्तत्वम् ॥

[35—46]सम्मीलिष्यते इत्यादि ॥ गतम् । स्वप्स्यते बाह्यकरणोपरमः स्वापः । गतमन्यत् । प्रभोत्स्यते । 'एकाचः' इति भष्भावः । प्रबुद्ध्यमानाय जागरिष्यते । गतम् । जाग्रते । 'जक्षि' इत्यादिना अभ्यस्तसंज्ञत्वात् 'अभ्यस्तानामादिः' इत्याद्युदात्तत्वम् । जागरिताय । 'जाग्रोऽविचिण्णल्ङित्सु' इति गुणः ॥

स्वाहा प्रबुद्ध्यमानाय स्वाहा प्रबुद्धा-
य स्वाहा जागरिष्यते स्वाहा जाग्रते
स्वाहा जागरिताय स्वाहा शुश्रूष-
माणाय स्वाहा शृण्वते स्वाहा श्रु-
ताय स्वाहा वीक्षिष्यते स्वाहा ॥५०॥
वीक्षमाणाय स्वाहा वीक्षिताय स्वा-

ति प्र—भोत्स्यते । स्वाहा । प्रबुद्ध्यमानायेति प्र—बुद्ध्यमानाय । स्वाहा । प्रबुद्धायेति प्र—बुद्धाय । स्वाहा । जागरिष्यते । स्वाहा । जाग्रते । स्वाहा । जागरिताय । स्वाहा । [47–58]शुश्रूषमाणाय । स्वाहा । शृण्वते । स्वाहा । श्रुताय । स्वाहा । वीक्षिष्यत इति वि—ईक्षिष्यते । स्वाहा ॥ ५० ॥ वीक्षमाणायेति वि—ईक्षमाणाय । स्वाहा । वीक्षितये-

---

[47–58]शुश्रूषमाणाय जागरित्वा शब्दं श्रोतुमिच्छते । पूर्ववदाद्युदात्तत्वम् । 'ज्ञाश्रुस्मृदृशाम्' इत्यात्मनेपदम् । उत्तरे गते । वीक्षिष्यते इत्यादि । गतम् । संहास्यत इत्यादि । गतम् । संहासनं बाह्येन्द्रियाणां स्वैस्स्वैर्विषयैस्संयोगः । ओहाङ् गतौ । संजिहानाय । 'भृञामित्' इतीत्वम् । उज्जिहानाय कार्येषूद्योगं कुर्वते । उक्ते स्वरपरस्मैपदे । विवर्त्स्यते । विवर्तनं शयनस्थानत्यागः । 'वृद्भ्यस्स्यसनोः' इति परस्मैपदम् । 'न वृद्भ्य-

हा सꣳहास्यते स्वाहा संजिहानाय
स्वाहोज्जिहानाय स्वाहा विवर्त्स्यते
स्वाहा विवर्तमानाय स्वाहा विवृत्ता-
य स्वाहोत्थास्यते स्वाहोत्तिष्ठते स्वा-
होत्थिताय स्वाहा विधविष्यते स्वा-
हा विधून्वानाय स्वाहा विधूताय

ति वि–ईक्षिताय । स्वाहा । सꣳहास्यत इति सं–हास्यते । स्वाहा । संजिहानायेति सं–जिहानाय । स्वाहा । उज्जिहानायेत्युत्–जिहानाय । स्वाहा । विवर्त्स्यत इति वि–वर्त्स्यते । स्वाहा । विवर्तमानायेति वि–वर्तमानाय । स्वाहा । विवृत्तायेति वि–वृत्ताय । स्वाहा । [59–70]उत्थास्यत इत्युत्–स्थास्यते । स्वाहा । उत्तिष्ठत इत्युत्–तिष्ठते । स्वाहा । उत्थितायेत्युत्–स्थिताय । स्वाहा । विधविष्यत

---

श्रतुर्भ्यः' इतीडभावः । उक्तमन्यत् । विवृत्ताय । 'उदितो वा' इति विभाषितेट् 'यस्य विभाषा' इतीट्प्रतिषेधः ॥

[59–70]उत्थास्यते । 'उदस्स्थास्तम्भ्वोः' इति पूर्वरूपता । विधविष्यते । विधवनं देहस्य कम्पनम् । विधून्वानाय । धूञ् कम्पने, क्रैयादिकः, व्यत्ययेन श्नुः, कदुत्तरपदप्रकृतिस्वरत्वे शान-

स्वाहोत्क्रꣳस्यते स्वाहोत्क्रामते स्वाहोत्क्रान्ताय स्वाहा चङ्क्रमिष्यते स्वाहा चङ्क्रम्यमाणाय स्वाहा चङ्क्रमिताय स्वाहा कण्डूयिष्यते स्वाहा कण्डूयमानाय स्वाहा कण्डूयिताय

इति वि-धविष्यते । स्वाहा । विधून्वानायेति वि-धून्वानाय । स्वाहा । विधूतायेति वि-धूताय । स्वाहा । उत्क्रꣳस्यत इत्युत्-क्रꣳस्यते । स्वाहा । उत्क्रामत इत्युत्-क्रामते । स्वाहा । उत्क्रान्तायेत्युत्-क्रान्ताय । स्वाहा । चङ्क्रमिष्यते । स्वाहा । चङ्क्रम्यमाणाय । स्वाहा । चङ्क्रमिताय । स्वाहा । [71–80]कण्डूयिष्यते । स्वाहा । कण्डूयमानाय । स्वाहा । कण्डूयिताय । स्वाहा । निकषिष्यत इति नि-क-

---

त्स्वरः सतिशिष्टोपि विकरणस्वरः लसार्वधातुकस्वरेण बाध्यते । उत्क्रंस्यते । उत्क्रमणं शिरःकम्पनम्, व्यत्ययेनेडभावः । गतमन्यत् । चङ्क्रमिष्यते । चङ्क्रमणं पुनःपुनः क्रमणं सातत्येन गमनम् । यङन्ताल्ल्युटि 'यस्य हलः' इति यलोपः ॥

[71–80]कण्डूयिष्यते । दर्पनिमित्ता कण्डूया । कण्ड्वादिभ्यो यक् । निकषिष्यते । निकषणं काष्ठादिषु शरीरस्य । कष

स्वाहा निकर्षिष्यते स्वाहा निकर्षमाणाय स्वाहा निकर्षिताय स्वाहा यदत्ति तस्मै स्वाहा यत्पिबति तस्मै स्वाहा यन्मेहति तस्मै स्वाहा यच्छकृत्करोति तस्मै स्वाहा रेतसे स्वाहा प्रजाभ्यस्स्वाहा प्रजनं-

षिष्यते । स्वाहा । निकर्षमाणायेति नि-कर्षमाणाय । स्वाहा । निकर्षितायेति नि-कर्षिताय । स्वाहा । यत् । अत्ति । तस्मै । स्वाहा । यत् । पिबति । तस्मै । स्वाहा । यत् । मेहति । तस्मै । स्वाहा । यत् । शकृत् । करोति । तस्मै । स्वाहा ।
81—84 रेतसे । स्वाहा । प्रजाभ्य इति प्र-जाभ्यः । स्वाहा । प्रजननायेति प्र-जननाय । स्वाहा । सर्वं-

---

हिंसायाम् । निकर्षमाणाय । व्यत्ययेनात्मनेपदम् । गतमन्यत् । यदत्ति येन सामर्थ्येन अदनं करोति तस्मै स्वाहा । तस्मा एव वा अदनाय । एवं पानादिषु द्रष्टव्यम् ॥

81—84 रेतसे रेतस्सेचनकर्मणे । प्रजाभ्यः प्रजोत्पादनसामर्थ्यार्य । प्रजननाय प्रजननेन्द्रियाय । सर्वस्मै अनुक्तमन्यदपि चरितमश्वस्य

नाय स्वाहा सर्वस्मै स्वाहा ॥५१॥
अग्नये स्वाहा वायवे स्वाहा सूर्याय
स्वाहर्तमस्यृतस्यर्तमसि सत्यमसि

स्मै ।स्वाहा ॥५१॥

निषण्णाय स्वाहा वीक्षिष्यते स्वाहा निकर्षमाणाय स्वाहा सप्तविंशतिश्च ॥ १९ ॥

[1–3]अग्नये । स्वाहा । वायवे । स्वाहा । सूर्याय । स्वाहा । [4–7]ऋतम् । असि । ऋतस्य । ऋतम् ।

---

हासरोदनादि तस्मै सर्वस्मै स्वाहा ॥

इति सप्तमे प्रथमे एकोनविंशोनुवाकः.

---

[1–3]अथाश्वस्य सावित्राणि सप्त जुहोति—अग्नय इत्यादि ॥ अग्नये वायवे सूर्यायेत्यादित्रीणि, उत्तराणि चत्वारि, 'अधि यदस्मिन्'* इत्यादि चतुष्पदा विराट् । 'शुभः, विशः, कव्यन्, परिज्मा'* इति पादानामन्ताः । अग्नय इत्यादि । गतम् ॥

[4–7]ऋतं यज्ञः त्वमेवासि, प्राधान्यात्स्तुतिः । ऋतस्य ऋतमसीति । ऋतस्यापि यज्ञस्यापि त्वं यज्ञोसि त्वया हि यज्ञः इष्टसाधनं भवतीति । किं च—सत्यमवितथं सति साधु सत्यं तद-

*सं. ७-१-२०.[8–11]

सत्यस्यं सत्यमस्यृतस्य पन्थां अ-
सि देवानां छायाऽमृतंस्य नाम त-
त्सत्यं यत्त्वं प्रजापंतिरस्यधि यद-
स्मिन्वाजिनींव शुभस्स्पर्धन्ते दिव-

असि । सत्यम् । असि । सत्यस्यं । सत्यम् । अ-
सि । ऋतस्यं । पन्थाः । असि । देवानाम् । छाया ।
अमृतंस्य । नामं । तत् । सत्यम् । यत् । त्वम् ।
प्रजापंतिरिति प्रजा-पतिः । असि । अधीति ।
[8]यत् । अस्मिन् । वाजिनि । इव । शुभः । [9]स्पर्ध-

पि त्वमेवासि सत्यस्यापि प्रकृष्टतरं सत्यं त्वमसि । किंच—ऋतस्य यज्ञस्य पन्थाः प्राप्तिमार्गस्त्वमसि त्वया हीष्टे यागफलं प्राप्यते इति । अपि च—त्वं देवानां छायेवासि अनन्यभूतत्वात् । यद्वा—छाया गृहं, गृहमेव त्वं देवानामसि । ब्राह्मणं च भवति—'अश्वे वै सर्वा देवता अन्वायत्ताः'* इति । किंच—अमृतस्य नाम अमरणत्वस्य नमनं त्वमसि । यद्वा—अमृतस्य पर्यायान्तरं त्वमस्यश्व इति । यस्मादेवं त्वमसि तस्मात्तत्सत्यं (कविं) यत्त्वम् । प्रजापतिरसि त्वमेव प्रजापतिः प्रजापतितुल्यो वा त्वमसीति त्वा मन्यामहे । तत्र न काचित्स्तुतिरिति ॥

[8-11] किंच—यत् यस्मादीदृशेऽस्मिन् महाभागे वाजिनि अश्वे अधिकमिव वर्तन्ते । के? शुभः योग्यता†गुणाः अग्न्यादिदेवताभ्योप्य-

*ब्रा. ३-८-७.

†शोभना.

स्सूर्येण विशोपो वृणानः पवते क-
व्यन्पशुं न गोपा इर्यः परिज्मा॥५२

न्ते । दिवः । सूर्येण । विशः । [10]अपः । वृणानः । पवते । कव्यन् । [11]पशुम् । न । गोपा इति गो-पाः । इर्यः । परिज्मेति परि-ज्मा ॥ ५२ ॥

अग्नये वायवे सूर्यायाष्टाचत्वारिꣳशत् ॥ २० ॥

---

धिकमस्मिन् अश्वे गुणास्सन्ति, तस्मादसहमानाः अनेनाश्वेन स्पर्धन्ते दिवः दिवौकसः सूर्येण सवित्रा विशः देवविशो मरुदादयश्च । यद्वा—अनेनाश्वेन सूर्येण सावकेन सर्वलोकोत्पत्तिहेतुना सह स्पर्धन्ते देवा इति । किंच—अयमश्वोपो वृणानः उदकमुत्पादयितुमिच्छन् कर्माणि वा प्रजानां यथायथं प्रवर्तयितुमिच्छन् पवते पुनाति सर्वम् । पवमानरूपेण वा वृष्टिमुत्पादयितुमिच्छन् सर्वत्र गच्छति । गमनकर्माऽत्र पवतिः । कव्यन् स्तुतिमात्मन इच्छन् । कु शब्दे, 'ऋदोरप्' कवं स्तुतिमात्मन इच्छतीति क्यच्, छान्दसोन्त्यलोपः, 'न छन्दसि' इत्यवर्णस्य क्यचीत्वाभावः, सर्वैस्स्तूयमान इति यावत् । यद्वा—कव्यन् शब्दं महान्तं कुर्वन् । कु शब्दे, छान्दसो यकारो विकरणस्य, 'धातोस्तन्निमित्तस्यैव' इत्यवादेशः । पशुं न पशुमिव वृणानो गोपाः । गाः पातीति पातेर्विच् । इर्यः इरा अन्नं, तत्संयोगनिमित्तभूतः इति स्मत् [तस्मात्]? इरायां वा वायुः परिशुद्धः सर्वतो हन्ता सर्वलोकस्येति हेतुत्वमगमत् तद्द्वारेण सर्वगतत्वात् अस्य वाजिनः । परिज्मा इति निपात्यते । तस्मादीदृशोयं अश्वोस्मदभिमतं साधयतीति । वायु-

प्रजननं प्रातस्सवने वै ब्रह्मवादिनस्स त्वा आङ्गिरस आपो वै सोमो वै सहस्रतम्याऽत्रिर्जमदग्निस्संवत्सरो देवस्य विभूरायनायाग्नये पृथिव्या अग्नये पृथिव्यै भुवे ईङ्काराया्ग्नये वायवे सूर्याय विꣳशतिः ॥ २० ॥ प्रजननमाङ्गिरसस्सोमो वै प्रतिगृह्णाति विभूर्वीक्षमाणाय द्विपञ्चाशत्॥५२॥हरिः ओम् ब्रह्मार्पणमस्तु.

---

रेवोच्यते सर्वेण—ईदृशो यः परिज्मा वायुः पवते, त्वया सोपि स्पर्धते इति ॥

इति श्रीभट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये यजुर्वेदभाष्ये सप्तमकाण्डे प्रथमप्रपाठके विंशोनुवाकः प्रपाठकश्च समाप्तः.

ओम्.

साध्या वै देवास्सुवर्गकामा एतꣳ
षड्रात्रमपश्यन्तमाऽहरन्तेनायजन्त
ततो वै ते सुवर्गं लोकमायन् य
एवं विद्वाꣳसंष्षड्रात्रमासते सुवर्ग-
मेव लोकं यन्ति देवसत्त्रं वै षड्रा-

[1]साध्याः । वै । देवाः । सुवर्गकामा इति सुव-र्ग–कामाः । एतम् । षड्रात्रमिति षट्–रात्रम् । अपश्यन् । तम् । एति । अहरन् । तेन । अयज-न्त । ततः । वै । ते । सुवर्गमिति सुवः–गम् । लोकम् । आयन् । ये । एवम् । विद्वाꣳसः । षड्रा-त्रमिति षट्–रात्रम् । आसते । सुवर्गमिति सुवः–गम् । एव । लोकम् । यन्ति । [2]देवसत्त्रमिति दे-व–सत्त्रम् । वै । षड्रात्र इति षट्–रात्रः । प्रत्यक्ष-

[1]अथ चत्वारष्षडहास्सन्ति—साध्यानां प्रथमः, द्वितीय उप-रिष्टात्, त्रिककुत् तृतीयः, अभ्यासश्चतुर्थः । तत्र प्रथमं विद-धाति—साध्या वा इत्यादि ॥ गतम् । साध्या देवविशेषाः । तत्र कर्तरि यत्, उदात्तनिवृत्तिस्वरेण तत उदात्तत्वम् । आसते इत्यादि । चोदितत्वात्सत्त्रं षड्रात्रः, अत एव बहुवचनं देवा इति ॥

[2]देवसत्त्रमित्यादि ॥ देवैर्दृष्टत्वात् । यद्वा—देवा एव सत्त्रात्मना

त्रः प्रत्यक्षꣳ ह्येतानि पृष्ठानि य ए-
वं विद्वाꣳसंष्षड्रात्रमासते साक्षादेव
देवता अभ्यारोहन्ति षड्रात्रो भव-
ति षड्वा ऋतवष्षट्पृष्ठानि ॥ १ ॥ पृ-
ष्ठैरेवर्तूनन्वारोहन्त्यृतुभिस्संवत्सरं ते
संवत्सर एव प्रति तिष्ठन्ति बृहद्रथ-
न्तराभ्यां यन्तीयं वाव रथन्तरमसौ
बृहदाभ्यामेव यन्त्यथो अनयोरेव

मिति प्रति-अक्षम् । हि । एतानि । पृष्ठानि । ये । एवम् । विद्वाꣳसः । षड्रात्रमिति षट्-रात्रम् । आसते । साक्षादिति स-अक्षात् । एव । देवताः । अभ्यारोहन्तीत्यभि-आरोहन्ति । षड्रात्र इति षट्-रात्रः । भवति । षट् । वै । ऋतवः । षट् । पृष्ठानि ॥ १ ॥ पृष्ठैः । एव । ऋतून् । अन्वारोहन्तीत्यनु-आरोहन्ति । ऋतुभिरित्यृतु-भिः । संवत्सरमिति सं-वत्सरम् । ते । संवत्सर इति सं-वत्सरे । एव । प्रतीति । तिष्ठन्ति । बृहद्रथन्तराभ्यामिति बृहत्-रथन्तराभ्याम् । यन्ति । इयम् ।

---

तिष्ठन्तीति देवसत्त्रं देवाः प्रत्यक्षमेव हि अव्यवधानेन वर्तन्ते

प्रति तिष्ठन्त्येते वै यज्ञस्याञ्जसायनी
स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति

वाव। रथन्तरमिति रथं–तरम् । असौ । बृहत् । आभ्याम् । एव । यन्ति । अथो इति । अनयोः । एव । प्रतीति । तिष्ठन्ति । एते इति । वै । यज्ञस्य । अञ्जसायनी इत्यञ्जसा–अयनी । स्रुती इति । ताभ्याम् । एव । सुवर्गमिति सुवः–गम् । लोकम्।

यान्येतानि पृष्ठानि रथन्तरादीनि तान्येव हि देवाः देवतुल्यत्वात्, अतो देवसत्त्रम् । 'कूलतीर' इत्यादिना प्रत्यक्षशब्द उत्तरपदाद्युदात्तः । तस्मात्साक्षादव्यवधानेन देवतास्थानमभ्यारोहन्ति । देवताशब्देन साहचर्यात् तदीयं स्थानमुच्यते । देवता एव वा प्रविशन्ति । सत्त्रत्वात्सर्वत्र बहुवचनम् । पृष्ठानीति वचनात् पृष्ठ्यः षडहो भवतीति गम्यते । तच्चेदानीमेव दर्शयिष्यति त्रिवृदग्निष्टोम इत्यादिना । षट्त्वान्वयात् षड्भिः पृष्ठैः ऋतूननुक्रमेणारोहन्ति। उक्तौ स्वरसमासौ । ऋतुभिश्च संवत्सरं आदित्यात्मानम् । अथ ते तत्रैव प्रतिष्ठिता भवन्ति । अथ बृहद्रथन्तराभ्यामिति । द्वितीयत्वेऽपि अल्पाच्तरत्वाद्बृहतः पूर्वनिपातः । अत्रायं षडहोतिरात्रोहीनः, तत्रान्त्येऽहनि बृहद्रथन्तराभ्यां यन्ति गच्छन्ति यागं निर्वर्तयन्ति । पूर्वेषु त्वहस्सु 'प्रत्यक्षं ह्येतानि' इति वचनात् वैरूपादीन्यपि यथायथं वर्तन्ते । इयमित्यादि । गतम् । अपिचानयोर्द्यावापृथिव्योः प्रतिष्ठिता भवन्ति । यावदिमे तावत् स्थास्यन्ति । 'त्यदादीनां यद्यत्परम्'* इतीदमश्शेषः । एते बृहद्रथन्तरे यज्ञस्याञ्जसा आ-

*काशिकावृ १-२-७२.

त्रिवृद॑ग्निष्टो॒मो भ॑वति॒ तेज॑ ए॒वाव॑ रु-
न्धते पञ्चद॒शो भ॑वती॒न्द्रियमे॒वाव॑ रु-
न्धते सप्तद॒शः ॥२॥ भवत्यन्नाद्य॑स्या-
व॑रुद्ध्या॒ अथो॒ प्रैव तेन॑ जायन्त एक-
वि॒ꣳश॒ो भ॑वति॒ प्रति॑ष्ठित्या॒ अथो॒
रु॒च॑मे॒वात्मन्द॑धते त्रिण॒वो भ॑वति॒ वि-
जि॑त्यै त्रयस्त्रि॒ꣳशो भ॑वति॒ प्रति॑ष्ठि-

य॒न्ति॒ । [3]त्रि॒वृदिति॑ त्रि॒-वृ॒त् । अ॒ग्नि॒ष्टो॒म इत्य॑ग्नि-स्तो॒मः । भ॒व॒ति॒ । तेज॑ः । ए॒व । अवेति॑ । रु॒न्ध॒ते॒। प॒ञ्च॒द॒श इति॑ पञ्च-द॒शः । भ॒व॒ति॒ । इ॒न्द्रि॒यम् । ए॒व । अवेति॑ । रु॒न्ध॒ते॒ । स॒प्त॒द॒श इति॑ सप्त-द॒शः ॥ २ ॥ भ॒व॒ति॒ । अ॒न्ना॒द्य॑स्येत्य॑न्न-अ॒द्य॑स्य । अव॑रुद्ध्या॒ इत्यव॑-रु॒द्ध्यै॒ । अथो॒ इति॑ । प्रेति॑ । ए॒व । तेन॑ । जा॒य॒न्ते॒ । ए॒क॒वि॒ꣳश इत्येक॑-वि॒ꣳशः । भ॒व॒ति॒ । प्रति॑ष्ठित्या॒ इति॒ प्रति॑-स्थि॒त्यै॒ । अथो॒

---

जेवेन अपरिहारेण गमनसाधने स्रुती मार्गौ 'अञ्जस उपसंख्यानम्' इत्यलुक् ॥

[3]त्रिवृदग्निष्टोम इति ॥ पृष्ठ्यषडहं दर्शयति—त्रिवृदग्निष्टोमो रथन्तरसामा प्रथममहः । पञ्चदश उक्थ्यो बृहत्सामा द्विती-

त्यै सदोहविर्धानिनं एतेनं षड्रात्रे-
णं यजेरन्नाश्वत्थी हविर्धानं चाग्नी-
ध्रं च भवतस्तद्धि सुवर्ग्यं चक्रीवं-

इति । रुचंम् । एव । आत्मन् । दधते । त्रिणव इति त्रि-नवः । भवति । विजित्या इति वि-जि-त्यै । त्रयस्त्रिंश इति त्रयः-त्रिंशः । भवति । प्रतिष्ठित्या इति प्रति-स्थित्यै । सदोहविर्धानिन इति सदः-हविर्धानिनः । एतेनं । षड्रात्रेणेति ष-ट्-रात्रेणं । यजेरन् । [4]आश्वत्थी इति । हविर्धानमिति हविः-धानंम् । च । आग्नीध्रमित्याग्नि-इ-ध्रम् । च । भवतः । तत् । हि । सुवर्ग्यमिति सु-वः-ग्यंम् । चक्रीवती इति । भवतः । सुवर्गस्येति

यमहः । सप्तदश उक्थ्यो वैरूपसामा तृतीयमहः । एकविंशषोडशी वैराजसामा चतुर्थम् । त्रिणव उक्थ्यः शाक्करसामा पञ्चमम् । त्रयस्त्रिंश उक्थ्यो रैवतसामा षष्ठम् । इत्येष पृष्ठ्यष्षडहः । वैकृतस्तु विशेषो यथावद्योज्य इति । त्रिवृदादयश्शब्दा व्याख्याताः ॥*

[4]सदोहविर्धानिन इत्युत्तरार्थोनुवादः विशेषं दर्शयितुम् । आश्वत्थी इति ॥ अश्वत्थमय्यौ । विकृत्यभिप्रायामिदं स्त्रीत्वम् । हवि-

*सं. ७-१-१०,[6]

ती भवतस्सुवर्गस्यं लोकस्य समं-
ष्ट्या उलूखलबुध्नो यूपों भवति प्र-
तिष्ठित्यै प्राञ्चों यान्ति प्राङिव हि
सुंवर्गः ॥ ३ ॥ लोकस्सरंस्वत्या या-
न्त्येष वै देवयानः पन्थास्तमेवान्वा-

सुवः–गस्यं । लोकस्यं । समंष्ट्या इति सं–अष्ट्यै । उलूखलबुध्न इत्युलूखल–बुध्नः । यूपः । भवति । प्रतिष्ठित्या इति प्रति–स्थित्यै । प्राञ्चः । यान्ति । प्राङ् । इव । हि । सुवर्ग इति सुवः–गः ॥ ३ ॥ लोकः । सरंस्वत्या । यान्ति । एषः । वै । देवया-न इति देव–यानः । पन्थाः । तम् । एव । अन्वा-

र्धानाग्नीध्रे अश्वत्थविकृती । 'वा छन्दसि' इति पूर्वसवर्णदीर्घत्वम्, 'सुपां सुलुक्' इति लुक् । तद्धि सुवर्ग्यं सुवर्गस्य लोकस्य निमित्तम् । 'गोद्व्यचः' इति यत् । चक्रीवती चक्रयुक्ते शकटे भवतः । अन्य आहुः—एवं सति सदसो विशेषवचने तद्ग्रहणानर्थक्यात् हविर्धानस्य प्रयोजनाभावात् सदोहविर्धाने शकटवती भवत इति । 'आसन्दीवत्' इत्यादौ निपात्यते, 'नपुंसकाच्च' इति शीभावः । समष्ट्यै सम्यक्प्राप्तये । 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । उलूखलबुध्न इति । उलूखलाकारमूल इति । प्राञ्च इति । प्राङ्मुखा गच्छन्ति सत्त्रं समापयन्ति प्रकर्षेणाञ्चन्निव स्वर्गो भवति । सरस्वत्येति । तीर्थविशेषः सर-

रोहन्त्याक्रोशन्तो यान्त्यवर्तिमेवा-
न्यस्मिन्प्रतिषज्य प्रतिष्ठां गच्छन्ति
यदा दश शतं कुर्वन्त्यथैकमुत्थान॰
शतायुः पुरुषश्शतेन्द्रिय आयुष्येवे-

रोहन्तीत्यनु—आरोहन्ति । आक्रोशन्त इत्या—क्रोशन्तः । यान्ति । अवर्तिम् । एव । अन्यस्मिन् । प्रतिषज्येति प्रति—सज्य । प्रतिष्ठामिति प्रति—स्थाम् । गच्छन्ति । [5]यदा । दश । शतम् । कुर्वन्ति । अथ । एकम् । उत्थानमित्युत्—स्थानम् । शतायुरिति शत—आयुः । पुरुषः । शतेन्द्रिय इति शत—इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति ।

---

स्वती, तया यान्ति तां* प्राप्य सत्त्रं समापयन्ति । एष वा इति । देवान्यान्ति अनेनेति देवयानः, तमेव मार्गं समारोहन्ति प्रपद्यन्ते । आक्रोशन्त इति । अवर्ति अवर्तनं दारिद्र्यं अन्यस्मिन् पुरुषे प्रतिषज्य समासज्य प्रतिष्ठां प्राप्तिं गच्छन्ति ॥

[5]यदेत्यादि ॥ यदा ऋषभाधिका दश गावः प्रसवेन शतं कुर्वन्ति अथानन्तरमेकमुत्थानं अयमपि कश्चित्समापनकालः, एतावति काले सत्त्रं समाप्यते इति एके आहुरिति यावत् । शतायुरिति । गतम्† ॥

---

*तद.    †सं. २-३-२[1].

न्द्रिये प्रति तिष्ठन्ति यदा शतꣳ
सहस्रं कुर्वन्त्यथैकमुत्थानꣳ सहस्र-
संमितो वा असौ लोकोऽमुमेव लो-
कमभि जयन्ति यदैषां प्रमीयेत यदा
वा जीयेरन्नथैकमुत्थानं तद्धि तीर्थम्॥

तिष्ठन्ति । [6]यदा । शतम् । सहस्रम् । कुर्वन्ति । अथ । एकम् । उत्थानमित्युत्–स्थानम् । सहस्रसंमित इति सहस्र–सम्मितः । वै । असौ । लोकः । अमुम् । एव । लोकम् । अभीति । जयन्ति । [7]यदा । एषाम् । प्रमीयेतेति प्र–मीयेत । यदा । वा । जीयेरन् । अथ । एकम् । उत्थानमित्युत्–स्थानम् । तत् । हि । तीर्थम् ॥ ४ ॥

पृष्ठानि सप्तदशस्सुवर्गो जयन्ति यदैकादश च॥१॥

[6]यदा शतमित्यादि ॥ एवमेव शतं ऋषभाधिका गावः यदा सहस्रं कुर्वन्ति अथैकमुत्थानमिति वदन्त्येके, प्रसवशक्तिवैचित्र्यात् गवां पक्षभेदः । सहस्रसम्मितः सहस्रतुल्यः महत्वाद्दुःखसंपाद्यत्वाच्च ॥

[7]यदैषामित्यादि ॥ यदैषां सत्त्रिणां मध्ये कश्चित्प्रमीयेत यदा वा जीयेरन् सर्वस्वमपि ह्रियेरन् तदाऽप्येकमुत्थानमिति । तद्धि तीर्थं तारकं दुरितेभ्य इति । अर्थादियन्तं कालमावर्तते षडह इति गम्यते । उक्तं च चोदितत्वात् सत्त्रं षड्रात्र इति ॥

इति सप्तमे द्वितीये प्रथमोनुवाकः.

कुसुरुबिन्द औद्दालकिरकामयत प-
शुमान्थ्स्यामिति स एतꣳ सप्तरात्र-
माऽहरत्तेनायजत तेन वै स याव-
न्तो ग्राम्याः पशवस्तानवारुन्ध य
एवं विद्वान्त्सप्तरात्रेण यजते याव-
न्त एव ग्राम्याः पशवस्तानेवाव

[1]कुसुरुबिन्दः । औद्दालकिरित्यौत्–दालकिः । अकामयत । पशुमानिति पशु–मान् । स्याम् । इति । सः । एतम् । सप्तरात्रमिति सप्त–रात्रम् । एति । अहरत् । तेन । अयजत । तेन । वै । सः । यावन्तः । ग्राम्याः । पशवः । तान् । अवेति । अरुन्ध । यः । एवम् । विद्वान् । सप्तरात्रेणेति सप्त–रात्रेण । यजते । यावन्तः । एव । ग्राम्याः ।

---

[1]अथाष्टौ सप्तरात्राः—कौसुरुबिन्दः प्रथमः, सप्तर्षीणां द्वितीयः, प्राजापत्यस्तृतीयः, छन्दोमपवमानश्चतुर्थः, पृष्ठ्यावलम्बः पञ्चमः, सत्रसम्मितष्षष्ठः, ऐन्द्रस्सप्तमः, जनकसप्तरात्रोऽष्टमः । तत्र प्रथमं विदधाति—कुसुरुबिन्द इति ॥ कुसुरुबिन्दो नाम उद्दालकपुत्रोकामयत पशुमान् बहुपशुस्स्यामिति । 'ह्रस्वनुड्भ्याम्' इति मतुप उदात्तत्वम् । स एतमित्यादि । गतम् । अन्यो द्रष्टा, अयमाहर्ता, तेनापश्यदिति नोक्तम् । गोजाश्वाविकपुरुषगर्द–

रुन्धे सप्तरात्रो भवति सप्त ग्राम्याः पशवस्सप्तारण्यास्सप्त छन्दाꣳस्युभयस्यावरुद्ध्यै त्रिवृदग्निष्टोमो भवति तेजः ॥ ५ ॥ एवाव रुन्धे पञ्चदशो भवतीन्द्रियमेवाव रुन्धे सप्त-

पशवः । तान् । एव । अवेति । रुन्धे । सप्तरात्र इति सप्त-रात्रः । भवति । सप्त । ग्राम्याः । पशवः । सप्त । आरण्याः । सप्त । छन्दाꣳसि । उभयस्य । अवरुद्ध्या इत्यव-रुद्ध्यै । [2]त्रिवृदिति त्रि-वृत् । अग्निष्टोम इत्यग्नि-स्तोमः । भवति । तेजः ॥ ५ ॥ एव । अवेति । रुन्धे । पञ्चदश इति पञ्च-

---

भोष्ट्राः सप्त ग्राम्याः पशवः । द्विखुरश्वापदपक्षिसरीसृपहस्तिमर्कटादयस्सप्तारण्याः । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यस्सप्त छन्दांसि । चतुरुत्तराणि । उभयस्यावरुद्ध्यै पशूनां छन्दसां चावरुद्ध्यै भवति सप्तत्वान्वयात् ॥

[2]त्रिवृदित्यादि ॥ अहीनत्वादत्र सर्वत्रैकवचनम् । त्रयस्त्रिंशस्य स्थाने पञ्चविंश इति विशेषः । महाव्रतवान् ये महाव्रतधर्माः 'स्तुवन्त्यनुश्लोकेन'* इत्याद्याः तद्वान् । विश्वजित्

---

*सं. ७-५-८.

दशो भवत्यन्नाद्यस्यावरुद्ध्या अथो
प्रैव तेन जायत एकविꣳशो भवति
प्रतिष्ठित्या अथो रुचमेवात्मन्धत्ते
त्रिणवो भवति विजित्यै पञ्चविꣳ-
शोऽग्निष्टोमो भवति प्रजापतेराप्त्यै
महाव्रतवानन्नाद्यस्यावरुध्यै विश्व-

दशः । भवति । इन्द्रियम् । एव । अवेति । रुन्धे । सप्तदश इति सप्त—दशः । भवति । अन्नाद्यस्येत्यन्न—अद्यस्य । अवरुध्या इत्यव—रुध्यै । अथो इति । प्रेति । एव । तेन । जायते । एकविꣳश इत्येक—विꣳशः । भवति । प्रतिष्ठित्या इति प्रति—स्थित्यै । अथो इति । रुचम् । एव । आत्मन् । धत्ते । त्रिणव इति त्रि—नवः । भवति । विजित्या इति वि—जित्यै । पञ्चविꣳश इति पञ्च—विꣳशः । अग्निष्टोम इत्यग्नि—स्तोमः । भवति । प्रजापतेरिति प्रजा—पतेः । आप्त्यै । महाव्रतवानिति महाव्रत—वान् । अन्नाद्यस्येत्यन्न—अद्यस्य । अवरुध्या इत्य-

सर्वपृष्ठोतिरात्रस्सप्तममहः । बृहद्रथन्तरवैरूपवैराजशाक्वररैवतानि सर्वाण्यपि पृष्ठान्यस्येति सर्वपृष्ठः ॥

जिथ्सर्वपृष्ठोतिरात्रो भवति सर्व-
स्याभिजित्यै यत्प्रत्यक्षं पूर्वेष्वहस्सु
पृष्ठान्युपेयुः प्रत्यक्षम् ॥ ६ ॥ विश्व-
जिति यथा दुग्धामुपसीदत्येवमु-
त्तममहस्स्यान्नैकरात्रश्चन स्याद्बृहद्र-

र्व–रुध्यै । विश्वजिदिति विश्व–जित् । सर्वपृष्ठ इ-
ति सर्व–पृष्ठः । अतिरात्र इत्यति–रात्रः । भवति ।
सर्वस्य । अभिजित्या इत्यभि–जित्यै । [3]यत् ।
प्रत्यक्षमिति प्रति–अक्षम् । पूर्वेषु । अहस्स्वित्य-
हः–सु । पृष्ठानि । उपेयुरित्युप–इयुः । प्रत्यक्षमि-
ति प्रति–अक्षम् ॥ ६ ॥ विश्वजितीति विश्व–जि-
ति । यथा । दुग्धाम् । उपसीदतीत्युप–सीदति ।
एवम् । उत्तममित्युत्–तमम् । अहः । स्यात् ।
न । एकरात्र इत्येक–रात्रः । चन । स्यात् । बृह-

---

[3]यत्प्रत्यक्षमित्यादि ॥ पूर्वेष्वहस्सु त्रिवृदादिषु पृष्ठानि रथन्तरादीनि प्रत्यक्षमविकृतमेव उपेयुः । तत्तथा स्यात् । कथम्? यथैव दुग्धामपि गां तदैव दोग्धुं दोग्धा उपसीदति एवमिदं उत्तममहर्निस्सारं स्यात्, ततश्च नैकरात्रोपि स्यात् एकरात्रमपि विश्वजिन्न स्यात् । तस्मात्पूर्वेष्वहस्सु बृहद्रथन्तरे रथन्तरं बृहदिति पर्यायेणोपयन्ति अन्त्याद्दिवसात्प्राग्वैरूपादिभिर्विना ॥

थन्तरे पूर्वेष्वहस्सूप यन्तीयं वाव र-
थन्तरमसौ बृहदाभ्यामेव न यन्त्य-
थो अनयोरेव प्रति तिष्ठन्ति यत्प्र-
त्यक्षं विश्वजिति पृष्ठान्युपयन्ति
यथा प्रत्तां दुहे तादृगेव तत् ॥ ७॥

द्रथन्तरे इति बृहत्–रथन्तरे । पूर्वेषु । अहस्स्विव-
त्यहः–सु । उपेति । यन्ति । [4]इयम् । वाव । रथ-
न्तरमिति रथं–तरम् । असौ । बृहत् । आभ्याम् ।
एव । न । यन्ति । अथो इति । अनयोः । एव ।
प्रतीति । तिष्ठन्ति । यत् । प्रत्यक्षमिति प्रति–अ-
क्षम् । विश्वजितीति विश्व–जिति । पृष्ठानि । उ-
पयन्तीत्युप–यन्ति । यथा । प्रत्ताम् । दुहे । ता-
दृक् । एव । तत् ॥ ७ ॥

तेजं उपेयुः प्रत्यक्षं द्विचत्वारिंशच्च ॥ २ ॥

[4]इयं वावेत्यादि ॥ गतम्* । यदित्यादि । अथ विश्व-
जिति सर्वपृष्ठानि प्रत्यक्षमुपयन्ति । यथा प्रत्तां पयो दातुं प्र-
वृत्तां प्रारब्धां प्रस्नवतीं गां दुग्धे तादृक्तद्भवति । आदिकर्मणि
क्तः अत्र उपसर्गात्तः, 'लोपस्त आत्मनेपदेषु' इति तलोपः ॥

इति सप्तमे द्वितीये द्वितीयोनुवाकः.

*सं. ७-२-१.[2]

बृहस्पतिरकामयत ब्रह्मवर्चसी स्या-
मिति स एतमष्टरात्रमपश्यत्तमाऽ-
हरत्तेनायजत ततो वै स ब्रह्मवर्च-
स्यभवद्य एवं विद्वानष्टरात्रेण यज-
ते ब्रह्मवर्चस्येव भवत्यष्टरात्रो भव-
त्यष्टाक्षरा गायत्री गायत्री ब्रह्मवर्च-

[1]बृहस्पतिः । अकामयत । ब्रह्मवर्चसीति ब्रह्म-वर्चसी । स्याम् । इति । सः । एतम् । अष्टरात्रमित्यष्ट-रात्रम् । अपश्यत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । सः । ब्रह्मवर्चसीति ब्रह्म-वर्चसी । अभवत् । यः । एवम् । विद्वान् । अष्टरात्रेणेत्यष्ट-रात्रेण । यजते । ब्रह्मवर्चसीति ब्रह्म-वर्चसी । एव । भवति । अष्टरात्र इत्यष्ट-रात्रः । भवति । अष्टाक्षरेत्यष्टा-अक्षरा । गायत्री । गायत्री । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । गायत्रिया । एव । ब्रह्मवर्चसमिति ब्रह्म-वर्चसम् । अवेति । रुन्धे । अष्टरात्र इत्यष्ट-रात्रः । भवति ।

---

[1]अथाष्टरात्र एकस्तद्विदधाति—बृहस्पतिरित्यादि ॥ गतम् । अष्टत्वान्वयात् अष्टाक्षरगायत्र्यात्मकब्रह्मवर्चसलाभः । पुनरप्यष्टत्वान्वयात् । अष्टभ्यो दिग्भ्यो ब्रह्मवर्चसलाभः ॥

स गायत्रियैव ब्रह्मवर्चसमवं रुन्धेऽ-
ष्टरात्रो भवति चतस्रो वै दिशश्चत-
स्रोवान्तरदिशा दिग्भ्य एव ब्रह्मव-
र्चसमवं रुन्धे ॥ ८ ॥ त्रिवृदग्निष्टोमो
भवति तेजं एवावं रुन्धे पञ्चदशो
भवतीन्द्रियमेवावं रुन्धे सप्तदशो
भवत्यन्नाद्यस्यावरुध्या अथो प्रैव तेन
जायत एकविꣳशो भवति प्रतिष्ठि-
त्या अथो रुचमेवात्मन्धत्ते त्रिणवो

चतस्रः । वै । दिशः । चतस्रः । अवान्तरदिशा इत्यवान्तर—दिशाः । दिग्भ्य इति दिक्—भ्यः । एव । ब्रह्मवर्चसमिति ब्रह्म—वर्चसम् । अवेति । रुन्धे ॥ ८ ॥ [2]त्रिवृदिति त्रि—वृत् । अग्निष्टोम इत्यग्नि—स्तोमः । भवति । तेजः । एव । अवेति । रुन्धे । पञ्चदश इति पञ्च—दशः । भवति । इन्द्रियम् । एव । अवेति । रुन्धे । सप्तदश इति सप्त—दशः । भवति । अन्नाद्यस्येत्यन्न—अद्यस्य । अवरुध्या इत्यव—रुध्यै । अथो इति । प्रेति । एव । तेन । जायते । एकविꣳश इत्येक—विꣳशः । भवति । प्रतिष्ठित्या इति प्रति—स्थित्यै । अथो इति । रु-

भवति विजित्यै त्रयस्त्रिꣳशो भवति
प्रतिष्ठित्यै पञ्चविꣳशोऽग्निष्टोमो भव-
ति प्रजापतेराप्त्यै महाव्रतवानन्नाद्य-
स्यावरुध्यै विश्वजित्सर्वपृष्ठोऽतिरात्रो
भवति सर्वस्याभिजित्यै ॥ १ ॥

चम् । एव । आत्मन् । धत्ते । त्रिणव इति त्रि-नवः । भवति । विजित्या इति वि-जित्यै । त्रयस्त्रिꣳश इति त्रयः-त्रिꣳशः । भवति । प्रतिष्ठित्या इति प्रति-स्थित्यै । पञ्चविꣳश इति पञ्च-विꣳशः । अग्निष्टोम इत्यग्नि-स्तोमः । भवति । प्रजापतेरिति प्रजा-पतेः । आप्त्यै । महाव्रतवानिति महाव्रत-वान् । अन्नाद्यस्येत्यन्न-अद्यस्य । अवरुध्या इत्यव-रुध्यै । विश्वजिदिति विश्व-जित् । सर्वपृष्ठ इति सर्व-पृष्ठः । अतिरात्र इत्यति-रात्रः । भवति । सर्वस्य । अभिजित्या इत्यभि-जित्यै ॥ १ ॥

दिग्भ्य एव ब्रह्मवर्चसमव रुन्धेऽभिजित्यै॥ ३॥

[2]त्रिवृदित्यादि ॥ गतम्* । त्रिवृदादयस्त्रयस्त्रिंशान्ताः षट्, पञ्चविंशोऽग्निष्टोमो महाव्रतवान् सप्तमः, विश्वजित्सर्वपृष्ठोऽतिरात्रोऽष्टममहः ॥

इति सप्तमे द्वितीये तृतीयोऽनुवाकः

*सं. ७-२-२.[2]

प्रजापतिः प्रजा असृजत तास्सृष्टाः क्षुधं न्यायन्त्स एतं नवरात्रमपश्यत्तमाऽहरत्तेनायजत ततो वै प्रजाभ्योकल्पत यर्हि प्रजाः क्षुधं निगच्छेयुस्तर्हि नवरात्रेण यजेतेमे

[1]प्रजापतिरिति प्रजा-पतिः । प्रजा इति प्र-जाः । असृजत । ताः । सृष्टाः । क्षुधम् । नीति । आयन् । सः । एतम् । नवरात्रमिति नव-रात्रम् । अपश्यत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । प्रजाभ्य इति प्र-जाभ्यः । अकल्पत । यर्हि । प्रजा इति प्र-जाः । क्षुधम् । निगच्छेयुरिति नि-गच्छेयुः । तर्हि । नवरात्रेणेति नव-रात्रेण । यजेत । [2]इमे । हि । वै । एतासाम् ।

---

[1]त्रयो नवरात्राः । आयुष्कामस्य प्रथमः । ब्रह्मवर्चसकामस्य द्वितीयः । शललीपिशङ्गस्तृतीयः । तत्राद्यो विधीयते—प्रजापतिः प्रजा इत्यादि ॥ प्रजासृष्ट्यनन्तरमेव क्षुधं नियमेनागच्छन् ततोक्षीयन्त । अथ नवरात्रेण लोकान् प्रजाभ्योकल्पत वृत्तिविधानेन क्षुधं निवर्तयितुं समर्थोभवत् । ततः प्रजा दीर्घमजीवन् । यर्हीत्यादि । यस्मिन् काले । अनद्यतनेर्हिलन्यतरस्याम् ॥

[2]इमे हीत्यादि ॥ एतासां प्रजानां इमे लोका अक्लृप्ता सस्या-

हि वा एतासां लोका अक्लृप्ता अथै-
ताः क्षुधं नि गच्छन्तीमानेवाभ्यो
लोकान्कल्पयति तान्कल्पमानान्प्र-
जाभ्योनु कल्पते कल्पन्ते ॥ १० ॥
अस्मा इमे लोका ऊर्जं प्रजासु द-
धाति त्रिरात्रेणैवेमं लोकं कल्पयति

लोकाः । अक्लृप्ताः । अथ । एताः । क्षुधम् । नीति । गच्छन्ति । इमान् । एव । आभ्यः । लोकान् । कल्पयति । तान् । कल्पमानान् । प्रजाभ्य इति प्र—जाभ्यः । अन्विति । कल्पते । कल्पन्ते ॥ १० ॥ अस्मै । इमे । लोकाः । ऊर्जम् । प्रजास्विति प्र—जासु । दधाति । [3]त्रिरात्रेणेति त्रि—रात्रेण । एव । इमम् । लोकम् । कल्पयति । त्रि-

---

भावेन रक्षणपर्याप्ता न भवन्ति, अत एताः क्षुधं निगच्छन्ति। तस्मान्नवरात्रेण लोकान् प्रजाभ्यः कल्पयति रक्षणाय पर्याप्तान् करोति त्रैलोक्यात्मकत्वान्नवरात्रस्य । तान् लोकान् कल्पमानाननु प्रजार्थं कल्पते यजमानः । अस्मै च यजमानाय लोकाः कल्पन्ते सस्यादिवृद्ध्या । तत ऊर्जमन्नं प्रजासु दधाति ॥

[3]त्रिरात्रेणेत्यादि ॥ प्रथमेन त्रिरात्रेण इमं लोकं कल्पयति।

त्रिरात्रेणान्तरिक्षं त्रिरात्रेणामुं लोकं
यथा गुणे गुणमन्वस्यत्येवमेव त-
ल्लोके लोकमन्वस्यति धृत्या अशि-
थिलं भावाय ज्योतिर्गौरायुरिति
ज्ञातास्स्तोमा भवन्तीयं वाव ज्यो-

रात्रेणेति त्रि–रात्रेण । अन्तरिक्षम् । त्रिरात्रेणेति त्रि–रात्रेण । अमुम् । लोकम् । यथा । गुणे । गुणम् । अन्वस्यतीत्यनु–अस्यति । एवम् । एव । तत् । लोके । लोकम् । अन्विति । अस्यति । धृत्यै । अशिथिलंभावायेत्यशिथिलं–भावाय । [4]ज्योतिः । गौः । आयुः । इति । ज्ञाताः । स्तोमाः । भवन्ति । इयम् । वाव । ज्योतिः । अन्तरिक्षम् ।

---

द्वितीयेन अन्तरिक्षम् । तृतीयेनामुम् । यथेत्यादि । यथा गुणे रज्ज्वां अवयवगुणं द्वितीयं तृतीयं च अन्वस्यति अनुक्षिपति रज्जुमुपोद्बलयति, एवमेकस्मिन् लोके लोकं द्वितीयं तृतीयं च अन्वस्यति त्रैलोक्यात्मक एकतन्त्रस्त्रिरात्रः क्रियते धृत्यै धारणसामर्थ्यार्थं सर्वस्याशिथिलंभावाय च । च्वेरम्भावश्छान्दसः ॥

[4]कथं पुनस्त्रिरात्रस्य लोकत्रयात्मकत्वमित्याह—ज्योतिर्गौरायुरिति॥ ज्ञाताः स्तोमाः अहानि ज्ञाता अभ्यस्ता भवन्ति । इयं वावेत्यादि । गतम् । ज्योतिरादय उक्थ्यविशेषाः त्रिकद्रुका नाम ।

तिरन्तरिक्षं गौरसावायुरेष्वेव लोके-
षु प्रति तिष्ठन्ति ज्ञात्रं प्रजानाम् ॥
॥ ११ ॥ गच्छति नवरात्रो भव-
त्यभिपूर्वमेवास्मिन्तेजो दधाति यो
ज्योगामयावी स्याथ्स नवरात्रेण
यजेत प्राणा हि वा एतस्याधृता

गौः । असौ । आयुः । एषु । एव । लोकेषु । प्रतीति । तिष्ठन्ति । ज्ञात्रम् । प्रजानामिति प्र-जानाम् ॥ ११ ॥ गच्छति । [5]नवरात्र इति नव-रात्रः । भवति । अभिपूर्वमित्यभि-पूर्वम् । एव । अस्मिन् । तेजः । दधाति । यः । ज्योगामयावीति ज्योक्-आमयावी । स्यात् । सः । नवरात्रेणेति नव-रात्रेण । यजेत । प्राणा इति प्र-अनाः ।

---

ज्ञात्रं ख्यातिसिलाके प्रतिष्ठिता [ख्यातिश्लाघे प्रतिष्ठितं?] नाम प्रजानां गच्छति; ज्ञातस्तोमत्वान्नवरात्रस्य । औणादिकस्तृन्प्रत्ययः ॥

[5]नवरात्र इत्यादि ॥ त्रिरात्रष्षड्रात्रो नवरात्र इत्येव । त्रिरात्रानुपूर्व्यवत्त्वात् । अभिपूर्वमनुक्रमेण यजमाने तेजो दधाति । ज्योगामयावी दीर्घरोगी । एतस्य ज्योगामयाविनः प्राणा अधृताः अथैतस्य ज्योगामयति । 'रुजार्थानाम्' इति कर्मणि षष्ठी । अधारितप्राणत्वादेनं दीर्घरोगिणं करोति । तस्मान्नवरात्रेणास्मिन्यजमाने

अथैतस्य ज्योगामयति प्राणानेवा-
स्मिन्दाधारोत यदीतासुर्भवति जी-
वत्येव ॥ १२ ॥

प्रजापतिरकामयत प्र जायेयेति स
एतं दशहोतारमपश्यत्तमजुहोत्तेन

हि । वै । एतस्य । अर्धृताः । अथ । एतस्य । ज्योक् । आमयति । प्राणानिति प्र—अनान् । एव । अस्मिन् । दाधार । उत । यदि । इतासुरितीत—असुः । भवति । जीवति । एव ॥ १२ ॥

कल्पन्ते प्रजानां त्रयस्त्रिंशच्च ॥ ४ ॥

[1]प्रजापतिरिति प्रजा—पतिः । अकामयत । प्रेति । जायेय । इति । सः । एतम् । दशहोतारमि-

---

प्राणान् दाधार धारयति; नवत्वसाम्यात्, प्राणानां च नवत्वात् । छान्दसो लिट्, 'तुजादीनाम्' इति दीर्घत्वम् । उतायं यद्यपीतासुर्गतप्राणो जीवत्येव । 'निपातैर्यद्यदिहन्त' इति प्रथमस्याख्यातस्य निघाताभावः, द्वितीयस्य तिङ्परत्वात् ॥

इति सप्तमे द्वितीये चतुर्थोऽनुवाकः.

---

[1]अथ चत्वारो दशरात्राः—त्रिककुत्प्रथमः । देवपुरा द्विती-

दशरात्रमसृजत तेन दशरात्रेण प्राजायत दशरात्राय दीक्षिष्यमाणो दशहोतारं जुहुयाद्दशहोत्रैव दशरात्रꣳ सृजते तेन दशरात्रेण प्र जा-

ति दश-होतारम् । अपश्यत् । तम् । अजुहोत् । तेन । दशरात्रमिति दश-रात्रम् । असृजत । तेन । दशरात्रेणेति दश-रात्रेण । प्रेति । अजायत । दशरात्रायेति दश-रात्राय । दीक्षिष्यमाणः । दशहोतारमिति दश-होतारम् । जुहुयात् । दशहोत्रेति दश-होत्रा । एव । दशरात्रमिति दश-रात्रम् । सृजते । तेन । दशरात्रेणेति दश-रात्रेण ।

---

यः । छन्दोमवान् तृतीयः । कौसुरुबिन्दश्चतुर्थः । तत्र प्रथमो विधीयते—प्रजापतिरित्यादि ॥ प्रजायेय प्रजावान् स्यामिति प्रजापतिरकामयत । स एतं दशहोतारं 'चित्तिस्स्रुक्'* इत्यादिकं अपश्यत् । दशभूतान्याह्वानानि 'आत्मन्नात्मन्' इति स दशहोता। 'तं वा एतं दशहूतं सन्तम् । दशहोतेत्याचक्षते परोक्षेण'† इति ब्राह्मणम् । 'ऋतः छन्दसि' इति कबभावः । तमित्यादि । गतम् । दशरात्राय दीक्षिष्यमाणः दशहोतारं मनसाऽनुद्रुत्य आहवनीये जुहुयात् । तेन होमेन दशरात्रं सृष्ट्वा तेन दशरात्रेण प्रजायते ॥

---

*तै. आ. ३-१. †ब्रा. २-३-११.

यते वैराजो वा एष यज्ञो यद्दश-
रात्रो य एवं विद्वान्दशरात्रेण यज-
ते विराजमेव गच्छति प्राजापत्यो
वा एष यज्ञो यद्दशरात्रः ॥ १३ ॥
य एवं विद्वान्दशरात्रेण यजते प्रैव
जायत इन्द्रो वै सदृङ्देवताभिरासी-

प्रेति । जायते । [2]वैराजः । वै । एषः । यज्ञः । यत् । दशरात्र इति दश–रात्रः । यः । एवम् । विद्वान् । दशरात्रेणेति दश–रात्रेण । यजते । वि-राजमिति वि–राजम् । एव । गच्छति । प्राजाप-त्य इति प्राजा–पत्यः । वै । एषः । यज्ञः । यत् । दशरात्र इति दश–रात्रः ॥ १३ ॥ यः । एवम् । विद्वान् । दशरात्रेणेति दश–रात्रेण । यजते । प्रे-ति । एव । जायते । [3]इन्द्रः । वै । सदृङिति स–दृङ् । देवताभिः । आसीत् । सः । न । व्यावृत-

[2]वैराज इत्यादि ॥ गतम् । दशत्वान्वयाद्वैराजः, प्रजापतिना सृष्टत्वात्प्राजापत्यः । प्रैव जायते इति । प्रजापतिवत्प्राजापत्यस्यापि प्रजाहेतुत्वात् ॥

[3]इन्द्रो वा इत्यादि ॥ सदृक् सदृशः....देवताभिर्व्यावृत्तिः*

*सदृक्स्वस्वतवसामिति नुम् । व्यावृत्तिः.

थ्स न व्यावृतमगच्छथ्स प्रजापति-
मुपाधावत्तस्मा एतं दशरात्रं प्राय-
च्छत्तमाऽहरत्तेनायजत ततो वै सो-
न्याभिर्देवताभिर्व्यावृतमगच्छद्य एवं
विद्वान्दशरात्रेण यजते व्यावृतमेव
पाप्मना भ्रातृव्येण गच्छति त्रिक-

मिति वि—आवृतम् । अगच्छत् । सः । प्रजापति-
मिति प्रजा—पतिम् । उपेति । अधावत् । तस्मै ।
एतम् । दशरात्रमिति दश—रात्रम् । प्रेति । अय-
च्छत् । तम् । एति । अहरत् । तेन । अयजत ।
ततः । वै । सः । अन्याभिः । देवताभिः । व्यावृ-
तमिति वि—आवृतम् । अगच्छत् । यः । एवम् ।
विद्वान् । दशरात्रेणेति दश—रात्रेण । यजते ।
व्यावृतमिति वि—आवृतम् । एव । पाप्मना । भ्रा-
तृव्येण । गच्छति । [4]त्रिककुदिति त्रि—ककुत् ।

तत्साधारणधर्मनिवृत्तिः । पाप्मना तु व्यावृत्तिः तस्यैव निवृत्तिः, तस्यात्माश्रयत्वात्* ॥

[4]त्रिककुदित्यादि ॥ ककुदत्युन्नतः । निरुदकादित्वादुत्तरपदा-

*तस्मात्तदाश्रयत्वात्.

कुद्वै ॥ १४ ॥ एष यज्ञो यद्दशरा-
त्रः ककुत्पंञ्चदशः ककुदेंकविꣳशः
ककुत्त्रंयस्त्रिꣳशो य एवं विद्वान्दं-
शरात्रेण यजंते त्रिककुदेव संमाना-
नां भवति यजंमानः पञ्चदशो यजं-

वै ॥ १४ ॥ एषः । यज्ञः । यत् । दशरात्र इतिं दश–रात्रः । ककुत् । पञ्चदश इतिं पञ्च–दशः । ककुत् । एकविꣳश इत्येक–विꣳशः । ककुत् । त्रयस्त्रिꣳश इतिं त्रयः–त्रिꣳशः । [5]यः । एवम् । विद्वान् । दशरात्रेणेतिं दश–रात्रेण । यजंते । त्रि-ककुदितिं त्रि–ककुत् । एव । समानानांम् । भव-ति । यजंमानः । पञ्चदश इतिं पञ्च–दशः । यजं-मानः । एकविꣳश इत्येक–विꣳशः । यजंमानः ।

---

न्तोदात्त्वम् । अथ तान्येवोन्नतानिं दर्शयति—ककुत्पञ्चदश इ-त्यादि । अत्रेयमहः क्लृप्तिः—त्रिवृदग्निष्टोमावभितः, मध्ये पञ्च-दश उक्थ्य उन्नतः । सप्तदशाग्निष्टोमावभितः, एकविंश उक्थ्य उन्नतः । त्रिणवाग्निष्टोमावभितः, मध्ये त्रयस्त्रिंश उक्थ्य उन्नतः ॥

[5]य एवमित्यादि ॥ समानानां मध्ये त्रिककुत् त्रिभिः ककु-द्भिरुन्नतैः विद्याभिजनधनैर्युक्तो भवति । यजमान इत्यादि । य-

मान एकवि॒ꣳशो यज॑मानस्त्रयस्त्रि॒-
ꣳशः पुर॒ इत॑रा अभि॒चर्य॑माणो
दशरा॒त्रेण॑ यजेत दे॒वपु॑रा ए॒व पर्यू॒-
ह॒ते॒ तस्य॒ न कुत॑श्च॒नोपा॑व्या॒धो भ॑-
व॒ति॒ नैन॑माभि॒चर॑न्थ्स्तृणु॒ते दे॑वासु॒-

त्र॒य॒स्त्रि॒ꣳश इति॑ त्रयः-त्रि॒ꣳशः । पुरः॑ । इत॑राः ।
[6]अ॒भि॒च॒र्य॑मा॒ण इत्य॑भि-च॒र्य॑माणः । द॒श॒रा॒त्रेणेति॑
दश-रा॒त्रेण॑ । य॒जे॒त॒ । दे॒वपु॑रा इति॑ दे॒व-पु॒राः ।
ए॒व । परीति॑ । ऊ॒ह॒ते॒ । तस्य॑ । न । कुतः॑ । च॒न ।
उ॒पा॒व्या॒ध इत्यु॑प-आ॒व्या॒धः । भ॒व॒ति॒ । न । ए॒-
न॒म् । आ॒भि॒च॒र॒न्नित्या॑भि-चर॒न् । स्तृ॒णु॒ते॒ । [7]दे॒वा-

जमानः पञ्चदशादिः मध्ये राजवद्वोपनीयः । इतराः इतराण्यहानि तस्य पुरः पत्तनस्थानीयानि वर्तन्ते दुर्गाणीत्यर्थः ॥

[6]अभिचर्यमाण इत्यादि ॥ देवपुराः देवानां पुरस्थानीयानि पुरविवक्षया इतराण्यहानि पर्यूहन्ते सर्वतो नयन्ति आत्मनो रक्षार्थम् । 'ऋक्पूः' इति समासान्तः परवल्लिङ्गता च, 'उपसर्गादस्यत्यूह्योः' इति आत्मनेपदम् । तस्य यजमानस्य कस्मादप्युपाव्याधः अभिचारादिबाधा न भवति । न चैनमभिचरंस्तृणुते छादयति ॥

[7]देवासुरा इत्यादि ॥ ते देवाः देवपुराख्यानि दशरात्रस-

रास्संयत्ता आसन्ते देवा एताः॥१५
देवपुरा अपश्यन् यद्दशरात्रस्ताः
पर्यौहन्त तेषां न कुतश्चनोपाव्याधो-
ऽभवत्ततो देवा अभवन्पराऽसुरा यो
भ्रातृव्यवान्त्स्यात्स दशरात्रेण यजे-
त देवपुरा एव पर्यूहते तस्य न कु-
तश्चनोपाव्याधो भवति भवत्यात्म-

सुरा इति देव-असुराः । संयत्ता इति सं-यत्ताः । आसन् । ते । देवाः । एताः ॥ १५ ॥ देवपुरा इति देव-पुराः । अपश्यन् । यत् । दशरात्र इति दश-रात्रः । ताः । परीति । औहन्त । तेषाम् । न । कुतः । चन । उपाव्याध इत्युप-आव्याधः । अभवत् । ततः । देवाः । अभवन् । परेति । असुराः । यः । भ्रातृव्यवानिति भ्रातृव्य-वान् । स्यात् । सः । दशरात्रेणेति दश-रात्रेण । यजेत । देवपुरा इति देव-पुराः । एव । परीति । ऊहते । तस्य । न । कुतः । चन । उपाव्याध इत्युप-आव्याधः ।

---

म्बन्धीन्यहानि । तदेवाह—यद्दशरात्र इति । दशरात्रावयवभूता इत्यर्थः । ता एव देवपुराः पर्यौहन्त परितो रक्षार्थं कृतवन्तः । तेषामित्यादि । गतम् ॥

ना परोऽस्य भ्रातृव्यो भवति स्तो-
मस्स्तोमस्योपस्तिर्भवति भ्रातृव्य-
मेवोपस्तिं कुरुते जामि वै ॥ १६ ॥
एतत्कुर्वन्ति यज्ज्यायाꣳसꣳ स्तो-
ममुपेत्य कनीयाꣳसमुपयन्ति य-

भवति । भवति । आत्मना । परेति । अस्य । भ्रातृव्यः । भवति । [8]स्तोमः । स्तोमस्य । उपस्तिः । भवति । भ्रातृव्यम् । एव । उपस्तिम् । कुरुते । [9]जामि । वै ॥ १६ ॥ एतत् । कुर्वन्ति । यत् । ज्यायाꣳसम् । स्तोमम् । उपेत्येत्युप–इत्य । कनीयाꣳसम् । उपयन्तीत्युप–यन्ति । यत् । अग्निष्टोमसामानीत्यग्निष्टोम–सामानि । अवस्तात् ।

---

[8]स्तोमस्स्तोमस्येत्यादि ॥ गतम् । त्रिवृदादिस्स्तोमः अभितस्स्थितः स्तोमस्य पञ्चदशादेर्मध्ये स्थितस्य उपस्तिः हीनप्राणमाधारकाष्ठं भवति । तेनोपस्तिभूतेन मध्यस्थो धार्यते । समीपे भवतीत्युपस्तिः । अस्तेः क्तिनि 'छन्दस्युभयथा' इति सार्वधातुकत्वात् 'श्नसोरल्लोपः' इत्यकारलोपः भूभावश्च । भ्रातृव्यमुपस्तिहीनं करोति ॥

[9]जामि वा इत्यादि ॥ जामि आलस्यदोषवत् यत् ज्यायांसं महान्तं पञ्चदशादिकं स्तोममुपेत्य कनीयांसं त्रिवृदादिकमुपयन्ति एतद्विपरीतं भवति । अतो जाम्येतत्कुर्वन्ति । तत्र समाधानमाह— यस्मादग्निष्टोमसामानि अवस्तात् पुरस्तात् परस्ताद्धुपरिष्टाच्च त्र्यहस्य

दग्निष्टोमसामान्यवस्ताच्च पुरस्ताच्च
भवन्त्यजामित्वाय त्रिवृदग्निष्टोमो-
ग्निष्टुदाग्नेयीषु भवति तेज एवाव
रुन्धे पञ्चदश उक्थ्य ऐन्द्रीष्विन्द्रि-
यमेवाव रुन्धे त्रिवृदग्निष्टोमो वैश्वदे-
वीषु पुष्टिमेवाव रुन्धे सप्तदशोऽग्नि-

च । पुरस्तात् । च । भवन्ति । अजामित्वायेत्य-जामि—त्वाय । [10]त्रिवृदिति त्रि—वृत् । अग्निष्टोम इत्यग्नि—स्तोमः । अग्निष्टुदित्यग्नि—स्तुत् । आग्नेयीषु । भवति । तेजः । एव । अवेति । रुन्धे । पञ्चदश इति पञ्च—दशः । उक्थ्यः । ऐन्द्रीषु । इन्द्रियम् । एव । अवेति । रुन्धे । त्रिवृदिति त्रि—वृत् । अग्निष्टोम इत्यग्नि—स्तोमः । वैश्वदेवीष्विति वैश्व—देवीषु । पुष्टिम् । एव । अवेति । रुन्धे । स-

---

भवन्ति तदजामित्वाय भवति । तस्य प्रकृतित्वेन प्राधान्यात् तस्योपरिभावेऽपि नास्ति दोष इति ॥

[10]त्रिवृदित्यादि ॥ अग्निष्टुत् अग्निष्टोमविशेषः । सर्वाग्नेयस्त्रिवृत् । आग्नेयीषु ऋक्षु भवति तत्प्रथममहः । पञ्चदश उक्थ्यः ऐन्द्रीषु ऋक्षु भवति द्वितीयमहः । त्रिवृदग्निष्टोमः वैश्वदेवीषु ऋक्षु भवति तृतीयमहः । सप्तदशोऽग्निष्टोमः प्राजापत्यासु ऋक्षु

ष्टोमः प्राजापत्यासु तीव्रसोमोऽन्ना-
द्यस्यावरुध्या अथो प्रैव तेन जाय-
ते ॥ १७ ॥ एकविꣳश उक्थ्यस्सौ-
रीषु प्रतिष्ठित्या अथो रुचमेवात्म-
न्धत्ते सप्तदशोऽग्निष्टोमः प्राजापत्या-
सूपहव्य उपहवमेव गच्छति त्रिण-

सप्तदश इति सप्त—दशः । अग्निष्टोम इत्यग्नि—स्तोमः । प्राजापत्यास्विति प्राजा—पत्यासु । तीव्रसोम इति तीव्र—सोमः । अन्नाद्यस्येत्यन्न—अद्यस्य । अवरुध्या इत्यव—रुध्यै । अथो इति । प्रेति । एव । तेन । जायते ॥ १७ ॥ एकविꣳश इत्येक—विꣳशः । उक्थ्यः । सौरीषु । प्रतिष्ठित्या इति प्रति—स्थित्यै । अथो इति । रुचम् । एव । आत्मन् । धत्ते । सप्तदश इति सप्त—दशः । अग्निष्टोम इत्यग्नि—स्तोमः । प्राजापत्यास्विति प्राजा—पत्यासु । उपहव्य इत्युप—हव्यः । उपहवमित्युप—हवम् । एव । गच्छति । त्रिणवाविति त्रि—नवौ । अग्नि-

---

भवति तीव्रसोमो नामोक्थ्यविशेषः, यत्र शतमाशिरे दुहन्ति, तद्धर्मा स भवति चतुर्थमहः । एकविंश उक्थ्यः सौरीषु ऋक्षु भवति पञ्चममहः । सप्तदशोऽग्निष्टोमः प्राजापत्यासु एव ऋक्षु उ-

वावग्निष्टोमावभित ऐन्द्रीषु विजि-
त्यै त्रयस्त्रिꣳश उक्थ्यो वैश्वदेवीषु
प्रतिष्ठित्यै विश्वजित्सर्वपृष्ठोतिरात्रो
भवति सर्वस्याभिजित्यै ॥ १८ ॥

ष्टोमावित्यग्नि–स्तोमौ । अभितः । ऐन्द्रीषु । वि-जित्या इति वि–जित्यै । त्रयस्त्रिꣳश इति त्रयः–त्रिꣳशः । उक्थ्यः । वैश्वदेवीष्विति वैश्व–देवीषु । प्रतिष्ठित्या इति प्रति–स्थित्यै । विश्वजिदिति वि-श्व–जित् । सर्वपृष्ठ इति सर्व–पृष्ठः । अतिरात्र इत्यति–रात्रः । भवति । सर्वस्य । अभिजित्या इ-त्यभि–जित्यै ॥ १८ ॥

प्राजापत्यो वा एष यज्ञो यद्दशरात्रस्त्रिककुद्वा
एता वै जायत एकत्रिꣳशश्च ॥ ५ ॥

---

पह्व्यो भवति उपह्वे साधुः षष्ठमहः । उपह्वं पूजां गच्छति । त्रिणवाग्निष्टोमावभितः त्रयस्त्रिंशस्य पुरस्तादुपरिष्टाच्च सप्तममहः । तावुभावविशेषात् ऐन्द्रीष्वृक्षु भवतः । त्रयस्त्रिंश उक्थ्यो वैश्वदेवीषु ऋक्षु भवति अष्टममहः । विश्वजित्सर्वपृष्ठोतिरात्रः दशममहः भवति । पृष्ठसामानि रथन्तरादीनि रैवतान्तानि । विश्वजित् सहस्रदक्षिणादिलक्षणः ॥

इति सप्तमे द्वितीये पञ्चमोनुवाकः

ऋतवो वै प्रजाकामाः प्रजां नावि-
न्दन्त तेऽकामयन्त प्रजाꣳ सृजेमहि
प्रजामवं रुन्धीमहि प्रजां विन्देमहि
प्रजावन्तस्स्यामेति त एतमेकादश-
रात्रमपश्यन्तमाऽहरन्तेनायजन्त त-

[1]ऋतवः। वै। प्रजाकामा इति प्रजा–कामाः। प्रजामिति प्र–जाम्। न। अविन्दन्त। ते। अकामयन्त। प्रजामिति प्र–जाम्। सृजेमहि। प्रजामिति प्र–जाम्। अवेति। रुन्धीमहि। प्रजामिति प्र–जाम्। विन्देमहि। प्रजावन्त इति प्रजा–वन्तः। स्याम। इति। ते। एतम्। एकादशरात्रमित्येकादश–रात्रम्। अपश्यन्। तम्। एति। अहरन्। तेन। अयजन्त। ततः। वै। ते। प्र-

[1]समाप्ता अहीनाः। अथ सत्राण्यारभ्यन्ते उभयतोतिरात्राणि। तत्र एकादशरात्रं विदधाति—ऋतव इत्यादि॥ ऋतवो वसन्तादयः प्रजाकामाः प्रजां नाविन्दन्त नालभन्त। ते अकामयन्त—प्रजां सृजेमहि प्रजां स्रष्टुं समर्थाः स्याम, प्रजामवरुन्धीमहि नियन्तुं समर्थास्स्याम। विन्देमहि लभेमहि। प्रजावन्तः बहुप्रजाः सत्प्रजाः स्यामेति। ततस्ते एकादशरात्रेण सर्वमलभन्त। ततस्ते ऋतवः सर्वार्थहितलाभेन अभवन् भूतिमन्तस्सम्पन्नाः। यद्वा—

तो वै ते प्रजामसृजन्त प्रजामवारु-
न्धत प्रजामविन्दन्त प्रजावन्तोभव-
न्त ऋतवोभवन्तदार्तवानामार्तवत्व-
मृतूनां वा एते पुत्रास्तस्मात्॥१९॥
आर्तवा उच्यन्ते य एवं विद्वाꣳसं

जामिति प्र—जाम् । असृजन्त । प्रजामिति प्र—जाम् । अवेति । अरुन्धत । प्रजामिति प्र—जाम् । अविन्दन्त । प्रजावन्त इति प्रजा—वन्तः । अभवन् । ते । ऋतवः । अभवन् । तत् । आर्तवानाम् । आर्तवत्वमित्यार्तव—त्वम् । [2]ऋतूनाम् । वै । एते । पुत्राः । तस्मात् ॥ १९ ॥ आर्तवाः । उच्यन्ते । ये । एवम् । विद्वाꣳसः । एकादशरात्र-

ततस्त ऋतवः स्वैस्स्वैः ऋतुधर्मैर्युक्ता ऋत्वनुरूपस्वभावभाजोभवन् । अथवा—वसन्तादयः ततः प्रभृति ऋतवोभवन् । अरणा ऋतवः एकादशरात्रेण सर्वाभिमतप्राप्त्या ऋतुव्यपदेशभाजोभवन्, तदार्तवानामार्तवत्वम् । ऋतुर्योनिगतो द्रव्यविशेषः ऋतूत्पत्तिहेतुभूतः कालो वा । यथा—'ऋत्वियात्प्रजां विन्दामहे'* इति । ऋतुभवास्सर्वाः प्रजा आर्तवाः । यत्कामा इमे यज्ञमासते तेषां तत आर्तवत्वं ऋतुप्रभवत्वं ऋतुभ्यो वोत्पद्यमा....

[2]ऋतूनां वा इत्यादि ॥ एते सर्वे जन्मिनः पुत्राः तेषामृतूनां

*सं. २-५-१.6

एकादशरात्रमासते प्रजामेव सृज-
न्ते प्रजामव रुन्धते प्रजां विन्दन्ते
प्रजावन्तो भवन्ति ज्योतिरतिरात्रो
भवति ज्योतिरेव पुरस्ताद्दधते सुव-
र्गस्य लोकस्यानुख्यात्यै पृष्ठ्यष्षड-

मित्यैकादश–रात्रम् । आसते । प्रजामिति प्र–जाम् । एव । सृजन्ते । प्रजामिति प्र–जाम् । अवेति । रुन्धते । प्रजामिति प्र–जाम् । विन्दन्ते । प्रजावन्त इति प्रजा–वन्तः । भवन्ति । [3]ज्योतिः । अतिरात्र इत्यति–रात्रः । भवति । ज्योतिः । एव । पुरस्तात् । दधते । सुवर्गस्येति सुवः–गस्य । लोकस्य । अनुख्यात्या इत्यनु–ख्यात्यै । [4]पृष्ठ्यः । षडह इति षट्–अहः ।

'ऋत्वियात्प्रजां विन्दामहै'* तस्मात्प्रजा आर्तवशब्देनोच्यन्ते इति । य एवं विद्वानित्यादि । गतम् ॥

[3]ज्योतिरित्यादिरहःक्लृप्तिः—ज्योतिस्संज्ञसमासादिलक्षणं एकाहः तद्धर्माऽतिरात्रः प्रथममहः; यागारम्भ एव ज्योतिर्धारणात् स्वर्गस्यानुक्रमेण प्रकाशो भवतीति ॥

[4]पृष्ठ्य इत्यादि ॥ द्वादशाहस्य द्वितीयदिवसप्रभृति पृष्ठ्य-

*सं. २-५-१.[6]

हो भवति षड्वा ऋतवष्षट्पृष्ठानि पृष्ठैरे-
वर्तूनन्वारोहन्त्यृतुभिस्संवत्सरं ते सं-
वत्सर एव प्रति तिष्ठन्ति चतुर्विꣳ-
शो भवति चतुर्विꣳशत्यक्षरा गा-
यत्री ॥२०॥ गायत्रं ब्रह्मवर्चसं गा-
यत्रियामेव ब्रह्मवर्चसे प्रति तिष्ठन्ति

भवति । षट् । वै । ऋतवः । षट् । पृष्ठानि । पृष्ठैः । एव । ऋतून् । अन्वारोहन्तीत्यनु–आरोहन्ति । ऋतुभिरित्यृतु–भिः । संवत्सरमिति सं–वत्सरम् । ते । संवत्सर इति सं–वत्सरे । एव । प्रतीति । तिष्ठन्ति । चतुर्विꣳश इति चतुः–विꣳशः । भवति । चतुर्विꣳशत्यक्षरेति चतुर्विꣳशति–अक्षरा । गायत्री ॥ २० ॥ गायत्रम् । ब्रह्मवर्चसमिति ब्रह्म–वर्चसम् । गायत्रियाम् । एव । ब्रह्मवर्चस इति ब्रह्म–वर्चसे । प्रतीति । तिष्ठन्ति ।

---

ष्षडहः । तत्र त्रिवृदग्निष्टोमो रथन्तरसामा प्रथमः । पञ्चदश उक्थ्यो बृहत्सामा द्वितीयः । सप्तदश उक्थ्यो वैरूपसामा तृतीयः । एकविंशष्षोडशी उक्थ्यो वैराजसामा चतुर्थः । त्रिणव उक्थ्यः शाक्वरसामा पञ्चमः । त्रयस्त्रिंश उक्थ्यो रैवतसामा षष्ठः । पृष्ठानि रथन्तरादीनि । बृहत्सामा तृतीयः एकादशरात्र इति ।

चतुश्चत्वारिꣳशो भवति चतुश्चत्वा-
रिꣳशदक्षरा त्रिष्टुगिन्द्रियं त्रिष्टुप्त्रि-
ष्टुभ्येवेन्द्रिये प्रति तिष्ठन्त्यष्टाचत्वा-
रिꣳशो भवत्यष्टाचत्वारिꣳशदक्षरा
जगती जागताः पशवो जगत्यामेव
पशुषु प्रति तिष्ठन्त्येकादशरात्रो भ-
वति पञ्च वा ऋतव आर्तवाः पञ्च-

चतुश्चत्वारिꣳश इति चतुः-चत्वारिꣳशः । भव-ति । चतुश्चत्वारिꣳशदक्षरेति चतुश्चत्वारिꣳशत्-अक्षरा । त्रिष्टुक् । इन्द्रियम् । त्रिष्टुप् । त्रिष्टुभि । एव । इन्द्रिये । प्रतीति । तिष्ठन्ति । अष्टा-चत्वारिꣳश इत्यष्टा-चत्वारिꣳशः । भवति । अष्टाचत्वारिꣳशदक्षरेत्यष्टाचत्वारिꣳशत्-अक्षरा । जगती । जागताः । पशवः । जगत्याम् । एव । पशुषु । प्रतीति । तिष्ठन्ति । एकादशरात्र इत्येकादश-रात्रः । भवति । [5]पञ्च । वै । ऋतवः । आर्तवाः । पञ्च । ऋतुषु । एव । आर्तवेषु । संव-

अतिरात्रावभितो भवत इति, अतिरात्रमेकादशं वक्ष्यामीति मन्यते इत्यादि॥

[5]पञ्च वा इत्यादि ॥ ऋतवः पञ्च । आर्तवा ऋतुस्वभावाश्च पञ्च । प्रजायाः उभयतः परिग्रहार्थं च—यागसाध्याः प्रजाः—

तुष्वेवार्तवेषु संवत्सरे प्रतिष्ठायं प्र-
जामव रुन्धतेऽतिरात्रावभितो भव-
तः प्रजायै परिगृहीत्यै ॥ २१ ॥
ऐन्द्रवायवाग्रान्गृह्णीयाद्यः कामयेत

त्सर इति सं—वत्सरे । प्रतिष्ठायेति प्रति—स्थाय । प्रजामिति प्र—जाम् । अवेति । रुन्धते । अतिरात्रावित्यति—रात्रौ । अभितः । भवतः । प्रजाया इति प्र—जायै । परिगृहीत्या इति परि—गृहीत्यै ॥२१॥

एते पुत्रास्तस्माद्रायत्र्येकान्न पञ्चाशच्च॥६॥

[1]ऐन्द्रवायवाग्रानित्यैन्द्रवायव—अग्रान् । गृह्णीयात् । यः । कामयेत । यथापूर्वमिति यथा—पू-

आद्यवसानयोः अतिरात्राभ्यां परिगृह्यते परितो रक्ष्यते इति । तस्मात्प्रजापरिग्रहार्थं उभयतोऽतिरात्रं भवतीति ॥

इति सप्तमे द्वितीये षष्ठोनुवाकः

[1]अतः परं द्वादशाहप्रकरणम् । एते काम्या ग्रहाग्रताविधयः । केचिन्नैमित्तिकाः बृहत्पृष्ठपक्षे नियमार्थाः । ऐन्द्रवायवाग्रानित्यादि ॥ ऐन्द्रवायवप्रथमान् गृह्णीयात्, सामर्थ्याद्ग्रहानिति गम्यते । वक्ष्यति च 'पूर्णान्ग्रहान्गृह्णीयात्'* इति । यथापूर्वं पूर्वानतिवृत्त्या तेनैव

*तै. सं. ७-२-७.[10]

यथापूर्वं प्रजाः कल्पेरन्निति यज्ञस्य वै क्लृप्तिमनु प्रजाः कल्पन्ते यज्ञस्याक्लृप्तिमनु न कल्पन्ते यथापूर्वमेव प्रजाः कल्पयति न ज्यायाꣳसं कनीयानति क्रामत्यैन्द्रवायवाग्रा-

र्वम् । प्रजा इति प्र-जाः । कल्पेरन् । इति । यज्ञस्य । वै । क्लृप्तिम् । अन्विति । प्रजा इति प्र-जाः । कल्पन्ते । यज्ञस्य । अक्लृप्तिम् । अन्विति । न । कल्पन्ते । यथापूर्वमिति यथा-पूर्वम् । एव । प्रजा इति प्र-जाः । कल्पयति । न । ज्यायाꣳसम् । कनीयान् । अतीति । क्रामति । [2]ऐन्द्रवाय-

क्रमेण कल्पेरन् नासामञ्जस्येन । पदार्थानतिवृत्त्याऽव्ययीभावः । यथा सादृश्ये—यथा पूर्वाः प्रजाः पूर्वपुरुषसंबन्धिन्यः प्रवर्तन्ते एवं मम प्रवर्तन्तामिति विपर्ययस्याप्रसङ्गार्थं प्रसक्तस्य वा निवृत्त्यर्थम् । तेनेयं कामे निमित्ते वा ग्रहाग्रता । यज्ञस्येति । यज्ञस्य क्लृप्तिः सम्यक्त्वं, तेन हेतुना प्रजाः कल्पन्ते सम्यग्वर्तन्ते, यज्ञाक्लृप्त्या च न कल्पन्ते । 'तृतीयार्थे' इति हेतौ अनोः कर्मप्रवचनीयत्वम् । तस्मादैन्द्रवायवाग्रतया यथापूर्वं प्रजाः कल्पयति । ऐन्द्रवायवस्य ग्रहाणां प्रधानत्वात् तदग्रतया न किंचिदसामञ्जस्यमिति । तदेवाह—न ज्यायांसमिति ॥

[2]द्वितीयः पक्षोऽसामञ्जस्याभावोदाहरणप्रदर्शनार्थम् । आमयावी

न्गृह्णीयादामयाविनः प्राणेन वा एष व्यृध्यते यस्यामयति प्राण ऐन्द्रवायवः प्राणेनैवैनꣳ समर्धयति मैत्रावरुणाग्रान्गृह्णीरन् येषां दीक्षितानां प्रमीयेत ॥ २२ ॥ प्राणापानाभ्यां

वाग्रानित्यैन्द्रवायव–अग्रान् । गृह्णीयात् । आमयाविनः । प्राणेनेति प्र–अनेन । वै । एषः । वीति । ऋध्यते । यस्य । आमयति । प्राण इति प्र–अनः । ऐन्द्रवायव इत्यैन्द्र–वायवः । प्राणेनेति प्र–अनेन । एव । एनम् । समिति । अर्धयति । [3]मैत्रावरुणाग्रानिति मैत्रावरुण–अग्रान् । गृह्णीरन् । येषाम् । दीक्षितानाम् । प्रमीयेतेति प्र–मीयेत ॥ २२ ॥ प्राणापानाभ्यामिति प्राण–अपानाभ्याम् ।

---

रोगवान् । 'बहुलं छन्दसि' इति विनिः, 'अन्येषामपि दृश्यते' इति दीर्घः । यस्यामयतीति । आमय इति शेषः । 'रुजार्थानाम्' इति कर्मणि षष्ठी । प्राणात्मन ऐन्द्रवायवस्य प्रधानत्वात् तदग्रतोग्रहणात् प्रथमत एव प्राणवन्तमेनं करोति ॥

[3]मैत्रावरुणाग्रान् गृह्णीरन्निति ॥ सत्र एव, बहुवचनात् । येषां दीक्षितानां मध्ये कश्चित्प्रमीयेत एकस्य मरणेन सर्वे प्राणापानाभ्यां व्यृध्यन्ते । तस्मात्प्राणापानभूतयोर्मित्रावरुणयोः प्राथम्यात्प्रा-

वा एते व्यृध्यन्ते येषां दीक्षितानां प्र-
मीयते प्राणापानौ मित्रावरुणौ प्रा-
णापानावेव मुखतः परि हरन्त
आश्विनाग्रान्गृह्णीतानुजावरोश्विनौवै
देवानामानुजावरौ पश्चेवाग्रं प-
र्यैतामश्विनावेतस्य देवता य आनु-

वै । एते । वीति । ऋध्यन्ते । येषाम् । दीक्षिता-
नाम् । प्रमीयत इति प्र-मीयते । प्राणापानाविति
प्राण-अपानौ । मित्रावरुणाविति मित्रा-वरुणौ ।
प्राणापानाविति प्राण-अपानौ । एव । मुखतः ।
परीति । हरन्ते । [4]आश्विनाग्रानित्याश्विन-अ-
ग्रान् । गृह्णीत । आनुजावर इत्यानु-जावरः ।
अश्विनौ । वै । देवानाम् । आनुजावरावित्यानु-
जावरौ । पश्चा । इव । अग्रम् । परीति । ऐताम् ।
अश्विनौ । एतस्य । देवता । यः । आनुजावर इ-

---

णापानावेव मुखतः परिहरन्ते, आरभ्य समादधते, न ताभ्यां विनियुज्यन्ते ॥

[4]आश्विनाग्रानित्यादि ॥ आनुजावरः उत्तमस्सन् समानानामवरत्वेन पश्चाज्जातः आनुजावरः । साम्नाय्यानुजावरानुष्टुभादीनां स्वार्थिकोऽण् । अश्विनौ हि देवानामानुजावरौ । पश्चाद्देवानां

जावरस्तावेवैनमग्रं परिणयतश्शु-
क्राग्रान्गृह्णीत गतश्रीः प्रतिष्ठाकामोऽ-
सौ वा आदित्यश्शुक्र एषोन्तोन्तं
मनुष्यः॥२३॥ श्रियै गत्वा नि वर्तते-

त्यानु–जावरः। तौ। एव। एनम्। अग्रम्। परीति। नयतः। [5]शुक्राग्रानिति शुक्र–अग्रान्। गृह्णीत। गतश्रीरिति गत–श्रीः। प्रतिष्ठाकाम इति प्रतिष्ठा–कामः। असौ। वै। आदित्यः। शुक्रः। एषः। अन्तः। अन्तम्। मनुष्यः॥ २३ ॥ श्रियै। गत्वा। नीति। वर्तते। अन्तात्। एव। अन्तम्।

---

अग्रं श्रैष्ठ्यं पर्यैतां अभजताम् । 'पश्च पश्चा च छन्दसि' इति पश्चशब्दो निपात्यते । अश्विनावितस्य देवतेत्यादि । गतम् ॥

[5]शुक्राग्रानित्यादि ॥ गता प्राप्ता श्रीर्येन स गतश्रीः। शुक्राग्रान् ग्रामणी राजन्यः स प्रतिष्ठाकामः श्रियः स्थिरत्वं कामयमानः न ह्रसेदियम्, अपि तु प्रकर्षकाष्ठां गच्छेदिति । एषोन्त इति। एष आदित्यः श्रियः अन्तः प्रकर्षकाष्ठा । तत्कार्यत्वात्ताच्छब्द्यम्। तस्मात् अनया शुक्राग्रतया मनुष्यः श्रियः अन्तं प्रकर्षकाष्ठां गत्वा निवर्तते, तन्नियममत्र वर्तते। यद्वा—व्यावर्तयते मनु[ष्य]मात्रात्। तदेवाह—अन्तादिति। अन्तादेव आदित्यादेव पुनरप्यन्तं प्रकर्षकाष्ठामारभते । यद्वा—पूर्वप्रकर्षकाष्ठाया उपरि पुनरपरां प्रकर्षकाष्ठामारभते । ततः परं पापीयान्न भवति, न ह्रसतीति यावत्। अथवा—गतश्रीर्दरिद्रः गता नष्टा श्रीरस्येति । स प्रतिष्ठाकामः।

ऽन्तादेवान्तमा रभते न ततः पापी-
यान्भवति मन्थ्यग्रान्गृह्णीताभिचरं-
न्नार्तपात्रं वा एतद्यन्मन्थिपात्रं मृत्यु-
नैवैनं ग्राहयति ताजगार्तिमार्छत्या-
ग्रयणाग्रान्गृह्णीत यस्य पिता पि-

एति । रभते । न । ततः । पापीयान् । भवति ।
[6]मन्थ्यग्रानिति मन्थि-अग्रान् । गृह्णीत । अभि-
चरन्नित्यभि-चरन् । आर्तपात्रमित्यार्त-पात्रम् ।
वै । एतत् । यत् । मन्थिपात्रमिति मन्थि-पात्रम् ।
मृत्युना । एव । एनम् । ग्राहयति । ताजक् । आ-
र्तिम् । एति । ऋच्छति । [7]आग्रयणाग्रानित्याग्रयण-

एषोन्त इति । एष ह्यादित्यः श्रियोन्तः अन्तकारीति पापहेतुः । तस्मात् श्रियः अन्तं दारिद्र्यकाष्ठामपि गत्वा स्थितोऽपि मनुष्यः अनया ग्रहाग्रतया ततो निवर्तते । कुत इत्याह—अन्तादेव ततो दारिद्र्यात् निवर्तते एव । हेतुमाह—अन्तमारभते इति । शुक्राग्रतया ह्यन्तकारिणमादित्यमारभते प्रथमतो गच्छति । तस्मात्ततः प्रभृति पापीयान् दरिद्रो न भवतीति ॥

[6]मन्थ्यग्रानिति ॥ आर्तपात्रमिति । आर्तकारं पात्रं आर्तपात्रम् । पात्रमेवाभिचर्यमाणं मृत्युना ग्राहयति । मन्थ्यग्रतया स तदानीमेवार्तिं गच्छति, एतेन गच्छति अन्यः आर्तिकर्मा ॥

[7]यस्य पितेत्यादि ॥ यस्य पिता पितामहश्च पुण्यस्स्यात् पुण्यतरो भवति । अथापि तत्पुण्यतरत्वं स्वयं यो न प्राप्नु-

तामहः पुण्यस्स्यादथ तन्न प्राप्नु-
याद्वाचा वा एष इन्द्रियेण व्यृध्यते
यस्य पिता पितामहः पुण्यः ॥२४॥
भवत्यथ तन्न प्राप्नोत्युर इवैतद्यज्ञ-
स्य वागिव यदाग्रयणो वाचैवैनं-
मिन्द्रियेण समर्धयति न ततः पा-

अग्रान् । गृह्णीत । यस्य । पिता । पितामहः । पुण्यः । स्यात् । अथ । तत् । न । प्राप्नुयादिति प्र—आप्नुयात् । वाचा । वै । एषः । इन्द्रियेण । वीति । ऋध्यते । यस्य । पिता । पितामहः । पुण्यः ॥ २४ ॥ भवति । अथ । तत् । न । प्राप्नोतीति प्र—आप्नोति । उरः । इव । एतत् । यज्ञस्य । वाक् । इव । यत् । आग्रयणः । वाचा । एव । एनम् । इन्द्रियेण । समिति । अर्धयति । न । ततः । पापीयान् । भ-

यात् ऊन एव स्याद्विद्याधनादिभिः स आग्रयणाग्रान् गृह्णीतेति । वाचेत्यादि । वाचा इन्द्रियेण वीर्येण च एष व्यृध्यते वियुज्यते । वाचा वीर्येण च वियुक्तः पुरुषः तथा भवति । उर इवेत्यादि । आग्रयणग्रहोप्युर इव वीर्यस्थानमिव यज्ञस्य वागिव, तद्ग्रहणानन्तरं वाचो विसर्गात् । तस्मादाग्रयणाग्रतया वागादिभिरेनं समर्धयति, ततः परं पापीयान्न भवति, तदैव पुण्यं प्राप्नोति वागिन्द्रियसंपत्त्या ॥

पीयान्भवत्युक्थ्याग्रान्गृहीताभिचर्यमाणस्सर्वेषां वा एतत्पात्राणामिन्द्रियं यदुक्थ्यपात्रꣳ सर्वेणैवैनमिन्द्रियेणाति प्र युङ्क्ते सरस्वत्यभि नो नेषि वस्य इति पुरोरुचं कुर्याद्वाग्वै

वति । [8]उक्थ्याग्रानित्युक्थ्य–अग्रान् । गृहीत । अभिचर्यमाण इत्यभि–चर्यमाणः । सर्वेषाम् । वै । एतत् । पात्राणाम् । इन्द्रियम् । यत् । उक्थ्यपात्रमित्युक्थ्य–पात्रम् । सर्वेण । एव । एनम् । इन्द्रियेण । अति । प्रेति । युङ्क्ते । [9]सरस्वति । अभीति । नः । नेषि । वस्यः । इति । पुरोरुचमिति पुरः–रुचम् । कुर्यात् । वाक् । वै ॥ २५ ॥

---

[8]सर्वेषामित्यादि ॥ सर्वेषां पात्राणां इन्द्रियं वीर्यं उक्थ्यपात्रं इन्द्रियसंबन्धात् । सर्वेण वीर्येण एनमभिचरितारमतिप्रयुङ्क्ते अतिक्रम्य प्रयुङ्क्ते ॥

[9]पुरोरुचमिति ॥ पुरस्ताद्रोचयति अहमिति पुरोरुक् । ‘सरस्वत्यभि नः’* इति पुरोरुचं कुर्यात् । नित्यो निवर्तते ‘उपयामगृहीतः’† इति । वाग्वा इत्यादि । तत्र निर्वचनं कृतम् । मन्त्रार्थस्तु—हे सरस्वति! अस्मानाभिमुख्येन वस्यः वरिष्ठं प्राणादिकं प्रापय । मा चास्मान् पस्फरीः हिंसीः । मा चा-

---

* मा. २-४-३. † सं १-४-१.

॥ २५ ॥ सरस्वती वाचैवैनमति प्र युङ्क्ते मा त्वत्क्षेत्राण्यरणानि गन्मेत्याह मृत्योर्वै क्षेत्राण्यरणानि तेनैव मृत्योः क्षेत्राणि न गच्छति पूर्णान्ग्रहान्गृह्णीयादामयाविनः प्राणान् वा एतस्य शुगृच्छति यस्यामयति

सरस्वती । वाचा । एव । एनम् । अति । प्रेति । युङ्क्ते । मा । त्वत् । क्षेत्राणि । अरणानि । गन्म । इति । आह । मृत्योः । वै । क्षेत्राणि । अरणानि । तेन । एव । मृत्योः । क्षेत्राणि । न । गच्छति । [10]पूर्णान् । ग्रहान् । गृह्णीयात् । आमयाविनः । प्राणानिति प्र—अनान् । वै । एतस्य । शुक् । ऋच्छति । यस्य । आमयति । प्राणा इति प्र—अनाः ।

---

स्मानागत्य पयसा हविषा च वर्धिता धाक्षीः । अपि तु सख्येनास्मान् जुषस्व वेश्या वेश्यतया अभिगम्यतया च । किंच—त्वत्प्रसादात् मृत्योः क्षेत्राणि क्षपणशीलानि अरणानि अरणीयानि क्षेत्राणि स्थानानि मा गन्मेति ॥

[10]पूर्णानित्यादि ॥ शुक् शोकः । यदा प्राणान् शुक् प्राप्नोति तदा पुरुषस्य आमयत्यामयः । कर्मणि षष्ठी । तत्र प्राणात्मकानां ग्रहाणां पूर्णतया शोकाभावादामयाभावः । ततश्च

प्राणा ग्रहाः प्राणानेवास्य शुचो मुञ्च-
त्युत यदीतासुर्भवति जीवत्येव पू-
र्णान्ग्रहान्गृह्णीयाद्यर्हि पर्जन्यो न
वर्षेत्प्राणान् वा एतर्हि प्रजानाꣳ
शुगृच्छति यर्हि पर्जन्यो न वर्षति
प्राणा ग्रहाः प्राणानेव प्रजानाꣳ शु-

ग्रहाः। प्राणानिति प्र-अनान्। एव। अस्य। शुचः। मुञ्चति। उत। यदि। इतासुरितीत-असुः। भवति। जीवति। एव। [11]पूर्णान्। ग्रहान्। गृह्णीयात्। यर्हि। पर्जन्यः। न। वर्षेत्। प्राणानिति प्र-अनान्। वै। एतर्हि। प्रजानामिति प्र-जानाम्। शुक्। ऋच्छति। यर्हि। पर्जन्यः। न। वर्षति। प्राणा इति प्र-अनाः। ग्रहाः। प्राणानिति प्र-अनान्। एव। प्रजानामिति प्र-जा-

---

गतासुरपि जीवत्येव। 'वा दान्तशान्तपूर्ण' इति णान्तो निपात्यते॥

[11]यर्हि पर्जन्य इत्यादि॥ पूर्ववत्। अनद्यतने र्हिल्प्रत्ययः। वर्षाभावेन प्रजानां प्राणान् शुगृच्छति। तत्र प्राणात्मकानां ग्रहाणां पूर्णतया प्रजानां प्राणान् शुचो मुञ्चन्ति, प्रकर्षेण वर्षति पर्जन्यः। एवं द्वादशाह एव ग्रहाग्रता विहिता। अन्ये

चो मुंञ्चति ताजक्प्र वंर्षति ॥२६॥

गायत्रो वा ऐन्द्रवायवो गायत्रं प्रा-
यणीयमहस्तस्मात्प्रायणीयेऽहंन्नैन्द्र-

नाम् । शुचः । मुञ्चति । ताजक् । प्रेति । वर्ष-
ति ॥ २६ ॥

प्र मीयेत मनुष्यं ऋध्यते यस्यं पिता पिता-
महः पुण्यो वाग्वा एव पूर्णान्ग्रहान्प-
ञ्चंविꣳशतिश्च ॥ ७ ॥

[1]गायत्रः । वै । ऐन्द्रवायव इत्यैन्द्र–वायवः । गायत्रम् । प्रायणीयमिति प्र–अयनीयम् । अहः । तस्मात् । प्रायणीय इति प्र–अयनीये । अहन्न् ।

---

आहुः—खादिरादिवत्पात्रेषु यत्र ग्रहणं तत्र वाक्येन ग्रहाग्रता गच्छाति इति ज्योतिष्टोम एव विधीयते । उत्तरानुवाकप्रभृति द्वादशाह एवेति ॥

इति सप्तमे द्वितीये सप्तमोनुवाकः.

---

[1]अधुना द्वादशाहस्य नित्यग्रहाग्रताक्लृप्तिः प्रदर्श्यते । तत्र द्विविधो द्वादशाहः—अव्यूढो व्यूढश्च तद्विकार इति । तत्र प्रथमो यथा—ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः । अथेतरेषां नवानामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाग्रयणाग्रम्, एवं विहित....निका........इति । अथ व्यूढो

वायवो गृंह्यते स्व एवैनमायतने गृ-
ह्णाति त्रैष्टुंभो वै शुक्रस्त्रैष्टुंभं द्विती-

ऐन्द्रवायव इत्यैन्द्र–वायवः । गृह्यते । स्वे । एव । एनम् । आयतन इत्या–यतने । गृह्णाति । [2]त्रैष्टुभः । वै । शुक्रः । त्रैष्टुभम् । द्वितीयम् । अहः ।

---

यथा—ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ । अथेतरेषां दशाना-मैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे अथ ऐन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथ आग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे इति । विवहनक्रमश्चैषामनुवाकान्ते दर्शयिष्यते ॥

आदौ तु व्यूढान्यहानि क्रमेण दर्शयति—गायत्रो वा इ-त्यादि ॥ ऐन्द्रवायवो ग्रहो गायत्रं गायत्रभक्तं, प्राथम्यात् । तथा प्रायणीयमहः प्राथम्यादेव गायत्रम् । तस्मात्प्रायणीये दशरात्रस्य प्रथमेऽहनि प्राथम्यादेव प्रायणीयव्यपदेशभाजित्वात्, द्वादशाहस्य द्वितीयेऽहनि । यद्वा—प्रथमस्यातिरात्रस्य प्रथमत्वात्प्रायणीयेऽहानि ऐन्द्रवायवो गृह्यते प्रथममिति भावः, अन्यथा वचनानर्थक्यात्, यत्र क्वचन ग्रहणस्य वचनमन्तरेणापि सिद्धत्वात् । एवं सर्वत्र द्रष्टव्यम् । प्रायणं प्रारम्भः, तत्र भवः प्रायणीयः । दिगा-दित्वाच्छः । यद्वा—प्रायणं स्वर्गगमनादिकर्म, तत्प्रयोजनमस्येति । अनुप्रवचनादित्वाच्छः । स्व एवायतने स्थाने एनं गृह्णाति गायत्रं गायत्रेण, गायत्रत्वात् द्वयोः ॥

[2]त्रैष्टुभः शुक्रः त्रिष्टुब्भक्तित्वात् । त्रैष्टुभं द्वितीयमहः, गायत्र्या अनन्तरत्वात् । तस्माद्द्वितीयेऽहानि दशरात्रस्य शुक्रः प्रथमं गृह्यते इति पूर्ववत् तद्द्रष्टव्यम् ॥

यमह॒स्तस्मा॑द्द्वि॒तीये॑ऽह॑ञ्छु॒क्रो गृ॑ह्यते॒
स्व ए॒वैन॑मा॒यत॑ने गृह्णा॒ति जाग॑तो॒
वा आ॑ग्रय॒णो जाग॑तं तृ॒तीय॒मह॒स्त-
स्मा॑त्तृ॒तीये॑ऽह॑न्नाग्रय॒णो गृ॑ह्यते॒ स्व
ए॒वैन॑मा॒यत॑ने गृह्णा॒त्ये॒तद्वै ॥ २७ ॥

तस्मा॑त् । द्वि॒तीये॑ । अह॑न् । शु॒क्रः । गृ॒ह्य॒ते॒ । स्वे । ए॒व । ए॒न॒म् । आ॒यत॑न॒ इत्या॑—यत॑ने । गृ॒ह्णा॒ति॒ । [3]जाग॑तः । वै । आ॒ग्र॒य॒णः । जाग॑तम् । तृ॒तीय॑म् । अह॑ः । तस्मा॑त् । तृ॒तीये॑ । अह॑न् । आ॒ग्र॒य॒णः । गृ॒ह्य॒ते॒ । स्वे । ए॒व । ए॒न॒म् । आ॒यत॑न॒ इत्या॑—यत॑ने । गृ॒ह्णा॒ति॒ । [4]ए॒तत् । वै ॥ २७ ॥

---

[3]जागत आग्रयणः । उभयोस्तृतीयसवने साहचर्यात् तृतीयत्व-साम्यात् जागतं तृतीयमहः । तस्मादित्यादि । गतम् ॥

[4]एतद्वा इत्यादि ॥ एतदाग्रयणग्रहाग्रतावत्तृतीयमहर्यज्ञं त्रिरात्र-मापत् अवाप्नोत् । यस्माद्वा एतच्छन्दांसि जगत्यन्तानि सर्वाण्याप्नोति—छन्दस्समाप्तौ हि यागसमाप्तिः, तत्राग्रयणे यज्ञावाप्तिरभूदिति—ततश्चतुर्थेऽह्नि द्वितीयस्य यज्ञस्य प्रथमे आग्रयणं प्रथमं गृह्यते । यस्मादेवमाग्रयणः श्वो गृह्यते तद्यज्ञं यत्रादृशन् उदपादयन् छन्दांस्यपश्यन् तत एवाग्रयणादारभ्य एनं यज्ञं पुनः प्रयुङ्क्ते, आग्रयणाग्रता पुनरावर्तते इति यावत्, यज्ञदर्शनाधारत्वेन तस्य

यज्ञमापद्यच्छन्दाꣳस्याप्नोति यदा-
ग्रयणश्श्वो गृह्यते यत्रैव यज्ञमदृश-
न्ततं एवैनं पुनः प्र युङ्क्ते जगन्मु-
खो वै द्वितीयस्त्रिरात्रो जागत आ-
ग्रयणो यच्चतुर्थेऽहन्नाग्रयणो गृह्यते
स्व एवैनमायतने गृह्णात्यथो स्वमेव

यज्ञम् । आपत् । यत् । छन्दाꣳसि । आप्नोति । यत् । आग्रयणः । श्वः । गृह्यते । यत्र । एव । यज्ञम् । अदृशन् । ततः । एव । एनम् । पुनः । प्रेति । युङ्क्ते । [5]जगन्मुख इति जगत्—मुखः । वै । द्वितीयः । त्रिरात्र इति त्रि—रात्रः । जागतः । आग्रयणः । यत् । चतुर्थे । अहन् । आग्रयणः । गृह्यते । स्वे । एव । एनम् । आयतन इत्या—यतने । गृह्णाति । अथो इति । स्वम् । एव । छन्दः । अ-

---

प्रशस्तत्वात् । दृशेर्लुङि इरित्त्वाच्च्लेरङादेशः, 'ऋदृशोऽङि गुणः' इति व्यत्ययेन न प्रवर्तते ॥

[5]जगन्मुख । इत्यादि ॥ जागतराथन्तरबार्हतत्वाद्द्वितीयः त्रिरात्रः जगन्मुखः । जगत्सामप्रधानत्वात् जागतत्वमाग्रयणस्योक्तम् । स्व एव जागते आयतने एनमाग्रयणं गृह्णाति । अथो अपि च स्वयमेव छन्दो जगतीमनुपर्यावर्तते द्वितीयत्रिरात्रसंबन्धीन्यहानि

छन्दोऽनु पर्यावर्तन्ते राथन्तरो वा ऐन्द्रवायवो राथन्तरं पञ्चममहस्त-स्मात्पञ्चमेऽहन्न् ॥ २८ ॥ ऐन्द्रवायवो गृह्यते स्व एवैनमायतने गृह्णाति बार्हतो वै शुक्रो बार्हत५

न्निति । पर्यावर्तन्त इति परि—आवर्तन्ते । [6]राथन्तर इति राथं—तरः । वै । ऐन्द्रवायव इत्यैन्द्र—वायवः । राथन्तरमिति राथं—तरम् । पञ्चमम् । अहः । तस्मात् । पञ्चमे । अहन् ॥ २८ ॥ ऐन्द्रवायव इत्यैन्द्र—वायवः । गृह्यते । स्वे । एव । एनम् । आयतन इत्या—यतने । गृह्णाति । [7]बार्हतः । वै । शुक्रः । बार्हतम् । षष्ठम् । अहः । तस्मात् ।

स्वेन छन्दसा अनुपर्यावर्तन्त इत्यर्थः । पूर्ववद्गतिनिघातसमासौ, तृतीयार्थे अनोः कर्मप्रवचनीयत्वम् । यद्वा—स्वयमेव पर्यावर्तन्ते* ॥

[6]राथन्तरो वा ऐन्द्रवायवः, द्वयोरपि प्राथम्यात्, साहचर्याच्च । राथन्तरं पञ्चममहः रथन्तरप्रधानत्वात् । तस्मादित्यादि । गतम् ॥

[7]बार्हतः शुक्रः, बृहद्भक्तित्वात् । बार्हतं षष्ठमहः, क्रमात् । तस्मादित्यादि । स्व एव बार्हते एनं गृह्णाति ॥

*स्वयमेव छन्दः अनु तदेव पर्यावर्तते.

षष्ठमहस्तस्मात्षष्ठेऽहञ्छुक्रो गृह्यते स्व एवैनमायतने गृह्णात्येतद्वै द्वितीयं यज्ञमापद्यच्छन्दाꣳस्याप्नोति यच्छुक्रश्श्वो गृह्यते यत्रैव यज्ञमदृशन्तत एवैनं पुनः प्र युङ्क्ते त्रिष्टुङ्मुखो वै तृतीयस्त्रिरात्रस्त्रैष्टुभः ॥ २१ ॥ शुक्रो यथ्सप्तमेऽहञ्छुक्रो गृह्यते स्व

षष्ठे । अहन्न् । शुक्रः । गृह्यते । स्वे । एव । एनम् । आयतन इत्या-यतने । गृह्णाति । [4]एतत् । वै । द्वितीयम् । यज्ञम् । आपत् । यत् । छन्दाꣳसि । आप्नोति । यत् । शुक्रः । श्वः । गृह्यते । यत्र । एव । यज्ञम् । अदृशन् । ततः । एव । एनम् । पुनः । प्रेति । युङ्क्ते । [5]त्रिष्टुङ्मुख इति त्रिष्टुक्-मुखः । वै । तृतीयः । त्रिरात्र इति त्रि-रात्रः । त्रैष्टुभः ॥ २१ ॥ शुक्रः । यत् । सप्तमे । अहन्न् । शुक्रः । गृह्यते । स्वे । एव । एनम् । आयतन इ-

---

[4]एतद्वा इत्यादि ॥ द्वितीयं त्रिरात्रं यज्ञं शुक्राग्रतावत् अहरापत् छन्दांसि बृहत्यन्तानि । यच्छुक्र इत्यादि । गतम् ॥

[5]त्रिष्टुङ्मुख इति ॥ त्रिष्टुग्वाक्प्राणसंबन्धित्वात् तृतीयत्रिरात्र

एवैनमायतने गृह्णात्यथो स्वमेव छन्दोऽनु पर्यावर्तन्ते वाग्वा आग्रयणो वागष्टममहस्तस्मादष्टमेऽहन्नाग्रयणो गृह्यते स्व एवैनमायतने गृह्णाति प्राणो वा ऐन्द्रवायवः प्राणो नवममहस्तस्मान्नवमेऽहन्नैन्द्रवायवो

त्या—यतने । गृह्णाति । अथो इति । स्वम् । एव । छन्दः । अन्विति । पर्यावर्तन्त इति परि—आवर्तन्ते । [10]वाक् । वै । आग्रयणः । वाक् । अष्टमम् । अहः । तस्मात् । अष्टमे । अहन् । आग्रयणः । गृह्यते । स्वे । एव । एनम् । आयतन इत्या—यतने । गृह्णाति । [11]प्राण इति प्र—अनः । वै । ऐन्द्रवायव इत्यैन्द्र—वायवः । प्राण इति प्र—अनः । नवमम् । अहः । तस्मात् । नवमे । अहन् । ऐन्द्रवायव इत्यैन्द्र—वायवः । गृह्यते । स्वे । एव ।

---

संबन्धिनामह्नाम् । त्रैष्टुभः शुक्रः, द्वितीयत्वाद्वयोः । यत्सप्तमेऽहन्नित्यादि । तृतीयं त्रिरात्रं यज्ञम् । छन्दांसीत्यादि । गतम् ॥

[10]वाग्वा इति ॥

[11]प्राण ऐन्द्रवायवः, तत्संबन्धात्प्राणो नवममहः, नवमत्वान्वयात्, प्राणानां च नवत्वान्वयात् ॥

गृह्यते स्व एवैनमायतने गृह्णात्ये-
तत् ॥ ३० ॥ वै तृतीयं यज्ञमापद्य-
च्छन्दाꣳस्याप्नोति यदैन्द्रवायवश्श्वो
गृह्यते यत्रैव यज्ञमदृशन्ततं एवैनं
पुनः प्र युङ्क्तेऽथो स्वमेव छन्दोऽनु प-
र्यावर्तन्ते पथो वा एतेऽध्यपथेन य-
न्ति येऽन्येनैन्द्रवायवात्प्रतिपद्यन्तेऽ-

एनम् । आयतन इत्या—यतने । गृह्णाति । [12]एतत् । ॥ ३० ॥ वै । तृतीयम् । यज्ञम् । आपत् । यत् । छन्दाꣳसि । आप्नोति । यत् । ऐन्द्रवायव इत्यैन्द्र—वायवः । श्वः । गृह्यते । यत्र । एव । यज्ञम् । अदृशन् । ततः । एव । एनम् । पुनः । प्रेति । युङ्क्ते । अथो इति । स्वम् । एव । छन्दः । अन्विति । पर्यावर्तन्त इति परि—आवर्तन्ते । [13]पथः । वै । एते । अधीति । अपथेन । यन्ति । ये । अन्येन । ऐन्द्रवायवादित्यैन्द्र—वायवात् । प्रतिपद्यन्त इति प्रति—

[12]एतद्वा इत्यादि ॥ तृतीयं त्रिरात्रम् । छन्दांसीत्यादि । गतम् ॥

[13]पथो वा इत्यादि ॥ एते खलु पथः मार्गादपेत्य अपथेन गच्छन्ति ये अन्येन ऐन्द्रवायवात् प्रतिपद्यन्ते, अस्य प्र-

न्तः खलु वा एष यज्ञस्य यद्दशम-
मर्हर्दशमेऽहंन्नैन्द्रवायवो गृंह्यते यज्ञ-
स्यं ॥ ३१ ॥ एवान्तं गत्वाऽपंथा-
त्पन्थामपिं यन्त्यथो यथा वहींयसा
प्रतिसारं वहंन्ति तादृगेव तच्छ-

पद्यंन्ते। अन्तंः। खलुं। वै। एषः। यज्ञस्यं। यत्। दशमम्। अहंः। दशमे। अहन्। ऐन्द्रवायव इत्यैन्द्र-वायवः। गृह्यते। यज्ञस्यं ॥ ३१ ॥ एव। अन्तम्। गत्वा। अपंथात्। पन्थाम्। अपीतिं। यन्ति। अथो इतिं। यथां। वहींयसा। प्रतिसारमितिं प्रति-सारम्। वहंन्ति। तादृक्। एव। तत्। [14]छन्दांꣳसि। अन्यः। अन्यस्यं। लोकम्।

क्रतौ प्रज्ञातत्वात्। अन्त इत्यादि। यज्ञान्ते ऐन्द्रवायवान्वये यज्ञस्य सम्यक् निर्वृत्त्या अपथात् पन्थानमेव प्रतिपद्यन्ते। द्वितीयायामपि व्यत्ययेनात्वम्। अथो अपिच यथा वहीयसा वोढृतरेण अनडुहा प्रतिसारं वरिष्ठद्रव्यं वहन्ति तादृक् तद्दशमं वरिष्ठतमं वोढृतरेण ऐन्द्रवायवेन वहन्ति। वोढृशब्दात् 'तुश्छन्दसि' इतीयसुन्, 'तुरिष्ठेमेयस्सु' इति तृशब्दलोपः ॥

[14]इदानीं तेषां विवहनक्रमं दर्शयति—छन्दांसीत्यादि ॥ अन्यः अन्यस्य लोकं स्थानं अभ्यध्यायन् कथं नामैनं गच्छेमेति। कर्मव्यतिहारे सर्वनाम्नो द्वे भवतः। असमासपक्षे प्रथमैकवचनं

न्दाꣳस्यन्योन्यस्य लोकमभ्यध्याय-
न्तान्येतेनैव देवा व्यवाहयन्नैन्द्रवा-
यवस्य वा एतदायतनं यच्चतुर्थम-
हस्तस्मिन्नाग्रयणो गृह्यते तस्मादाग्र-
यणस्यायतने नवमेऽहन्नैन्द्रवायवो
गृह्यते शुक्रस्य वा एतदायतनं यत्प-
ञ्चमम् ॥ ३२ ॥ अहस्तस्मिन्नैन्द्रवा-

अभीति । अध्यायन् । तानि । एतेन । एव । दे-
वाः । वीति । अवाहयन् । ऐन्द्रवायवस्येत्यैन्द्र-
वायवस्य । वै । एतत् । आयतनमित्या-यतनम् ।
यत् । चतुर्थम् । अहः । तस्मिन् । आग्रयणः ।
गृह्यते । तस्मात् । आग्रयणस्य । आयतन इत्या-
यतने । नवमे । अहन् । ऐन्द्रवायव इत्यैन्द्र-वाय-
वः । गृह्यते । शुक्रस्य । वै । एतत् । आयतनमि-
त्या-यतनम् । यत् । पञ्चमम् ॥ ३२ ॥ अहः । त-
स्मिन् । ऐन्द्रवायव इत्यैन्द्र-वायवः । गृह्यते । त-

---

च पूर्वपदस्य । अन्योन्यस्येत्यर्थः । तानि छन्दांसि देवाः एतेन वक्ष्यमाणेन क्रमेण व्यवाहयन् व्यत्यासेन प्रापयन् स्थानानि। कथमित्याह—ऐन्द्रवायवस्येत्यादि । ऐन्द्रवायवस्य चतुर्थमहः आयतनं स्थानं अव्यूढे ऐन्द्रवायवशुक्राग्रयणानां पुनःपुनः प्रवृत्तेः।

यवो गृह्यते तस्मादैन्द्रवायवस्यायतं-
ने सप्तमेऽहञ्छुक्रो गृह्यत आग्रयण-
स्य वा एतदायतनं यत्षष्ठमहस्त-
स्मिञ्छुक्रो गृह्यते तस्माच्छुक्रस्याय-
तनेऽष्टमेऽहन्नाग्रयणो गृह्यते छन्दा-

स्मात् । ऐन्द्रवायवस्येत्यैन्द्र-वायवस्य । आयतने इत्या-यतने । सप्तमे । अहन् । शुक्रः । गृह्यते । आग्रयणस्य । वै । एतत् । आयतनमित्या-यतनम् । यत् । षष्ठम् । अहः । तस्मिन् । शुक्रः । गृह्यते । तस्मात् । शुक्रस्य । आयतन इत्या-यतने । अष्टमे । अहन् । आग्रयणः । गृह्यते । [15]छन्दांसि । एव । तत् । वीति । वाहयति । प्रेति ।

---

तस्मिन् चतुर्थेऽहनि आग्रयणो गृह्यते । व्यूढे तच्च प्रदर्शितम् । तस्मात् स्वस्थानापहारिणः आग्रयणस्य स्थाने नवमे अहनि ऐन्द्रवायवो गृह्यते । एतेनैव शुक्रस्य वा एतदित्यादि व्याख्यातम् । तत्र प्रथमं शुक्रैन्द्रवायवयोः, तत आग्रयणशुक्रयोः ॥

[15]छन्दांस्येवेत्यादि ॥ तत् तथा कुर्वन् छन्दांस्येव विवाहयति परस्परेणाभिसंबन्धीनि करोति, तत्प्रधानत्वादह्नाम् । एवं छन्दसां विवहनस्य वेदिता वस्यसः प्रकृष्टात्कुलात् विवाहं प्राप्नोति दारिकां परिणयति । वसुमच्छब्दादीयसुनि 'विन्मतोर्लुक्' इति लुक् । टिलोप छान्दसः प्रत्ययादेर्लोपः । अथो अपिच देवार्थं यज्ञे

ँ स्येव तद्वि वाहयति प्र वस्यंसो वि-
वाहमाप्नोति य एवं वेदाथो देवता-
भ्य एव यज्ञे संविदं दधाति तस्मा-
दिदमन्योन्यस्मैं ददाति ॥ ३३ ॥

वस्यंसः । विवाहमिति वि-वाहम् । आप्नोति । यः । एवम् । वेदं । अथो इति । देवताभ्यः । एव । यज्ञे । संविदमिति सं-विदम् । दधाति । तस्मात् । इदम् । अन्यः । अन्यस्मैं । ददाति ॥ ३३ ॥

एतद्वै पञ्चमेऽहन्त्रैष्टुभ एतद्वृह्यते यज्ञस्यं
पञ्चममन्यस्मा एकं च ॥ ८ ॥

---

यज्ञनिर्वृत्तये संविदं दधाति संधारयति व्यूढं यज्ञं निर्वर्तयिष्यामीति । तस्मादिदं अनेन क्रमेण छन्दांसि अन्योन्यस्मै ददाति अन्यच्छन्दसः स्थानमन्यस्मै ददाति, अन्यदपि चान्यस्मै । पूर्ववद्विर्वचनादि । यद्वा—तस्मादन्यः पुरुषः अन्यस्मै अन्यगोत्राय स्वदारिकां करोति यस्मादेवं छन्दांसि अन्योन्यस्मै स्वस्थानं प्रादुरिति । इदमिति सामान्येन लोकप्रसिद्धिं दर्शयति । इदमेव विवहन प्रतिपादनं लिङ्गं समू[अव्यू]ढो व्यूढस्य प्रकृतिरिति । असत्यां हिं तस्यां ऐन्द्रवायवस्य वा इत्याद्यघटमानं स्यात्, न हि कस्य चित् किञ्चित्स्थानं नियतं स्यात् ॥

इति सप्तमे द्वितीये अष्टमोऽनुवाकः.

प्रजापतिरकामयत प्र जायेयेति स एतं द्वादशरात्रमपश्यत्तमाऽहरत्तेनायजत ततो वै स प्राजायत यः कामयेत प्र जायेयेति स द्वादशरात्रेण यजेत प्रैव जायते ब्रह्मवादिनो वदन्त्यग्निष्टोमप्रायणा यज्ञा अथ कस्मा-

[1]प्रजापतिरिति प्रजा–पतिः । अकामयत । प्रेति । जायेय । इति । सः । एतम् । द्वादशरात्रमिति द्वादश–रात्रम् । अपश्यत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । सः । प्रेति । अजायत । यः । कामयेत । प्रेति । जायेय । इति । सः । द्वादशरात्रेणेति द्वादश–रात्रेण । यजेत । प्रेति । एव । जायते । ब्रह्मवादिन इति ब्रह्म–वादिनः । वदन्ति । अग्निष्टोमप्रायणा इत्यग्निष्टोम–प्रायणाः । यज्ञाः । अथ । कस्मात् । अ-

---

[1]इदानीं द्वादशाहो विधीयते—प्रजापतिरित्यादि ॥ गतम्* ।

ब्रह्मवादिन इत्यादि । अग्निष्टोमप्रायणाः यज्ञाः अग्निष्टोमारम्भणा भवन्ति सर्वे संगताः, अथ कस्मात्कारणात् तत्र द्वादशाहे अतिरात्रः पूर्वः प्रयुज्यते इति ब्रह्मवादिनः पर्यनुयोगं

---

*सं–७-२-५.

दतिरात्रः पूर्वः प्र युज्यत इति च-
क्षुषी वा एते यज्ञस्य यदतिरात्रौ
कनीनिके अग्निष्टोमौ यत् ॥ ३४ ॥
अग्निष्टोमं पूर्वं प्रयुञ्जीरन्बहिर्धा क-
नीनिके दध्युस्तस्मादतिरात्रः पूर्वः
प्र युज्यते चक्षुषी एव यज्ञे धित्वा

तिरात्र इत्यति—रात्रः । पूर्वः । प्रेति । युज्यते । इति । चक्षुषी इति । वै । एते इति । यज्ञस्य । यत् । अतिरात्रावित्यति—रात्रौ । कनीनिके इति । अग्निष्टोमावित्यग्नि—स्तोमौ । यत् ॥ ३४ ॥ अग्निष्टोममित्यग्नि—स्तोमम् । पूर्वम् । प्रयुञ्जीरन्निति प्र—युञ्जीरन् । बहिर्धेति बहिः—धा । कनीनिके इति । दध्युः । तस्मात् । अतिरात्र इत्यति—रात्रः । पूर्वः । प्रेति । युज्यते । चक्षुषी इति । एव । यज्ञे । धित्वा । मध्यतः । कनीनिके इति । प्रतीति । दधाति ।

कुर्वन्ति । तत्रैवं ब्रूयादित्याह—चक्षुषी वा इत्यादि । यज्ञस्य चक्षुस्स्थानीयौ अतिरात्रौ । कनीनिका चक्षुस्स्थं कृष्णमण्डलं, तत्स्थानीयावग्निष्टोमौ यज्ञस्य । तथा सति यद्यग्निष्टोमं पूर्वं प्रयुञ्जीरन् बहिर्धा चक्षुषः बहिः कनीनिके दध्युः स्थापयेयुः । छान्दसो धाप्रत्ययः । तस्मादतिरात्र एव प्रथमः प्रयोक्तव्य इति । एवं हि सति चक्षुषी यज्ञे धित्वा स्थापयित्वा अविनष्टे कृत्वा ।

मध्यतः कनीनिके प्रति दधति यो वै गायत्रीं ज्योतिःपक्षां वेद ज्योतिषा भासा सुवर्गं लोकमेति यावग्निष्टोमौ तौ पक्षौ येऽन्तरेऽष्टावुक्थ्याः स आत्मैषा वै गायत्री ज्योतिःपक्षा य एवं वेद ज्योतिषा भासा सुवर्गं लोकम् ॥ ३५ ॥ एति

[2]यः । वै । गायत्रीम् । ज्योतिःपक्षामिति ज्योतिः—पक्षाम् । वेद । ज्योतिषा । भासा । सुवर्गमिति सुवः—गम् । लोकम् । एति । यौ । अग्निष्टोमावित्यग्नि—स्तोमौ । तौ । पक्षौ । ये । अन्तरे । अष्टौ । उक्थ्याः । सः । आत्मा । एषा । वै । गायत्री । ज्योतिःपक्षेति ज्योतिः—पक्षा । यः । एवम् । वेद । ज्योतिषा । भासा । सुवर्गमिति सुवः—गम् । लो-

---

विपर्यये हि चक्षुरेव न स्यादिति । धारणेन ततस्तयोः चक्षुषोर्मध्यतः कनीनिके प्रतिदधति प्रतिष्ठापयन्ति ॥

[2]यो वै गायत्रीमित्यादि ॥ ज्योतिःपक्षां ज्योतिष्टोमपक्षां पक्षिरूपां गायत्रीं यो वेद स ज्योतिषा द्योतमानया भासा स्वर्गं गच्छति । तमेव दर्शयति—यावग्निष्टोमौ दशरात्रस्याद्यन्तौ तावस्याः पक्षौ, ये मध्यस्थिताः अष्टावुक्थ्याः सोऽस्या आत्मा । एषेत्यादि । गतम् । अस्याश्चक्षुषी अतिरात्रावित्युक्तमेव ॥

प्रजापतिर्वा एष द्वादशधा विहितो यद्द्वादशरात्रो यावतिरात्रौ तौ पक्षौ येऽन्तरेष्टावुक्थ्यास्स आत्मा प्रजापतिर्वावैष सन्त्सद्ध वै सत्त्रेण

कम् ॥ ३५ ॥ एति । [5]प्रजापतिरिति प्रजा-पतिः । वै । एषः । द्वादशधेति द्वादश-धा । विहित इति वि-हितः । यत् । द्वादशरात्र इति द्वादश-रात्रः । यौ । अतिरात्रावित्यति-रात्रौ । तौ । पक्षौ । ये । अन्तरे । अष्टौ । उक्थ्याः । सः । आत्मा । [4]प्रजापतिरिति प्रजा-पतिः । वाव । एषः । सन् । सत् । ह । वै । सत्त्रेण । स्पृणोति ।

---

[3]एवं गायत्र्याः पक्षित्वेन रूपणं सिद्धम् । अस्यास्सोमाहरणादौ पक्षित्वमिति तद्रूपो द्वादशाहो रूपितः । इदानीं प्रजापतित्वेन रूप्यते—प्रजापतिर्वा इत्यादि ॥ द्वादशधा द्वादशात्मा विवक्षितः[1] । तस्यातिरात्रौ पक्षौ, पार्श्वे अन्तस्स्थिता अष्टावुक्थ्या आत्मा, सकनीनिके अस्य चक्षुषी उक्ते ॥

[4]प्रजापतिर्वावेत्यादि ॥ एष द्वादशाहेन यष्टा प्रजापतिरेव सन् प्रकृष्टं प्रशस्तं अविनाशं फलं सत्रेणानेन स्पृणोति लभते । स्पृ प्रीत्यादौ, सौवादिकः । किं च—प्राणा एव स्वयं सत्फलं तस्मात्प्राणानेव स्पृणोति ॥

---

[1]विहितः.

स्पृणोति प्राणा वै सत्प्राणानेव स्पृणोति सर्वासां वा एते प्रजानां प्राणैरासते ये सत्रमासते तस्मात्पृच्छन्ति किमेते सत्रिण इति प्रियः

प्राणा इति प्र–अनाः । वै । सत् । प्राणानिति प्र–अनान् । एव । स्पृणोति ।[5] सर्वासाम् । वै । एते । प्रजानामिति प्र–जानाम् । प्राणैरिति प्र–अनैः । आसते । ये । सत्रम् । आसते । तस्मात् । पृच्छन्ति । किम् । एते । सत्रिणः । इति । प्रियः । प्र-

[5]सर्वासामित्यादि ॥ एते हि सत्रिणः सर्वासां प्रजानां प्राणैस्सहासते प्राणान् रक्षन्त आसते तस्मात्प्राणान् स्पृणोति प्रीणयतीति । तस्मादेव च पृच्छन्ति लौकिकास्तुष्टाः किमेते सत्रिणः ये प्रजानां प्राणान् स्पृण्वन्ति अहो महाभाग्यमेतेषां धिगस्मानितीति भावः । एवं वेदिता प्रजानां प्रियश्च भवति । उत्थितः लोकेषु पूजितश्च भवति । एवं प्रशस्तत्वाद्द्वादशाहेन यजेतेति विधिः । अन्ये तु अन्यथा वर्णयन्ति—स्पृणोतिः हिंसाकर्मा, व्यत्ययेन श्नुः । प्रजापतिरेव सन् एष यजमानः सत्फलं सत्रासनेन स्पृणोति हिनस्ति, प्राणांश्च स्पृणोत्येव, तस्मात्सर्वासां प्रजानां प्राणैरेते आसते न केवलमात्मीयैरेव सत्रमासते ये मूर्खाः सत्रासनं कुर्वन्ति । यद्वा—विरुद्धमाचरन्नुच्यते प्राणैस्संक्रीडतीति । एवमेते प्रजानां प्राणविनाशार्थमासते इति । तस्मात्पृच्छन्ति लौकिकाः जुगुप्समानाः किमेते सत्रिण इति, अहो मौर्ख्यमेषां ये वि-

प्रजानामुत्थितो भवति य एवं वे-
द ॥ ३६ ॥
न वा एषोऽन्यतो वैश्वानरस्सुवर्गाय
लोकाय प्राभवदूर्ध्वो ह वा एष आर्त-

जानामिति प्र—जानाम् । उत्थित इत्युत्—स्थितः । भवति । यः । एवम् । वेद ॥ ३६ ॥

अग्निष्टोमौ यत्सुवर्गं लोकं प्रियः
प्रजानां पश्चं च ॥ ९ ॥

[1]न । वै । एषः । अन्यतो वैश्वानर इत्यन्यतः—वैश्वानरः । सुवर्गायेति सुवः—गाय । लोकाय । प्रेति । अभवत् । ऊर्ध्वः । ह । वै । एषः । आर्तन

---

नाशहेतुं कुर्वन्ति धिगेतान् जितमस्माभिरिति । एवं विदित्वा य उत्थितः सत्राद्भवति सत्रासनं जहाति स प्रजानां प्रियो भवति अनिष्टव्यावृत्तेः । तस्मात्सत्रेण द्वादशाहेन यष्टव्यमित्यत्रैव योज्यम् । सत्रादुत्थितः प्रजानां प्रियो भवतीति य एवं वेद सोऽपि प्रियो भवति प्रजानाम् ॥

इति सप्तमे द्वितीये नवमोनुवाकः.

---

[1]पुनरपि द्वादशाह एव गुणविधयः क्रियन्ते—न वा एष इत्यादि ॥ एष द्वादशाहः अन्यतो वैश्वानरः, एकतोऽतिरात्रः ।

त आसीत्ते देवा एतं वैश्वानरं पर्यौहन्त्सुवर्गस्यं लोकस्य प्रभूत्या ऋतवो वा एतेनं प्रजापंतिमयाजयन्तेष्वार्धोदधि तदृध्नोति ह वा ऋत्विक्षु य ए-

इत्या—ततः । आसीत् । ते । देवाः । एतम् । वैश्वानरम् । परीति । औहन् । सुवर्गस्येति—सुवः—गस्यं । लोकस्यं । प्रभूत्या इति प्र—भूत्यै । [2]ऋतवः । वै । एतेन । प्रजापतिमिति प्रजा—पतिम् । अयाजयन् । तेषु । आर्ध्नोत् । अधीति । तत् । [3]ऋध्नोति । ह । वै । ऋत्विक्षु । यः । एवम् । विद्वान् । द्वादशाहे-

---

आदावेवातिरात्रवान् सुवर्गाय लोकाय न प्राभवत् स्वर्गं प्रापयितुं न समर्थोऽभवत् । कुत इत्याह—एष हि स्वर्गः ऊर्ध्वं आततः विस्तीर्णः आस्तीर्णः आसीत् तस्माद्यावत्स्वर्गप्रापणाय पर्याप्तो नाभवत् । ततः ते देवाः द्वादशाहं तथा दृष्टवन्तः । एतमेव वैश्वानरं पर्यौहन् परित आदावन्ते चानयन् । ततोसौ महत्त्वात् स्वर्गस्य प्रभूत्यै प्रभूतये यावत्स्वर्गं प्रापयितुं प्रभुरभवत् ॥

[2]ऋतवो वा इत्यादि ॥ एतेन द्वादशाहेन पूर्वं ऋतवः ऋत्विजो भूत्वा प्रजापतिमयाजयन् । ततः तत्तस्मात् तेन कर्मणा वा तेषु निमित्तभूतेषु प्रजापतिरधिकं आर्ध्नोत् ॥

[3]ऋध्नोतीत्यादि ॥ तस्मादेवं विदित्वा द्वादशाहेन यष्टा ऋत्विक्षु निमित्तेषु ऋध्नोत्येव ॥

वं विद्वान्द्वादशाहेन यजंते तेऽस्मि-
न्नैच्छन्त स रसमहं वसन्ताय प्राय-
च्छत् ॥ ३७ ॥ यवं ग्रीष्मायौषधी-
र्वर्षाभ्यो व्रीहीञ्छरदे माषतिलौ
हेमन्तशिशिराभ्यां तेनेन्द्रं प्रजाप-
तिरयाजयत्ततो वा इन्द्र इन्द्रोऽभ-

नेति द्वादश-अहेनं । यजंते । [4]ते । अस्मिन् । ऐ-
च्छन्त । सः । रसम् । अहं । वसन्ताय । प्रेति ।
अयच्छत् ॥ ३७ ॥ यवम् । ग्रीष्माय । ओषधीः ।
वर्षाभ्यः । व्रीहीन् । शरदे । माषतिलाविति मा-
ष-तिलौ । हेमन्तशिशिराभ्यामिति हेमन्त-शि-
शिराभ्याम् । [5]तेन । इन्द्रम् । प्रजापतिरिति प्र-

[4]त इत्यादि ॥ ततस्ते ऋतवः अस्मिन् प्रजापतौ ऐच्छन्त दक्षिणामलिप्सन्त । स च प्रजापतिः अनन्तरं वसन्ताय रसं मध्वादि[1] प्रायच्छत् पुष्पादिसम्बन्धेन मधुमानभूत् वसन्तः[2] । यवं ग्रीष्मायेत्यादि । गतम् ॥

[5]तेनेन्द्रमित्यादि ॥ इन्द्रमनुजावरं प्रजापतिरयाजयत्, तत इन्द्र इन्द्रोऽभवत् अनुजावरत्वमपास्य प्रागिवेश्वरोऽभवत् । तस्मा-

[1]मधु अथवा.

[2]"स च प्रजापतिः वसन्ताय रसमह सर्वमपि भोग्यवस्तुगतं सारं दत्तवान्" इति माधवीयम्.

वृत्तस्मादाहुरानुजावरस्य यज्ञ इति
स ह्येतेनाग्रेऽयजतैष ह वै कुणपम-
त्ति यस्सत्त्रे प्रतिगृह्णाति पुरुषकु-
णपमश्वकुणपं गौर्वा अन्नं येन पा-

जा-पतिः । अयाजयत् । ततः । वै । इन्द्रः । इ-न्द्रः । अभवत् । तस्मात् । आहुः । आनुजावरस्येत्यानु-जावरस्य । यज्ञः । इति । सः । हि । एतेन । अग्रे । अयजत । [6]एषः । ह । वै । कुणपम् । अत्ति । यः । सत्त्रे । प्रतिगृह्णातीति प्रति-गृह्णाति । पुरुषकुणपमिति पुरुष-कुणपम् । अश्वकुणपमित्यश्व-कुणपम् । गौः । वै । अन्नम् । येन । पात्रेण ।

---

दाहुः आनुजावरस्य यज्ञ इति । य उत्कृष्टस्सन् अवरभावं गतः स एतेन यजेतेति, यस्मात्स तादृश इन्द्र एतेनाग्रे प्रथममयजत अनुजावरत्वनिवृत्तये, ईश्वरश्च संपन्न इति ॥

[6]संप्रति अहीनयाजकदूषणेन अहीनमेव दूषयितुमाह—एष ह वा इत्यादि ॥ कुणपमत्ति मांसमत्ति, अकार्यं करोतीति यावत् यस्सत्रे अहस्समूहे प्रतिगृह्णाति याजयित्वा । कुणपं विशिनष्टि—पुरुषकुणपमित्यादि । पुरुषादिग्रहणेनाभक्ष्यत्वं दर्शयति । न मांसमात्रं, अपि तु पुरुषादिमांसमेवाभक्ष्यमत्तीति । गौर्वा अन्नमिति । गोशब्देन दक्षिणोच्यते । अन्नस्थानीया दक्षिणा, प्रतिग्रहीता तु पात्रस्थानीयः । तत्र येन पात्रेणान्नं बिभ्रति यदि तत्पात्रं न

त्रेणान्नं बिभ्रति यत्तन्न निर्णेनिजति
ततोऽधि ॥ ३८ ॥ मलं जायत एकं
एव यजेतैको हि प्रजापतिराध्नोद्द्वा-
दश रात्रीर्दीक्षितस्स्याद्द्वादश मासा-

अन्नम् । बिभ्रति । यत् । तत् । न । निर्णेनिजतीति निः—नेनिजति । ततः । अधीति ॥ ३८ ॥ मलम् । जायते । [7]एकः । एव । यजेत । एकः । हि । प्रजापतिरिति प्रजा—पतिः । आर्ध्नोत् । [8]द्वादश । रात्रीः । दीक्षितः । स्यात् । द्वादश । मासाः ।

निर्णेनिजति न शोधयति । 'निजां त्रयाणां गुणः' इत्यभ्यासस्य गुणः । ततोधि मलं जायते तस्मात्पात्रस्थानीयः प्रतिग्रहीता अन्नस्थानीयया दक्षिणया मलिनो भवति । प्रतिग्राह्यविशेषेण पुरुषो दुष्यति अन्नविशेषेणेव पात्रं । तस्मात् नाहीने प्रतिग्राह्यमिति अहीनस्यैव निषेधः सत्रम[1]प्रतिषिद्धमेवेति ॥

[7]इदानीं अहीनं विदधाति—एक एव यजेतेति ॥ अहीनमपि कुर्यादेवेत्यर्थः । समर्थयते—एको हीति । एको हि प्रजापतिः द्वादशाहेन ऋद्धिं गतः । स यद्येको यष्टा कथं सत्रं स्यात्? । अथ यद्यहीनो न कर्तव्य एव, कथमनेन प्रजापतिः ऋद्धः स्यात्, तस्मात् अहीनः कर्तव्य इति ॥

[8]अथ उभयसाधारणो विधिः—द्वादशरात्रीरित्यादि ॥ गतम्* । प्रजापतिरेवैष यजमानः स्वयं तस्मात् द्वादशदीक्षा इति ॥

[1]सत्रं. *सं—५-६-७.

स्संवत्सरस्संवत्सरः प्रजापतिः प्रजा-
पतिर्वावैष एष ह त्वै जायते यस्तप-
सोऽधि जायते चतुर्धा वा एतास्तिस्र-
स्तिस्रो रात्रयो यद्द्वादशोपसदो याः
प्रथमा यज्ञं ताभिस्सं भरति या द्वि-
तीया यज्ञं ताभिरा रभते ॥ ३१ ॥ या-

संवत्सर इति सं—वत्सरः । संवत्सर इति सं—व-
त्सरः । प्रजापतिरिति प्रजा—पतिः । प्रजापतिरि-
ति प्रजा—पतिः । वाव । एषः । [1]एषः । ह । तु ।
वै । जायते । यः । तपसः । अधीति । जायते ।
चतुर्धेति चतुः—धा । वै । एताः । तिस्रस्तिस्र इति
तिस्रः —तिस्रः । रात्रयः । यत् । द्वादश । उपस-
द इत्युप—सदः । याः । प्रथमाः । यज्ञम् । ताभिः ।
समिति । भरति । याः । द्वितीयाः । यज्ञम् । ता-
भिः । एति । रभते ॥ ३१ ॥ याः । तृतीयाः ।

---

[1]अथोपसदां विधिः—एष हेति ॥ एष एव जायते जात-
व्यपदेशमर्हति । कः? यस्तपसः उपसदो जायते । चतुर्धेत्यादि ।
द्वादशोपसदः चतुर्धा तिस्रो भवन्ति । तत्र याः प्रथमाः तिस्र
उपसदः ताभिः यज्ञं संभरति तत्साधनान्यर्जयति । द्वितीयाभिः
तिसृभिः यज्ञमारभते । तृतीयाभिः पात्राणि शोधयति । चतुर्थी-

स्तृतीयाः पात्राणि ताभिर्निर्णेनिक्ते याश्चतुर्थीरपि ताभिरात्मानमन्तरत-श्शुन्धते यो वा अस्य पशुमत्ति माꣳसꣳ सोत्ति यः पुरोडाशं म-स्तिष्कꣳ स यः परिवापं पुरीषꣳ स

पात्राणि । ताभिः । निरिति । नेनिक्ते । याः । चतुर्थीः । अपीति । ताभिः । आत्मानम् । अन्त-रतः । शुन्धते । [10]यः । वै । अस्य । पशुम् । अ-त्ति । माꣳसम् । सः । अत्ति । यः । पुरोडाशम् । मस्तिष्कम् । सः । यः । परिवापमिति परि—वा-पम् । पुरीषम् । सः । यः । आज्यम् । मज्जानम् ।

---

भिरपि आत्मानं शोधयति । यद्वा—चतुर्थीभिरात्मानमपि शोधयति अन्तरतः अन्ततः। आद्यादित्वात्तसिः । अवसानवचनोन्तरशब्दः; यथाऽऽहुः—‘ अन्तरमवसानावधिपरिधानान्तर्धिभेदतादर्थ्ये ’ इत्यादि । ततश्चाहीनपक्षेऽपि तस्य शुद्धत्वात् तस्य प्रतिग्रहोपि न दोषायेति तदनुज्ञा॥

[10]पुनः दूषयति—यो वा अस्येत्यादि ॥ एवमहीनस्य विधिनिषेधपरंपरया सत्रस्य प्रशस्तताऽऽख्यायते । स चास्याहीनस्य पशुं पश्ववदानानि अत्ति न मांसमेव केवलमत्ति यजमानसंबन्धी यः पुरोडाशमत्त्येव । मस्तिष्कं सः । अत्राप्यत्तीत्येव । मस्तिष्कः शिरोमांसः । यः परिवापं लाजानत्ति पुरीषं सोत्ति । यः आज्यमत्ति मज्जानं सोत्ति । यः सोममत्ति स्वेदमेव सोत्ति । अपि च अस्य यजमानस्य शीर्षण्याः

य आज्यं मज्जान्ं स यस्सोमꣳ स्वेदꣳ सोपि ह वा अस्य शीर्षण्या निष्पदः प्रति गृह्णाति यो द्वादशाहे प्रतिगृह्णाति तस्माद्द्वादशाहेन न याज्यं पाप्मनो व्यावृत्त्यै ॥४०॥

सः । यः । सोमम् । स्वेदम् । सः । अपीति । ह । वै । अस्य । शीर्षण्याः । निष्पद इति निः—पदः । प्रतीति । गृह्णाति । यः । द्वादशाह इति द्वादश—अहे । प्रतिगृह्णातीति प्रति—गृह्णाति । तस्मात् । द्वादशाहेनेति द्वादश—अहेन । न । याज्यम् । पाप्मनः । व्यावृत्त्या इति वि—आवृत्त्यै ॥ ४० ॥

अयंच्छदधि रभते द्वादशाहेन चत्वारि च॥१०॥

---

शिरसि भवाः निष्पदः निष्पद्यन्ते इति निष्पदः यूकादयः, ता एव प्रतिगृह्णाति यो द्वादशाहे गवादिदक्षिणां प्रतिगृह्णाति । तस्मात् द्वादशाहेन न याज्यम् । ऋत्विक्कमिदं निषिध्यते इत्येके । अहीनस्य निषेध इत्यन्ये । यजेर्ण्यन्तात् अचो यत् । 'यतोऽनावः' इत्याद्युदात्तत्वम् । पाप्मनो व्यावृत्त्यै पृथग्भावार्थम् । 'तादौ च' इत्यनन्तरस्य गतेः प्रकृतिस्वरत्वम् ॥

इति सप्तमे द्वितीये दशमोनुवाकः.

एकस्मै स्वाहा द्वाभ्याꣳ स्वाहा त्रिभ्यस्स्वाहा चतुर्भ्यस्स्वाहा पञ्चभ्यस्स्वाहा षड्भ्यस्स्वाहा सप्तभ्यस्स्वाहाऽष्टाभ्यस्स्वाहा नवभ्यस्स्वाहा दशभ्यस्स्वाहैकादशभ्यस्स्वाहा द्वादशभ्यस्स्वाहा त्रयोदशभ्यस्स्वाहा च-

[1]एकस्मै । स्वाहा । द्वाभ्याम् । स्वाहा । त्रिभ्य इति त्रि-भ्यः । स्वाहा । चतुर्भ्य इति चतुः-भ्यः । स्वाहा । पञ्चभ्य इति पञ्च-भ्यः । स्वाहा । षड्भ्य इति षट्-भ्यः । स्वाहा । सप्तभ्य इति सप्त-भ्यः । स्वाहा । अष्टाभ्यः । स्वाहा । नवभ्य इति नव-भ्यः । स्वाहा । दशभ्य इति दश-भ्यः । स्वाहा । एकादशभ्य इत्येकादश-भ्यः । स्वाहा । द्वादशभ्य इति द्वादश-भ्यः । स्वाहा । त्रयोदशभ्य इति त्रयोदश-भ्यः । स्वाहा । चतुर्द-

[1]अथ अश्वमेध एव रात्रिहोमाः—एकस्मै स्वाहेत्यादयो दशानुवाकाः ॥ यथोक्तम्—'एकस्मै स्वाहेत्येताननुवाकान् पुनःपुनरभ्यासं रात्रिशेषं हुत्वा' इत्यादि । 'स एतान् प्रजापतिर्नक्तं होमानपश्यत्'* इति ब्राह्मणम् । आदशभ्यस्सङ्ख्याः सङ्ख्येये वर्तन्ते; ततः परं सङ्ख्याने सङ्ख्येये च । ततश्च सर्वत्र

* तै. ब्रा. ३-८-१५.

तुर्दशभ्यस्स्वाहा पञ्चदशभ्यस्स्वाहा षोडशभ्यस्स्वाहा सप्तदशभ्यस्स्वाहाऽष्टादशभ्यस्स्वाहैकान्न विꣳशत्यै स्वाहा नवविꣳशत्यै स्वाहैकान्न चत्वारिꣳशते स्वाहा नवचत्वारिꣳश-

शभ्य इति चतुर्दश–भ्यः । स्वाहा । पञ्चदशभ्य इति पञ्चदश–भ्यः । स्वाहा । षोडशभ्य इति षोडश–भ्यः । स्वाहा । सप्तदशभ्य इति सप्तदश–भ्यः । स्वाहा । अष्टादशभ्य इत्यष्टादश–भ्यः । स्वाहा । एकात् । न । विꣳशत्यै । स्वाहा । नवविꣳशत्या इति नव–विꣳशत्यै । स्वाहा । एकात् । न । चत्वारिꣳशते । स्वाहा । नवचत्वारिꣳशत

सङ्ख्यानोपसृष्टा सङ्ख्येया देवता । ब्राह्मणं च—'प्रजापतिर्वा एकः'* इति । तत्परिणामा अन्ये । सर्वस्मा इत्यादिचोपपद्यते । सङ्ख्या एवैकत्वादयः । एकादयोपि हि सङ्ख्याप्रधानाः प्रधाना भवन्ति । यथा 'द्व्येकयोः' इति । तत्र—एकं दश च शतं च सहस्रमयुतं[1] तथा । प्रयुतं कोट्यर्बुदं च बृन्दं स्थानात् स्थानं दशगुणं स्यात् । ततश्च पूर्वस्थानावगाहिन्यो दशसङ्ख्या भूत्वा[2] उत्तरोत्तरस्थानमवगाहन्ते । तत्र प्रथमे एक-

* तै. ब्रा. ३-८-१६. [1] मयुतनियते. [2] एका भूत्वा.

ते स्वाहैकान्न षष्ट्यै स्वाहा नवषष्ट्यै
स्वाहैकान्नाशीत्यै स्वाहा नवाशीत्यै
स्वाहैकान्न शताय स्वाहा शताय

इति नव-चत्वारिꣳशते । स्वाहा । एकात् । न । षष्ट्यै । स्वाहा । नवषष्ट्या इति नव-षष्ट्यै । स्वाहा । एकात् । न । अशीत्यै । स्वाहा । नवाशीत्या इति नव-अशीत्यै । स्वाहा । एकात् । न । श-

---

वृद्धिः । द्वितीये दशवृद्धिः । तृतीयादिषु शतादिवृद्धिः । तत्र एकस्थानावगाहिन्य एकादिनवान्ताः नवसङ्ख्याः प्रथममाम्नायन्ते यावद्द्वितीयस्थानावगाहिन्यः एकादशवर्गमारभन्ते । अथ तामपि दशसङ्ख्यामाम्नाय तया सह पुनरपि एकादिनवान्ताः प्रथमस्थानावगाहिन्यः नवसङ्ख्याः समाम्नाताः द्वितीयस्थानावगाहिन्यः द्वितीयं दशवर्गं उत्पादयन्ति । सर्वत्र च स्थानात् स्थाने परमा वृद्धिः । नव एकवत्वं[1] दशवर्गोपचयेन विंशत्यादयः सङ्ख्या जायन्ते । आहुश्च—'द्वयोर्दशानां विंशभावः तिश्च प्रत्ययः विंशतिः । त्रयाणां दशानां त्रिंभावः शच्च प्रत्ययः त्रिंशत्' इत्यादि । एवमयं मध्यस्थो दशवर्गः द्विप्रकारः; प्रथममेकं ततो नव दश सप्तदशन्भावो नवतिरधिकं च । उभयथा नवसप्तद्वित्वा आम्नाताः । तत्र एकस्यागमे तदुभयविपर्यासेन सङ्ख्याद्वयोक्तिरित्यनेन अभिप्रायेण रीतिसाम्ये एकोननवाधिकतमाया विश्वेत्यादिना निर्देशः सङ्ख्याद्वयत्वमकरोत्[2] 'शतायुर्वै पुरुषश्शतवीर्यः'* इति दर्शनात् । सर्वेषु

---

[1]नवभागं. [2]निर्देशं करोति. * तै. ब्रा. ३-८-१६.

स्वाहा द्वाभ्याꣳ शताभ्याꣳ स्वाहा

ताय । स्वाहा । शताय । स्वाहा । द्वाभ्याम् । श-

---

चानुवाकेषु शतारोहिणी सङ्ख्यागतिः । तस्मात् शतस्य कण्ठोक्तये 'एकोनशताय स्वाहा नवशताय स्वाहा' इति नोक्तम् । शतस्थानेऽपि स्थानक्रमेण इममेव सङ्ख्योपचयप्रकारं दर्शयितुं द्वाभ्यां शताभ्यामित्युक्तम् । तस्य च उपलक्षणत्वात् सहस्रादेरपि योज्यम् । एवं आपरार्धीयाः सङ्ख्या युग्मस्वरूपास्सर्वा अपि प्रथमेऽनुवाके प्रतिपादिता एव । अत एव अनुक्तसङ्ख्यापरिग्रहस्पष्टतार्थं सर्वस्मा इत्युक्तम् । अथ तमेव सङ्ख्यावृद्धिक्रमं दर्शयितुं द्वितीयादिषु अनुवाकेषु युग्मायुग्मविभागेन नवसङ्ख्यावृद्धिहेतवः सङ्ख्यासंयोगविशेषप्रभवाः सङ्ख्याविशेषा गृह्यन्ते । अनुक्ततत्तत्सङ्ख्याविशेषपरिग्रहार्थं तत्रतत्र. सर्वस्मा इत्युच्यते । एकस्मै इति । 'इण्भीका' इति कन्प्रत्यये नित्त्वादाद्युदात्तत्वं द्वाभ्याम् । यद्यपि कथंचित् सावेकाच्त्वं स्यात्; तथाऽपि 'न गोश्वन्साववर्ण' इति विभक्तेरुदात्तत्वप्रतिषेधः । त्रिभ्यः 'षट्त्रिचतुर्भ्यो हलादिः' इति विभक्तेरुदात्तत्वम् । चतुर्भ्यः । 'झल्युपोत्तमम्' इति उपोत्तमस्य उदात्तत्वम् । एवं पञ्चादीनामपि द्रष्टव्यम् । एतेषु च 'सङ्ख्यायाः' इत्युदात्तत्वं बाध्यते । षड्भ्यः । पूर्ववत् विभक्तेरुदात्तत्वम् । अष्टाभ्यः । 'अष्टनो दीर्घात्' इति विभक्तेरुदात्तत्वम् । एकादशादीनां पूर्ववदुपोत्तमस्योदात्तत्वम् । एतेषु च 'सङ्ख्या' इति पूर्वपदप्रकृतिस्वरत्वं बाध्यते । एकोनविंशतिः एकान्न विंशतिः 'एकादिश्चैकस्य चादुक्' इति नलोपाभावः, आदुगागमश्च । नानास्वरत्वात् असमासं मन्यन्ते पदकाराः । 'उदात्तयणः' इति तस्या उदात्तत्वम् । नवविंशत्यै नव च विंशतिश्च

सर्वस्मै स्वाहा ॥४१॥
एकस्मै स्वाहा त्रिभ्यस्स्वाहा पञ्च-
भ्यस्स्वाहा सप्तभ्यस्स्वाहा नवभ्य-
स्स्वाहैकादशभ्यस्स्वाहा त्रयोदशभ्य-
स्स्वाहा पञ्चदशभ्यस्स्वाहा सप्तदश-

ताभ्याम् । स्वाहा । सर्वस्मै । स्वाहा ॥ ४१ ॥

नवचत्वारिꣳशते स्वाहैकान्नैकविꣳशतिश्च ॥ ११ ॥

[1]एकस्मै । स्वाहा । त्रिभ्य इति त्रि-भ्यः । स्वाहा । पञ्चभ्य इति पञ्च-भ्यः । स्वाहा । सप्तभ्य इति सप्त-भ्यः । स्वाहा । नवभ्य इति नव-भ्यः । स्वाहा । एकादशभ्य इत्येकादश-भ्यः । स्वाहा । त्रयोदशभ्य इति त्रयोदश-भ्यः । स्वाहा । पञ्चदशभ्य इति पञ्चदश-भ्यः । स्वाहा । सप्त-

---

नवविंशतिरिति सङ्ख्यापूर्वपदप्रकृतिस्वरत्वम् । एवमुत्तरत्रापि द्रष्टव्यम् । सर्वस्मै 'सर्वस्य सुपि' इत्याद्युदात्तत्वम् ॥

इति सप्तमे द्वितीये एकादशोनुवाकः.

---

[1]अथ अयुग्माः सङ्ख्याः एकादिद्व्युत्तरा उपादीयन्ते—एकस्मा इत्यादि ॥ गतम् । युग्मत्वेऽपि शतसङ्ख्याया उपादाने हेतुरुक्तः ।

भ्यस्स्वाहैकान्न विꣳशत्यै स्वाहा नवविꣳशत्यै स्वाहैकान्न चत्वारिꣳशते स्वाहा नवचत्वारिꣳशते स्वाहैकान्न षष्ट्यै स्वाहा नवषष्ट्यै स्वाहैकान्नाशीत्यै स्वाहा नवाशीत्यै स्वाहैकान्न शताय स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ ४२ ॥

दशभ्य इति सप्तदश—भ्यः। स्वाहा। एकात्। न। विꣳशत्यै। स्वाहा। नवविꣳशत्या इति नव—विꣳशत्यै। स्वाहा। एकात्। न। चत्वारिꣳशते। स्वाहा। नवचत्वारिꣳशत इति नव—चत्वारिꣳशते। स्वाहा। एकात्। न। षष्ट्यै। स्वाहा। नवषष्ट्या इति नव—षष्ट्यै। स्वाहा। एकात्। न। अशीत्यै। स्वाहा। नवाशीत्या इति नव—अशीत्यै। स्वाहा। एकात्। न। शताय। स्वाहा। शताय। स्वाहा। सर्वस्मै। स्वाहा॥ ४२ ॥

एकस्मै पञ्चाशत् ॥ १२ ॥

---

द्वाभ्यां शताभ्यामित्यपि नोक्तं युग्मत्वादेव । सर्वस्मा इति चानुक्तसमुच्चयार्थमुक्तम् ॥

इति सप्तमे द्वितीये द्वादशोनुवाकः.

द्वाभ्याᳪं स्वाहा॑ चतुर्भ्यस्स्वाहा॑ षड्भ्यस्स्वाहा॒ऽष्टाभ्यस्स्वाहा॑ दशभ्यस्स्वाहा॑ द्वादशभ्यस्स्वाहा॑ चतुर्दशभ्यस्स्वाहा॑ षोडशभ्यस्स्वाहा॒ऽष्टादशभ्यस्स्वाहा॑ विᳪंशत्यै स्वाहा॒ऽष्टानवत्यै स्वाहा॑ शताय स्वाहा सर्वस्मै स्वाहा॑ ॥ ४३ ॥

[1]द्वाभ्याम् । स्वाहा॑ । चतुर्भ्य इति॑ चतुः-भ्यः । स्वाहा॑ । षड्भ्य इति॑ षट्-भ्यः । स्वाहा॑ । अष्टाभ्यः । स्वाहा॑ । दशभ्य इति॑ दश-भ्यः । स्वाहा॑ । द्वादशभ्य इति॑ द्वादश-भ्यः । स्वाहा॑ । चतुर्दशभ्य इति॑ चतुर्दश-भ्यः । स्वाहा॑ । षोडशभ्य इति॑ षोडश-भ्यः । स्वाहा॑ । अष्टादशभ्य इत्य॑ष्टादश-भ्यः । स्वाहा॑ । विᳪंशत्यै । स्वाहा॑ । अष्टानवत्या इत्यष्टा-नवत्यै । स्वाहा॑ । शताय॑ । स्वाहा॑ । सर्वस्मै । स्वाहा॑ ॥ ४३ ॥

द्वाभ्याम॒ष्टानवत्यै षड्विᳪंशतिः ॥ १३ ॥

[1]अथ युग्माः द्वाभ्यामित्याद्या उपादीयन्ते—विंशत्याम्नानं द्वितीयेऽपि स्थाने सङ्ख्याद्वयप्रदर्शनार्थम् । अथ संङ्ग्रहिष्यन् तत्पूर्वां सङ्ख्यां गृह्णाति द्वाभ्यां शतपूर्तिं ख्यापयितुं सर्वयुग्माविच्छेदान्वयप्रदर्शनार्थम् । सर्वग्रहणं च अनुक्तसमस्तयुग्मसङ्ग्रहार्थम् ॥

इति सप्तमे द्वितीये त्रयोदशोऽनुवाकः.

त्रिभ्यस्स्वाहा पञ्चभ्यस्स्वाहा सप्त-
भ्यस्स्वाहा नवभ्यस्स्वाहैकादशभ्य-
स्स्वाहा त्रयोदशभ्यस्स्वाहा पञ्चदश-
भ्यस्स्वाहा सप्तदशभ्यस्स्वाहैकान्न वि-
ꣳशत्यै स्वाहा नवविꣳशत्यै स्वा-
हैकान्न चत्वारिꣳशते स्वाहा नवच-
त्वारिꣳशते स्वाहैकान्न षष्ट्यै स्वा-
हा नवषष्ट्यै स्वाहैकान्नाशीत्यै स्वाहा

[1]त्रिभ्य इति त्रि-भ्यः । स्वाहा । पञ्चभ्य इति पञ्च-भ्यः । स्वाहा । सप्तभ्य इति सप्त-भ्यः । स्वाहा । नवभ्य इति नव-भ्यः । स्वाहा । एकादशभ्य इत्येकादश-भ्यः । स्वाहा । त्रयोदशभ्य इति त्रयोदश-भ्यः । स्वाहा । पञ्चदशभ्य इति पञ्चदश-भ्यः । स्वाहा । सप्तदशभ्य इति सप्तदश-भ्यः । स्वाहा । एकात् । न । विꣳशत्यै । स्वाहा । नवविꣳशत्या इति नव-विꣳशत्यै । स्वाहा । एकात् । न । चत्वारिꣳशते । स्वाहा । नवचत्वारिꣳशत इति नव-चत्वारिꣳशते । स्वाहा । एकात् । न । षष्ट्यै । स्वाहा । नवषष्ट्या इति नव-षष्ट्यै ।

[1]अथ त्र्याद्युत्तरा अयुग्मा एव गृह्यन्ते—त्रिभ्य इत्यादि ॥

नवांशीत्यै स्वाहैकान्न शताय स्वाहा
शताय स्वाहा सर्वस्मै स्वाहा॥४४॥
चतुर्भ्यस्स्वाहाऽष्टाभ्यस्स्वाहा द्वादश-
भ्यस्स्वाहा षोडशभ्यस्स्वाहा विंश-

स्वाहा । एकात् । न । अशीत्यै । स्वाहा । नवां-शीत्या इति नव-अशीत्यै । स्वाहा । एकात् । न । शताय । स्वाहा । शताय । स्वाहा । सर्वस्मै । स्वाहा ॥ ४४ ॥

त्रिभ्योऽष्टाचत्वारिंशत् ॥ १४ ॥

[1]चतुर्भ्य इति चतुः-भ्यः । स्वाहा । अष्टाभ्यः । स्वाहा । द्वादशभ्य इति द्वादश-भ्यः । स्वाहा । षोडशभ्य इति षोडश-भ्यः । स्वाहा । विंशत्यै ।

---

उपात्तया सह उत्तरायुग्मार्थं पुनर्वचनम् । क्रमभेदाद्विशेषः । गत-मन्यत् ॥

इति सप्तमे द्वितीये चतुर्दशोनुवाकः.

---

[1]अथ चतुरादिचतुरुत्तरा युग्मा गृह्यन्ते—चतुर्भ्य इत्यादि ॥ विंशत्यन्तानां ग्रहणं उपात्तस्य चतुष्कपञ्चकस्य त्रिंशत्यन्तरेऽप्य-

शत्यै स्वाहा षण्णवत्यै स्वाहा शता-
य स्वाहा सर्वस्मै स्वाहा ॥४५॥
पञ्चभ्यस्स्वाहा दशभ्यस्स्वाहा पञ्चद-
शभ्यस्स्वाहा विꣳशत्यै स्वाहा प-
ञ्चनवत्यै स्वाहा शताय स्वाहा स-

स्वाहा । षण्णवत्या इति षट्–नवत्यै । स्वाहा । शताय । स्वाहा । सर्वस्मै । स्वाहा ॥ ४५ ॥

चतुर्भ्यष्षण्णवत्यै षोडश ॥ १५ ॥

[1]पञ्चभ्य इति पञ्च–भ्यः । स्वाहा । दशभ्य इति दश–भ्यः । स्वाहा । पञ्चदशभ्य इति पञ्चदश–भ्यः । स्वाहा । विꣳशत्यै । स्वाहा । पञ्चनवत्या इति पञ्च–नवत्यै । स्वाहा । शताय । स्वाहा ।

---

विशिष्टत्वात् । षण्णवतिग्रहणं यावच्छतमव्यवच्छेदेन चतुष्कान्वयप्रदर्शनार्थं चतुर्भिश्शतपूरणख्यापनार्थं च ॥

इति सप्तमे द्वितीये पञ्चदशोऽनुवाकः.

---

[1]अथ पञ्चादिपञ्चोत्तरा गृह्यन्ते—पञ्चभ्य इत्यादि ॥ पूर्वेण

वैस्मै स्वाहा ॥ ४६ ॥

दशभ्यस्स्वाहा विंशत्यै स्वाहा त्रिंशते स्वाहा चत्वारिंशते स्वाहा पञ्चाशते स्वाहा षष्ट्यै स्वाहा सप्तत्यै स्वाहाऽशीत्यै स्वाहा नवत्यै स्वाहा शताय स्वाहा सर्वस्मै स्वाहा ॥ ४७

सर्वस्मै । स्वाहा ॥ ४६ ॥

पञ्चभ्यः पञ्चनवत्यै चतुर्दश ॥ १६ ॥

[1]दशभ्य इति दश-भ्यः । स्वाहा । विंशत्यै । स्वाहा । त्रिंशते । स्वाहा । चत्वारिंशते । स्वाहा । पञ्चाशते । स्वाहा । षष्ट्यै । स्वाहा । सप्तत्यै । स्वाहा । अशीत्यै । स्वाहा । नवत्यै । स्वाहा । शताय । स्वाहा । सर्वस्मै । स्वाहा ॥ ४७ ॥

दशभ्यो द्वाविंशतिः ॥ १७ ॥

---

समानम् । अत्रापि पञ्चनवतिग्रहणं पञ्चकेन शतपूरणं प्रदर्शयितुम् ॥

इति सप्तमे द्वितीये षोडशोनुवाकः.

---

[1]अथ दशादिदशोत्तरा गृह्यन्ते—दशभ्य इति ॥ पङ्क्तिविंशत्यादौ विंशत्यादयो निपातिताः । अत्र शतस्य क्रमप्राप्तिः स्पष्टा ॥

इति सप्तमे द्वितीये सप्तदशोनुवाकः.

वि॒ꣳश॒त्यै स्वाहा॑ चत्वारि॒ꣳश॒ते स्वा-
हा॑ ष॒ष्ट्यै स्वाहा॑ऽशी॒त्यै स्वाहा॑ श॒-
ता॒य स्वाहा॒ सर्व॑स्मै॒ स्वाहा॑ ॥४८॥
प॒ञ्चा॒श॒ते॒ स्वाहा॑ श॒ता॒य॒ स्वाहा॒ द्वा-
भ्या॒ꣳ श॒ताभ्या॒ꣳ स्वाहा॑ त्रि॒भ्य-
श्श॒तेभ्य॒स्स्वाहा॑ च॒तुर्भ्य॑श्श॒तेभ्य॒-

[1]वि॒ꣳश॒त्यै । स्वाहा॑ । च॒त्वा॒रि॒ꣳश॒ते । स्वाहा॑ । ष॒ष्ट्यै । स्वाहा॑ । अ॒शी॒त्यै । स्वाहा॑ । श॒ताय॑ । स्वाहा॑ । सर्व॑स्मै । स्वाहा॑ ॥ ४८ ॥

वि॒ꣳश॒त्यै द्वाद॑श ॥ १८ ॥

[1]प॒ञ्चा॒श॒ते । स्वाहा॑ । श॒ताय॑ । स्वाहा॑ । द्वा-भ्याम् । श॒ताभ्याम् । स्वाहा॑ । त्रि॒भ्य इति॑ त्रि–भ्यः । श॒तेभ्यः॑ । स्वाहा॑ । च॒तुर्भ्य॒ इति॑ च॒तुः–

अथ दशादिद्विगुणकया विंशत्या शतान्ता गृह्यन्ते—विंशत्या इति ॥ अत्रापि शतस्य क्रमप्राप्तिः स्पष्टा ॥

इति सप्तमे द्वितीये अष्टादशोनुवाकः.

---

अथ क्रमप्राप्तं विंशतिद्वैगुण्यं शतान्वयाभावेन हित्वा पञ्चाशदादिपञ्चाशदुत्तरा गृह्यन्ते—पञ्चाशते स्वाहा शताय स्वाहेति ॥ तत ऊर्ध्वं शतवृद्धिः 'द्वाभ्यां शताभ्यां' इत्यादिकं कृतं भवति ।

स्स्वाहा पञ्चभ्यश्शतेभ्यस्स्वाहा ष-
ड्भ्यश्शतेभ्यस्स्वाहा सप्तभ्यश्शते-
भ्यस्स्वहाऽष्टाभ्यश्शतेभ्यस्स्वाहा
नवभ्यश्शतेभ्यस्स्वाहा सहस्राय स्वा-
हा सर्वस्मै स्वाहा ॥ ४१ ॥

शताय स्वाहा सहस्राय स्वाहाऽयु-

भ्यः । शतेभ्यः । स्वाहा । पञ्चभ्य इति पञ्च-भ्यः । शतेभ्यः । स्वाहा । षड्भ्य इति षट्-भ्यः । शतेभ्यः । स्वाहा । सप्तभ्य इति सप्त-भ्यः । शतेभ्यः । स्वाहा । अष्टाभ्यः । शतेभ्यः । स्वाहा । नवभ्य इति नव-भ्यः । शतेभ्यः । स्वाहा । सहस्राय । स्वाहा । सर्वस्मै । स्वाहा ॥ ४१ ॥

पञ्चाशते द्वात्रिंशत् ॥ १९ ॥

[1]शताय । स्वाहा । सहस्राय । स्वाहा । अयु-

---

एवं दशस्थानाभिवृद्धिभिः विकल्पैः[1] बहुधा शतपूरणप्रतिपादनेन शतस्थाने एकत्वसङ्ख्या समर्थिता । इदानीं तु शतद्वित्वादिसंपादनक्रमेण सहस्रस्थाने एकत्वसंख्यामारोहयति—सर्वस्मै इति[2] ॥

इति सप्तमे द्वितीये एकोनविंशोऽनुवाकः.

---

अधुना पराध्यात् शतात् दशोत्तरस्थानावगाहिनीं संख्यावृद्धिं

---

[1]दशस्थानभाविवृद्धिविकल्पैः. [2]...रोपयति स्मेति,

तांय स्वाहा नियुतांय स्वाहा प्रयु-
तांय स्वाहाऽर्बुदाय स्वाहा न्यर्बुदाय
स्वाहा समुद्राय स्वाहा मध्याय स्वा-
हाऽन्तांय स्वाहा परार्धाय स्वाहोष-
से स्वाहा व्युष्ट्यै स्वाहोदेष्यते स्वा-

तांय । स्वाहां । नियुतायेति नि–युतांय । स्वाहां । प्रयुतायेति प्र–युतांय । स्वाहां । अर्बुदाय । स्वाहां । न्यर्बुदायेति नि–अर्बुदाय । स्वाहां । समुद्राय । स्वाहां । मध्याय । स्वाहां । अन्तांय । स्वाहां । परार्धायेति पर–अर्धाय । स्वाहां । उषसें । स्वाहां । व्युष्ट्या इति वि–उष्ट्यै । स्वाहां । उदेष्यत इत्युंत्–एष्यते । स्वाहां । उद्यत इत्युंत्–

दर्शयति—शतायेति ॥ ननु पूर्वानुवाके सहस्रस्थाने प्रवेशिता संख्या, तत्किं शतग्रहणेन । दत्तमत्रोत्तरं—शताय स्वाहेत्यादि 'शतायुर्वै पुरुषश्शतवीर्यः'* इति सर्वेष्वनुवाकेषु शतवती संख्येति । 'युतान्यण्यन्तानाम्' इति अयुतादीनां त्रयाणां मध्योदात्तत्वम् । न्यर्बुदाय । पूर्वपदप्रकृतिस्वरत्वम् । परस्यार्धं परार्धं, समासान्तोदात्तत्वम् । अथ उषस इत्यादयः चतस्रः अनुदिते होतव्याः । उदितायेत्यादयश्च चतस्रः उदिते होतव्याः । 'अहोरात्रयोरव्यतिमोहाय'* इति ब्राह्मणम् । तत्र उषःप्रभृ-

*ब्रा. ३-८-१६.

होद्यते स्वाहोदिताय स्वाहा सुवर्गा-
य स्वाहा लोकाय स्वाहा सर्वस्मै
स्वाहा ॥ ५० ॥

यते । स्वाहा । उदितायेत्युत्-इताय । स्वाहा । सुवर्गायेति सुवः-गाय । स्वाहा । लोकाय । स्वाहा । सर्वस्मै । स्वाहा ॥ ५० ॥

शतायाष्टात्रिंशत् ॥ २० ॥

साध्याष्षड्रात्रं कुसुरुबिन्दस्सप्तरात्रं बृहस्पतिरष्टरात्रं प्रजापतिस्ताः क्षुधं नवरात्रं प्रजापतिरकामयत दशहोतारमृतव ऐन्द्रवायवाग्रान्गायत्रो वै प्रजापतिस्स द्वादशरात्रं न वा एकस्मा एकस्मै द्वा-

तयः ब्रह्मणो रात्रिसन्ध्यवयवा इति । उदितादयः अहस्सन्ध्यवयवाः । प्रकाशः उषाः । व्युष्टिः उक्तप्रकाशः । उच्छ विवासे क्तिनि 'तादौ' इति गतेः प्रकृतिस्वरत्वम्, 'उदात्तस्वरितयोः' इत्युकारः स्वर्यते । उदेष्यते प्रारम्भोन्मुखाय ब्रह्मणोह्ने । 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । उद्यते प्रारभमाणाय । इणो यण्, पूर्ववद्विभक्तेरुदात्तत्वम्, उदिताय प्रारब्धाय अह्ने । 'गतिरनन्तरः' इति प्रकृतिस्वरत्वं कर्मण्यपि व्यत्ययेन । सुवरादित्यः, तद्गामिने अह्नो मध्याय, दीप्तादित्यत्वात् । लोकाय अह्ने । सर्वस्मै परतोपि महसे । सर्वत्र तत्कालाभिमानिनी संख्या गृह्यते ॥

इति भट्टभास्करमिश्रविरचिते यजुर्वेदभाष्ये ज्ञानयज्ञाख्ये

भ्यां त्रिभ्यश्चतुर्भ्यः पञ्चभ्यो दशभ्यो विꣳशत्यै पञ्चाशते शताय विꣳशतिः ॥ २० ॥

साध्या अस्मा इमे लोका गायत्रं वै तृतीयमेकस्मै पञ्चाशत् ॥ ५० ॥

हरिः ओं श्रीकृष्णार्पणमस्तु.

कृष्णयजुर्वेदे सप्तमकाण्डे द्वितीयः प्रश्नः समाप्तः.

---

सप्तमे काण्डे द्वितीयप्रश्ने विंशोऽनुवाकः.

समाप्तश्च प्रपाठकः.



॥ सप्तमकाण्डे तृतीयप्रश्नप्रारम्भः ॥

हरिःओं॥ प्रजवं वा एतेन यन्ति यद्द-
शममहः पापावहीयं वा एतेन भव-
न्ति यद्दशममहर्यो वै प्रजवं यतामप-

[1]प्रजवमिति प्र-जवम् । वै । एतेन । यन्ति । यत् । दशमम् । अहः । पापावहीयमिति पाप-अवहीयम् । वै । एतेन । भवन्ति । यत् । दशमम् । अहः । यः । वै । प्रजवमिति प्र-जवम् । यताम् । अपथेन । प्रतिपद्यत इति प्रति-पद्यते । यः । स्थाणुम् । हन्ति । यः । भ्रेषम् । न्येतीति नि-एति । सः । हीयते । सः । [2]यः । वै । दश-

[1]अथ द्वादशाहीनस्य दशरात्रस्य दशममहः अधिकृत्योच्यते— प्रजवं वा इत्यादि ॥ प्रायणीयोदयनीयौ विना दशाहत्वम् । तत्र दशममहः अविवाक्यं, एतेन प्रजवं प्रकृष्टवेगं यन्ति प्रवर्तन्ते । क्रियाविशेषणम् । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । शैघ्र्ये हेतुमाह—पापावहीयं वेत्यादि ॥ पापस्यावहतिः पापावहीयम् । भावे छान्दसः क्यप्, कृदुत्तरपदप्रकृतिस्वरत्वम् । दशमेन हि अह्ना पापस्य समस्तस्य विनाशं प्राप्नुवन्ति सद्य एव सर्वं पापं नश्यति तत्किमिति विलम्ब्यते इति । प्राप्तिकर्मा भवतिः । कर्मणि वा क्यप्प्रत्ययः, क्रियाविशेषणं, पापमवहीनं यथा भवति तथा भवन्ति भूतिमन्तस्संपद्यन्ते ॥

[2]यो वा इत्यादि ॥ लोके हि प्रजवं शीघ्रं गच्छतां मध्ये

थेन प्रतिपद्यते यस्स्थाणुꣳ हन्ति यो भ्रेषं न्येति स हीयते स यो वै दशमेऽहन्नविवाक्य उपहन्यते स हीयते तस्मै य उपहताय व्याह तमेवान्वारभ्य समश्नुतेऽथ यो व्याह सः ॥ १ ॥ हीयते तस्माद्दशमेऽहन्नवि-

मे । अहन् । अविवाक्य इत्यवि-वाक्ये । उपहन्यत इत्युप-हन्यते । सः । हीयते । तस्मै । यः । उपहतायेत्युप-हताय । व्याहेति वि-आह । तम् । एव । अन्वारभ्येत्यनु-आरभ्य । सामिति । अश्नुते । अथ । यः । व्याहेति वि-आह । सः ॥ १ ॥ हीयते । तस्मात् । दशमे । अहन् । अविवाक्य

योपथेन अमार्गेण प्रतिपद्यते सार्धं हित्वा गच्छति, यो वा स्थाणुं हन्ति[1] गच्छति, न्येति रोधादिकं नित्य इत्यस्य भूयो विरोधिः[2] ? । भ्रेषं कण्टकादिना गत्यसामर्थ्यं न्येति गच्छति स हीयते तस्मात्साधात् भ्रष्टो भवति । तस्मात् स यो वा एतादृशे दशमेऽहनि अविवाक्ये विवाक्यरहिते उपहन्यते स्मृतिविनाशादिना दुष्यति स हीयते एव । किंच—तस्मै उपहताय योन्यो व्याह विरुद्धमाह तस्य स्खलितं व्याकरोति तं स्खलितस्य व्याकर्तारमन्वारभ्य अवलम्ब्य समश्नुते व्याप्नोति कर्मसिद्धिं न तु हीयते उपहतस्खलितभ्रेषव्यपगमात् । अथ योप्रा[3]सकारी अ-

[1]विघ्नहन्ति. [2]गच्छति तद्यस्वानिरोधादिकं यो वा. [3]योऽ व्य.

वाक्य उपंहताय न व्युच्यमथो खल्वांहुर्यज्ञस्य वै समृंद्धेन देवास्सुं-वर्गं लोकमांयन् यज्ञस्य व्यृंद्धेनासुं-रान्परांऽभावयन्निति यत्खलु वै यज्ञ-

इत्यंवि–वाक्ये । उपंहतायेत्युपं–हताय । न । व्यु-च्यमितिं वि–उच्यंम् । [3]अथो इतिं । खलुं । आ-हुः । यज्ञस्यं । वै । समृंद्धेनेति सं–ऋद्धेन । देवाः । सुवर्गमितिं सुवः–गम् । लोकम् । आयन् । य-ज्ञस्यं । व्यृंद्धेनेति वि–ऋद्धेन । असुंरान् । परे-तिं । अभावयन् । इतिं । यत् । खलुं । वै । यज्ञ-

---

विवाक्येनाह्ना व्याह स एव हीयते। तस्माद्दशमेऽह्नि अविवाक्ये द्रुतगतित्वेन अविवचनार्हे उपहताय न व्युच्यम् । छान्दसः क्यप्, न विवक्तव्यमस्मिन् इत्यविवाक्यं, अधिकरणे ण्यत्, 'ययतोश्चातदर्थे' इत्युत्तरपदान्तोदात्तत्वम् । यद्वा—विवक्तव्यं विवाक्यं तदस्मिन्नास्तीति अविवाक्यम्, बहुव्रीहौ 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तत्वम् ॥

[3]अथो खल्वाहुरित्यादि—अविकलं पुष्कलं यज्ञफलं यजमानस्य। विकलं यज्ञफलमस्य शत्रोरित्यर्थः । एवं स्थिते स एष दशमेऽहनि अविवाक्ये उपहन्यते । सोतिरेचयत्येव यज्ञं यज्ञांशं किंचिच्छेषयति तस्याकृतत्वात् तस्याविकलत्वात् यज्ञफलं भ्रातृव्यस्य स्यात्, तत् मा भूदेष दोष इति विवचनं वक्तव्यमेव

स्य समृद्धं तद्यजमानस्य यद्व्यृद्धं
तद्भ्रातृव्यस्य स यो वै दशमेऽहन्न-
विवाक्य उपहन्यते स एवार्तिं रेच-
यति ते ये बाह्या दृशीकवः ॥ २ ॥
स्युस्ते वि ब्रूयुर्यदि तत्र न विन्देयु-

स्य । समृद्धमिति सं–ऋद्धम् । तत् । यजमान-स्य । यत् । व्यृद्धमिति वि–ऋद्धम् । तत् । भ्रातृव्यस्य । सः । यः । वै । दशमे । अहन् । अविवाक्य इत्यवि–वाक्ये । उपहन्यत इत्युप–हन्यते । सः । एव । अर्तिम् । रेचयति । ते । ये । बाह्याः । दृशीकवः ॥ २ ॥ स्युः । ते । वीति । ब्रूयुः । यदि । तत्र । न । विन्देयुः । अन्तस्सदसादित्यन्तः–

---

विकलांशपूरणाय । तस्मादत्र ये बाह्याः बहिर्भवाः ऋत्विग्भ्योऽन्ये दृशीकवः येऽन्ये प्रेक्षका वर्तन्ते तेऽपि ब्रूयुः यदि तत्र बहिर्वक्तॄन् स्खलितस्य वेदितॄन् न विन्देयुः न लभेरन् । विदिर्लाभे । अन्तस्सदसात् सदसोन्तरधितिष्ठद्भिः विवाच्यं ऋत्विग्भिरेव । सदो यज्ञगृहं तस्यान्तर्मध्यं अन्तस्सदसं, 'अव्ययीभावे शरत्प्रभृतिभ्यः' इत्यच् समासान्तः, ततो ल्यब्लोपे कर्मणि पञ्चमी । यदि तत्रापि स्खलितज्ञातॄन् न विन्देयुः गृहपतिना यजमानेनैव व्युच्यम् । किं बहुना येनकेनापि स्खलितभावविदा विवक्तव्यं नाविवाक्यमिति कथं नाम अविवाक्यमहस्स्यात् विव-

रन्तस्सदसाद्व्युच्यं यदि तत्र न विन्दे-
युर्गृहपतिना व्युच्यं तद्व्युच्यमेवा-
थ वा एतथ्सर्पराज्ञिया ऋग्भिस्स्तु-
वन्तीयं वै सर्पतो राज्ञी यद्वा अ-
स्यां किं चार्चन्ति यदानृचुस्तेनेयꣳ

सदसात् । व्युच्यमिति वि-उच्यम् । यदि । तत्र । न । विन्देयुः । गृहपतिनेति गृह-पतिना । व्युच्यमिति वि-उच्यम् । तत् । व्युच्यमिति वि-उच्यम् । एव । [4]अथ । वै । एतत् । सर्पराज्ञियेति सर्प-राज्ञियाः । ऋग्भिरित्यृक्-भिः । स्तुवन्ति । इयम् । वै । सर्पतः । राज्ञी । यत् । वै । अस्याम् । किम् । च । अर्चन्ति । यत् । आनृचुः । ते-

---

क्तव्यमस्मिन् नास्तीत्यविवाक्यं यथा विवक्तव्यमत्र न भवति तथाऽवहितैः कर्तव्यमिति सति तु स्खलिते विवक्तव्यमेवेति ॥

[4]अथवा इत्यादि ॥ अथ वा तस्मिन्नहनि समाप्तिकाले सर्पराज्ञिया ऋग्भिः सा एतं मन्त्रमपश्यदिति सर्पराज्ञियाः पृथिव्याः अष्टाभिः 'भूमिर्भूम्ना'* इत्यादिभिः ऋग्भिस्स्तुवन्ति । का पुनः सर्पराज्ञी? कथं पुनः सा सर्पराज्ञी? इत्याह—इयमित्यादि । इयं पृथिवी सर्पतो गतिमततः सर्पस्य राज्ञी स्वामिनी । कथमित्याह—यद्वा इत्यादि ॥ यत्किंचिदर्चन्ति तत् अर्चनीयं

---

* सं. १-५-३.

सर्पराज्ञी ते यदेव किंचं वाचाऽऽनृ-
चुर्यदतोध्यर्चितारः ॥ ३ ॥ तदुभयं-
माप्त्वाऽवरुध्योत्तिष्ठामेति ताभिर्मनं-

नं। इयम्। सर्पराज्ञीति सर्प—राज्ञी। [5]ते। यत्।
एव। किम्। च। वाचा। आनृचुः। यत्। अ-
तोधि। अर्चितारः ॥ ३ ॥ तत्। उभयम्। आ-
प्त्वा। अवरुध्येत्यव—रुध्य। उदिति। तिष्ठाम।

---

तत्सर्वमस्यां निवर्तते । तदिदमेकं कारणम् । यच्चेमां पृथिवीं सर्वेऽप्यानृचुः अर्चयन्ति वाचा पूजयन्ति अतश्चेयं स्वामिनी सर्वस्य अतः सर्पराज्ञीत्युच्यते । 'अपस्पृधेथाम्'* इत्यादौ अर्चयतेर्लिटि आनृचुरिति निपात्यते । राजनशीला राज्ञी स्वामिनी 'कनिन्युवृष' इति कनिन्, ऋन्नेभ्यो ङीप् । ततः सर्पाणां राज्ञीति षष्ठीतत्पुरुषे समासान्तोदात्तत्वम् ॥

[5]ते यदेवेत्यादि ॥ यत्किंचित् तस्याः पृथिव्याः संबन्धि वस्तु वाचाऽर्चयन्ति अतः अस्यां पृथिव्यां अधि उपरि अनर्थतो वा अधिशब्दः सर्वथा अनवग्रहः । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । तस्या यद्वस्तु अर्चितारः पूजयन्ति जनाः तदुभयमप्याप्त्वा लब्ध्वा अवरुध्य विधेयीकृत्य च ते वशमुत्तिष्ठाम उच्छ्रिता भूयास्मेत्यनेनाभिप्रायेण सर्पराज्ञिया ऋग्भिस्स्तुवन्ति । तेभ्य इत्यस्योत्तिष्ठमेत्यनेन संबन्धः । ताभिरित्यादि ॥

---

*सं. ३-२-११.[5]

सा स्तुवते न वा इमामश्वरथो ना-
श्वतरीरथस्सद्यः पर्याप्तुमर्हति म-
नो वा इमाꣳ सद्यः पर्याप्तुमर्हति
मनः परिभवितुमथ ब्रह्म वदन्ति
परिमिता वा ऋचः परिमितानि

इति । ताभिः । मनसा । स्तुवते । [6]न । वै । इमाम् । अश्वरथ इत्यश्व-रथः । न । अश्वतरीरथ इत्यश्वतरी-रथः । सद्यः । पर्याप्तुमिति परि-आप्तुम् । अर्हति । मनः । वै । इमाम् । सद्यः । पर्याप्तुमिति परि-आप्तुम् । अर्हति । मनः । परिभवितुमिति परि-भवितुम् । [7]अथ । ब्रह्म । वदन्ति । परिमिता इति परि-मिताः । वै । ऋचः । परिमितानीति परि-मितानि । सामानि । परि-

[6]हेतुमाह—न वा इत्यादि ॥ अश्वयुक्तो रथः अश्वतरीयुक्तो वा इमां पृथिवीं सद्य एव पर्याप्तुं सर्वतोऽवाप्तुं नार्हति मन एवार्हति तथाकर्तुं परिभवितुं अतिव्याप्तुं मन एवार्हति तस्मान्मनसा स्तोतव्यमिति । गर्दभेन बडबायामुत्पन्ना अश्वतरी अश्वादपि शीघ्रगामिनी । 'वत्सोक्षाश्वर्षभेभ्यः' इति ष्टरच् ॥

[7]अथेत्यादि ॥ अथ स्तोत्रान्ते शस्त्रारम्भे ब्रह्म वदन्ति चतुर्होत्रं जपन्ति । 'ब्रह्म वै चतुर्होतारः'* इति ब्राह्मणम् ।

* ब्रा. ३-१२-५,

सामा॑नि॒ परि॑मितानि॒ यजू॒ꣳष्यथै॒त-
स्यै॒वान्तो॒ नास्ति॒ यद्ब्रह्म॒ तत्प्र॑तिगृ-
ण॒त आ च॑क्षीत॒ स प्र॑तिग॒रः ॥ ४ ॥
ब्र॒ह्म॒वा॒दिनो॑ वदन्ति॒ किं द्वा॑दशा॒ह-

मि॒तानीति॒ परि॑-मि॒तानि॒ । यजू॑ꣳषि । अथ॑ । ए॒-
तस्य॑ । ए॒व । अन्तः॑ । न । अ॒स्ति॒ । यत् । ब्रह्म॑ ।
तत् । प्र॒ति॒गृ॒ण॒त इति॑ प्रति-गृ॒ण॒ते । एति॑ । च॒-
क्षी॒त॒ । सः । प्र॒ति॒ग॒र इति॑ प्रति-ग॒रः ॥ ४ ॥

व्याह॒ स द्व॑शी॒कवो॑ऽर्चि॑तार॒स्स एकं॑ च॥१॥

[1]ब्र॒ह्म॒वा॒दि॒न इति॑ ब्रह्म-वा॒दिनः॑ । व॒द॒न्ति॒ ।

सर्वेऽपि दशहोत्रादयश्चतुर्होतारः; यथोक्तं—'दशहोता चतुर्होता। पञ्चहोता षड्ढोता सप्तहोता । अथ कस्माच्चतुर्होतार उच्यन्ते'* इति । परिमिता वा इत्यादि । ऋगादीनि परिमितानि परिच्छिन्नानि 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् । ब्रह्मैव अनन्तं अपरिमितं तत्प्रतिगृणते अध्वर्यवे होताऽऽचक्षीत स एव प्रतिगरो भवति न प्रतिगरोन्य इति । प्रतिगृणतेः 'शतुरनुमः' इति विभक्तेरुदात्तत्वम् । प्रतिगरः थाथादिनोत्तरपदान्तोदात्तत्वम् । शंसितुः प्रोत्साहनं प्रतिगरः ॥

इति सप्तमे तृतीये प्रथमोनुवाकः.

---

[1]'द्वादशाहेन न याज्यम्'† इति यदुक्तं तत्र होत्वन्तरं चाह—

*ब्रा. २-३-१. †सं. ७-२-१०.

स्यं प्रथमेनाह्नर्त्विजां यजमानो वृ-
ङ्क्त इति तेज इन्द्रियमिति किं द्वि-
तीयेनेति प्राणानन्नाद्यमिति किं तृ-
तीयेनेति त्रीनिमाँल्लोकानिति किं
चतुर्थेनेति चतुष्पदः पशूनिति किं
पञ्चमेनेति पञ्चाक्षरां पङ्क्तिमिति किं॰

किम् । द्वादशाहस्येति द्वादश—अहस्य । प्रथमेन । अह्ना । ऋत्विजाम् । यजमानः । वृङ्क्ते । इति । तेजः । इन्द्रियम् । इति । किम् । द्वितीयेन । इति । प्राणानिति प्र—अनान् । अन्नाद्यमित्यन्न—अद्यम् । इति । किम् । तृतीयेन । इति । त्रीन् । इमान् । लोकान् । इति । किम् । चतुर्थेन । इति । चतुष्पद इति चतुः—पदः । पशून् । इति । किम् । पञ्चमेन । इति । पञ्चाक्षरामिति पञ्च—अक्षराम् । पङ्क्तिम् । इति । किम् । षष्ठेन । इति । षट् । ऋ-

ब्रह्मवादिन इत्यादि ॥ ऋत्विक्प्रतिषेधात् अहीन एव निषेधः । द्वादशाहसंबन्धिना प्रथमेनाह्ना ऋत्विक्संबन्धि किं यजमानो वृङ्क्ते आदत्ते इति ब्रह्मवादिनः पृच्छन्ति तेज इन्द्रियं च वृङ्क्ते इत्युत्तरं ब्रूयात् । एवं द्वितीयादिष्वपि द्रष्टव्यं प्रश्नः प्रतिवचनं च । अन्नस्यादनं अन्नाद्यं । छान्दसः क्यप् । चतुष्पदः 'सं-

षष्ठेनेति षड्तूनिति किꣳ सप्तमेने-
ति सप्तपदाꣳ शक्करीमिति ॥ ५ ॥
किमष्टमेनेत्यष्टाक्षरां गायत्रीमिति
किं नवमेनेति त्रिवृतꣳ स्तोममिति
किं दशमेनेति दशाक्षरां विराज-
मिति किमेकादशेनेत्येकादशाक्षरां
त्रिष्टुभमिति किं द्वादशेनेति द्वाद-
शाक्षरां जगतीमित्येतावद्वा अस्ति

तून् । इति । किम् । सप्तमेन । इति । सप्तपदामिति सप्त–पदाम् । शक्करीम् । इति ॥ ५ ॥ किम् । अष्टमेन । इति । अष्टाक्षरामित्यष्टा–अक्षराम् । गायत्रीम् । इति । किम् । नवमेन । इति । त्रिवृतमिति त्रि–वृतम् । स्तोमम् । इति । किम् । दशमेन । इति । दशाक्षरामिति दश–अक्षराम् । विराजमिति वि–राजम् । इति । किम् । एकादशेन । इति । एकादशाक्षरामित्येकादश–अक्षराम् । त्रिष्टुभम् । इति । किम् । द्वादशेन । इति । द्वादशाक्षरामिति द्वादश–अक्षराम् । जगतीम् । इति ।

ख्यासुपूर्वस्य' इति पादस्य लोपः समासान्तः, 'पादः पत्' इति पत् । पञ्चाक्षरां पञ्चाक्षरपदाम् । एतावद्वा इत्यादि । या-

यावदेतद्यावदेवास्ति तदेषां वृङ्क्ते ॥६॥
एष वा आप्तो द्वादशाहो यत्त्रयो-
दशरात्रस्समानꣳ ह्येतदहर्यत्प्राय-

एतावत् । वै । अस्ति । यावत् । एतत् । यावत् ।
एव । अस्ति । तत् । एषाम् । वृङ्क्ते ॥ ६ ॥

शाक्वरीमित्येकंचत्वारिꣳशच्च ॥ २ ॥

[1]एषः । वै । आप्तः । द्वादशाह इति द्वादश-
अहः । यत् । त्रयोदशरात्र इति त्रयोदश-रात्रः ।
समानम् । हि । एतत् । अहः । यत् । प्रायणीय
इति प्र-अयनीयः । च । उदयनीय इत्युत्-अय-

---

वदिदं तदनुक्रान्तं इव यदेव हि तेषामस्ति यद्यावच्च तेषामस्ति तत्सर्वं वृङ्क्ते द्वादशाहेन । तस्मात् द्वादशाहेन न याज्यमिति ॥

इति सप्तमे तृतीये द्वितीयोनुवाकः.

---

[1]अथ द्वौ त्रयोदशरात्रौ । तत्रायं प्रथमः अतिरात्रः पृष्ठ्यष-डहस्सर्वस्तोमोतिरात्रश्चत्वारश्छन्दोमा अतिरात्रश्चेति । इममधि-कृत्योच्यते—एष वा इत्यादि ॥ एष आप्तः पूर्णो द्वादशाहः यज्ञः त्रयोदशरात्रः । कथमित्याह—समानमेकमेतदहः यत्प्रायणी-योदयनीयौ अतिरात्रद्वयम् । तस्माद्द्वादशाह एवायमिति द्वादशा-

णीयंश्चोदयनीयंश्च त्र्यंतिरात्रो भव-
ति त्रयं इमे लोका एषां लोका-
नामाप्त्यै प्राणो वै प्रंथमोऽतिरात्रो
व्यानो द्वितीयोऽपानस्तृतीयः प्राणा-
पानोदानेष्वेवान्नाद्ये प्रति तिष्ठन्ति

नीयः । च । [2]त्र्यंतिरात्र इति त्रि–अतिरात्रः । भवति । त्रयः । इमे । लोकाः । एषाम् । लोकानाम् । आप्त्यै । [3]प्राण इति प्र–अनः । वै । प्रथमः । अति-रात्र इत्यति–रात्रः । व्यान इति वि–अनः । द्वि-तीयः । अपान इत्यप–अनः । तृतीयः । प्राणा-पानोदानेष्विति प्राणापान–उदानेषु । एव । अन्ना-द्य इत्यन्न–अद्ये । प्रतीति । तिष्ठन्ति । सर्वम् ।

---

हत्वेन स्तुतिः । द्वादशानामह्नां प्राप्त्यर्थमित्यर्थः ॥

[2]त्र्यतिरात्र इति ॥ अतिरात्रत्रयवानयं त्रयोदशरात्रः कर्तव्यः। 'यन्मध्येऽतिरात्रं कुर्युः'* इति दोषवचनान्मध्ये तृतीयोतिरात्रः, आदावन्ते च अभ्याविति गम्यते, लोकत्रयसाम्यात् । तत्र चा-ष्टममहरतिरात्रः कार्यः पृष्ठ्ये पडहे समावृत्त इति वेदितव्यम् । त्रय इत्यादि गतम्† ॥

[3]प्राणो वा इत्यादि ॥ व्यानग्रहणं प्राणापानव्यतिरिक्तसर्व-प्राणवृत्त्युपलक्षणार्थम् । प्राणापानोदानेष्वित्यादि । अत्राप्युदान-

---

*सं. ७-३-३.[4] †सं. २-४-११.[9]

सर्वमायुर्यन्ति य एवं विद्वाꣳसस्त्र-
योदशरात्रमासते तदाहुर्वाग्वा एषा
वितता ॥ ७ ॥ यद्द्वादशाहस्तां वि-
च्छिन्द्युर्यन्मध्येऽतिरात्रं कुर्युरुपदा-
सुका गृहपतेर्वाक्स्यादुपरिष्टाच्छन्दो-
मानां महाव्रतं कुर्वन्ति संततामेव

आयुः । यन्ति । ये । एवम् । विद्वाꣳसः । त्रयोद-शरात्रमिति त्रयोदश-रात्रम् । आसते । [4]तत् । आहुः । वाक् । वै । एषा । विततेति वि-तता ॥ ७ ॥ यत् । द्वादशाह इति द्वादश-अहः । ताम् । वीति । छिन्द्युः । यत् । मध्ये । अतिरात्रमित्यति-रात्रम् । कुर्युः । उपदासुकेत्युप-दासुका । गृहप-तेरिति गृह-पतेः । वाक् । स्यात् । उपरिष्टात् । छन्दोमानामिति छन्दः-मानाम् । महाव्रतमिति महा-व्रतम् । कुर्वन्ति । संततामिति सं-तताम् ।

---

ग्रहणं पूर्ववदुपलक्षणार्थम् । अयमर्थः—प्राणापानयोः उदानादिषु च तत्कार्ये चान्नाद्ये प्रतितिष्ठन्ति । गतमन्यत् ॥

[4]तदाहुरित्यादि ॥ द्वादशाहो नाम वाग्वितता सन्तता तत्र यदि मध्येऽतिरात्रस्स्यात् वाग्विच्छेदस्स्यात् । ततश्च गृहपतेर्वा-गुपदासुका क्षयशीला स्यात् । छान्दस उकञ् । तस्माच्छन्दो-

वाचमवं रुन्धतेऽनुपदासुका गृहपते-
र्वाग्भवति पशवो वै छन्दोमा अ-
न्नं महाव्रतं यदुपरिष्टाच्छन्दोमानां
महाव्रतं कुर्वन्ति पशुषु चैवान्नाद्ये
च प्रति तिष्ठन्ति ॥ ८ ॥

एव । वाचम् । अवेति । रुन्धते । अनुपदासुकेत्यनुप—दासुका । गृहपतेरिति गृह—पतेः । वाक् । भवति । 5 पशवः । वै । छन्दोमा इति छन्दः—माः । अन्नम् । महाव्रतमिति महा—व्रतम् । यत् । उपरिष्टात् । छन्दोमानामिति छन्दः—मानाम् । महाव्रतमिति महा—व्रतम् । कुर्वन्ति । पशुषु । च । एव । अन्नाद्य इत्यन्न—अद्ये । च । प्रतीति । तिष्ठन्ति ॥ ८ ॥

वितता त्रिचत्वारिꣳशच्च ॥ ३ ॥

---

मानामुपरिष्टादविवाक्येन सह महाव्रतधर्माणमतिरात्रं कुर्वन्ति न मध्ये सन्ततां अविच्छिन्नां वाचं अवरुन्धे । ततो गृहपतेश्च वागनुपदासुका भवति ॥

'किञ्च—पशवो वै छन्दोमा इत्यादि ॥ तत्साधनत्वात्ताच्छब्द्यम् । व्याख्याताः छन्दो मा महाव्रतं च । एवमुभयत्र विधानादुभयत्र च फलश्रुतेर्विकल्पः—पृष्ठानां वोपरि स्यात् छन्दोमानां वेति ॥

इति सप्तमे तृतीये तृतीयोनुवाकः.

आदित्या अकामयन्तोभयोर्लोकयोर् ऋध्नुयामेति त एतं चतुर्दशरात्रमपश्यन्तमाऽहरन्तेनायजन्त ततो वै त उभयोर्लोकयोरार्ध्नुवन्नस्मिꣳश्चामुष्मिꣳश्च य एवं विद्वाꣳसश्चतुर्दशरात्रमासत उभयोरेव लोकयोर् ऋध्नुवन्त्यस्मिꣳश्चामुष्मिꣳश्च चतुर्दशरात्रो भवति सप्त ग्राम्या ओषध-

[1]आदित्याः । अकामयन्त । उभयोः । लोकयोः । ऋध्नुयाम । इति । ते । एतम् । चतुर्दशरात्रमिति चतुर्दश–रात्रम् । अपश्यन् । तम् । एति । अहरन् । तेन । अयजन्त । ततः । वै । ते । उभयोः । लोकयोः । आर्ध्नुवन् । अस्मिन् । च । अमुष्मिन् । च । ये । एवम् । विद्वाꣳसः । चतुर्दशरात्रमिति चतुर्दश–रात्रम् । आसते । उभयोः । एव । लोकयोः । ऋध्नुवन्ति । अस्मिन् । च । अमुष्मिन् । च । चतुर्दशरात्र इति चतुर्दश–रात्रः । भवति । सप्त । ग्राम्याः । ओषधयः । स-

[1]त्रयश्चतुर्दशरात्रास्तत्राद्यं प्रथमोऽतिरात्रः पृष्ठ्यष्षडह आवृत्तः ।

यस्सप्तारण्या उभयीषामवरुद्ध्यै य-
त्पराचीनानि पृष्ठानि ॥ १ ॥ भव-
न्त्यमुमेव तैर्लोकमभि जयन्ति य-
त्प्रतीचीनानि पृष्ठानि भवन्तीममे-
व तैर्लोकमभि जयन्ति त्रयस्त्रिꣳ-
शौ मध्यतस्स्तोमौ भवतस्साम्राज्य-

प्त । आरण्याः । उभयीषाम् । अवरुध्या इत्यव—रुध्यै । [2]यत् । पराचीनानि । पृष्ठानि ॥ १ ॥ भवन्ति । अमुम् । एव । तैः । लोकम् । अभीति । जयन्ति । यत् । प्रतीचीनानि । पृष्ठानि । भवन्ति । इमम् । एव । तैः । लोकम् । अभीति । जयन्ति । त्रय-स्त्रिꣳशाविति त्रयः—त्रिꣳशौ । मध्यतः । स्तोमौ । भवतः । साम्राज्यमिति सां—राज्यम् । एव । ग-च्छन्ति । अधिराजावित्यधि—राजौ । भवतः ।

---

पृष्ठ्यष्षडहोतिरात्र इति । तं विदधाति—आदित्या इत्यादि । सप्तग्राम्यावरोधः ॥

[2]यत्पराचीनानीत्यादि ॥ ऊर्ध्वमुखानि त्रिवृदादीनि त्रयस्त्रिंशान्तानि पृष्ठानि भवन्ति । तस्मात्तैरमुं लोकमभिजयन्ति । तस्मात्तदनन्तरं मध्ये रूमृद्धत्वात् प्रतीचीनानि प्रत्यङ्मुखानि त्रयस्त्रिंशादीनि त्रिवृदन्तानि पृष्ठानि भवन्ति तस्मात्तैरिमं मनुष्यलोकं अभि-

मेव गच्छन्त्यधिराजौ भवतोऽधिराजा एव समानानां भवन्त्यतिरात्रावभितो भवतः परिगृहीत्यै ॥ १० ॥
प्रजापतिस्सुवर्गं लोकमैत्तं देवा अन्वायन्तानादित्याश्च पशवश्चान्वा-

अधिराजा इत्यधि-राजाः । एव । समानानाम् । भवन्ति । अतिरात्राविव्यति-रात्रौ । अभितः । भवतः । परिगृहीत्या इति परि-गृहीत्यै ॥ १० ॥

पृष्ठानि चतुस्त्रिंशच्च ॥ ४ ॥

[1]प्रजापतिरिति प्रजा-पतिः । सुवर्गमिति सुवः-गम् । लोकम् । ऐत् । तम् । देवाः । अन्विति । आयन् । तान् । आदित्याः । च । पशवः ।

---

जयन्त्येव । एवं त्रयस्त्रिंशस्तोमौ मध्यतः मध्यमौ दिवसौ सप्तमाष्टमौ भवतः । तेन साम्राज्यं गच्छन्ति । मध्ये समृद्धत्वात् । यस्मादेवं तस्माच्चतुर्दशरात्रयाजिनोधिराजाः स्वामिनः समानानां भवन्ति समानैः परिगृहीता भवन्ति ॥

इति सप्तमे तृतीये चतुर्थोनुवाकः.

---

[1]अथ द्वितीयश्चतुर्दशरात्रो विधीयते—प्रजापतिरित्यादि ॥ अत्रेयमहःक्लृप्तिः—अतिरात्रो ज्योतिर्गौरायुः। पृष्ठ्यष्षडहः, आयुर्गौ-

यन्ते देवा अब्रुवन् यान्पशूनुपा-
जीविष्म त इमेऽन्वाग्मन्निति तेभ्य
एतं चतुर्दशरात्रं प्रत्यौहन्त आदि-
त्याः पृष्ठैस्सुवर्गं लोकमाऽरोहन्त्र्यहा-

च । आन्विति । आयन् । ते । देवाः । अब्रुवन् । यान् । पशून् । उपाजीविष्मेत्युप–अजीविष्म । ते । इमे । अन्वाग्मन्नित्यनु–आग्मन् । इति । तेभ्यः । एतम् । चतुर्दशरात्रमिति चतुर्दश–रात्रम् । प्रतीति । औहन् । ते । आदित्याः । पृष्ठैः । सुवर्गमिति सुवः–गम् । लोकम् । एति । अरोहन् । त्र्यहाभ्यामिति त्रि–अहाभ्याम् । अस्मिन् । लो-

ज्योतिरतिरात्र इति । प्रजापतिः स्वर्गमगच्छत् । तं देवा आदित्याः पशवश्चान्वगच्छन् । ते देवा अब्रुवन् यान् पशूनुपाजीविष्म तेऽप्यमी अस्मानन्वाग्मन् अन्वागच्छन्ति । छान्दसे लुङि 'मन्त्रे घस' इति च्लेर्लुक् । 'गतिर्गतौ' इति निघाताभावः, समासश्च । तत्रादित्याः स्वर्गं गच्छन्तु इमे तु पशवः सर्वभूतोपजीव्या अस्मिन्नेव लोके ऋद्धिमन्तः कार्याः । अत्र पृष्ठवानेव चतुर्दशरात्र आदित्यानां स्वर्गगमनहेतुः, पश्वर्थं तु यतितव्यमिति कृताध्यवसाया देवाः तेभ्यः पशुभ्यः चतुर्दशरात्रं प्रत्यौहन् प्रत्यावृत्य गतिमकुर्वन्, प्रथमत्रिरात्रं कृत्वा[1] ततः पृष्ठानन्तरं भूयोपि तत्रैव त्रिरात्रे प्रत्यवरोहणं प्रत्यूहः । ततश्चतु-

[1] पश्वर्थं तु यतित्वा.

भ्यामस्मिन्लोके पशून्प्रत्यौहन्पृष्ठै-
रादित्या अमुष्मिंल्लोक आर्ध्नुवन्त्र्य-
हाभ्यामस्मिन्न् ॥ ११ ॥ लोके प-
शवो य एवं विद्वाꣳसंश्चतुर्दशरा-
त्रमासंत उभयोरेव लोकयोर् ऋध्नु-
वन्त्यस्मिꣳश्चामुष्मिꣳश्च पृष्ठैरेवा-

के । पशून् । प्रतीति । औहन् । पृष्ठैः । आदि-
त्याः । अमुष्मिन् । लोके । आर्ध्नुवन् । त्र्यहाभ्या-
मिति त्रि-अहाभ्याम् । अस्मिन् ॥ ११ ॥ लो-
के । पशवः । [2]ये । एवम् । विद्वाꣳसः । चतुर्दश-
रात्रमिति चतुर्दश-रात्रम् । आसंते । उभयोः ।
एव । लोकयोः । ऋध्नुवन्ति । अस्मिन् । च ।
अमुष्मिन् । च । पृष्ठैः । एव । अमुष्मिन् । लोके ।

---

र्दशरात्रमकुर्वन् पशूनां प्रत्यवरोहणाय । अवयवधर्मेण समुदाय-
व्यपदेशः यथा अवयवव्यूढतया द्वादशाहो व्यूढः । तत्रादित्याः
देवसकाशं समासादितचतुर्दशरात्राः पृष्ठैरेव पृष्ठवत्तयैव स्वर्गमा-
रोहन् । पशूंस्तु अस्मिन्नेव लोके त्र्यहाभ्यां प्रत्यावृत्य अस्मान्देवाः
प्रत्यौहन् प्रत्यावर्तयन् । पृष्ठैरेवादित्या अमुष्मिन् आर्ध्नुवन् । त्र्य-
हाभ्यां यथोक्तलक्षणाभ्यां अस्मिन्पशव आर्ध्नुवन्नित्येव ॥

[2]य एवमित्यादि ॥ गतम् ॥

मुष्मिँल्लोक ऋध्नुवन्ति त्र्यहाभ्या-
मस्मिँल्लोके ज्योतिर्गौरायुरिति त्र्य-
हो भवतीयं वाव ज्योतिरन्तरिक्षं
गौरसावायुरिमानेव लोकानभ्यारो-
हन्ति यदन्यतः पृष्ठानि स्युर्विवि-
वधः स्यान्मध्ये पृष्ठानि भवन्ति

ऋध्नुवन्ति । त्र्यहाभ्यामिति त्रि—अहाभ्याम् । अ-स्मिन् । लोके । [3]ज्योतिः । गौः । आयुः । इति । त्र्यह इति त्रि—अहः । भवति । [4]इयम् । वाव । ज्योतिः । अन्तरिक्षम् । गौः । असौ । आयुः । इमान् । एव । लोकान् । अभ्यारोहन्तीत्यभि—आ-रोहन्ति । यत् । अन्यतः । पृष्ठानि । स्युः । विवि-

---

[3]कः पुनरसौ त्र्यह इत्याह—ज्योतिरित्यादि ॥

[4]कः पुनरस्य विशेष इत्याह—इयं वावेत्यादि ॥ इमानिति इममन्तरिक्षं अमुं च प्रत्यूहेन पुनरिमां प्राप्य ऋद्धा भवन्ति । यदन्यत इत्यादि । यदन्यतः एकतः पृष्ठानि स्युः सामर्थ्या-देकतस्त्र्यहाविति गम्यते । तद्विविवधं स्यात् । उभयतोवलम्ब-क्षीरादिवहनयन्त्रविशेषो विवधः; तद्विरुद्धं स्यात् विषमं स्यात् एकतोल्पं भारं एकतो महाभारमिति । तस्मान्मध्ये पृष्ठानि भवन्ति सामर्थ्यादभितस्त्र्यहाविति गम्यते । सविवधत्वाय विवध-

सविवधत्वार्य ॥१२॥ ओजो वै वी-
र्यं पृष्ठान्योज एव वीर्यं मध्यतो द-
धते बृहद्रथन्तराभ्यां यन्तीयं वाव
रथन्तरमसौ बृहदाभ्यामेव यन्त्य-
थो अनयोरेव प्रति तिष्ठन्त्येते वै य-
ज्ञस्याञ्जसायनी स्रुती ताभ्यामेव

वधमिति वि-विवधम् । स्यात् । मध्ये । पृष्ठानि । भवन्ति । सविवधत्वायेति सविवध-त्वाय ॥१२॥ ओजः । वै । वीर्यम् । पृष्ठानि । ओजः । एव । वीर्यम् । मध्यतः । दधते । [5]बृहद्रथन्तराभ्यामिति बृहत्-रथन्तराभ्याम् । यन्ति । इयम् । वाव । रथन्तरमिति रथं-तरम् । असौ । बृहत् । आभ्याम् । एव । यन्ति । अथो इति । अनयोः । एव । प्रतीति । तिष्ठन्ति । एते इति । वै । यज्ञ-

सदृशत्वाय समभारत्वायेति यावत् । सहशब्दस्य सादृश्येऽव्ययीभावः । 'अव्ययीभावे चाकाले' इति सभावः । ओजो वा इत्यादि । गतम् ॥

[5]बृहद्रथन्तराभ्यामित्यादि ॥ दिवसेषु एकान्तराभ्यां यन्ति । गतमन्यत्* । पराञ्च इत्यादि । अपुनरावृत्ता एव स्वर्गं गच्छन्ति, पराचीनपृष्ठोपयानात् । 'विभाषाञ्चेरदिक्स्त्रियाम्' इति

*सं. ७-२-१२.

सुवर्गं लोकं यन्ति पराञ्चो वा एते
सुवर्गं लोकमभ्यारोहन्ति ये परा-
चीनानि पृष्ठान्युपयन्ति प्रत्यङ्त्र्यहो
भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या
उभयोर्लोकयोर्ऋद्ध्वोत्तिष्ठन्ति च-

स्यं । अञ्जसायनी इत्यञ्जसा—अयनी । स्रुती इति । ताभ्याम् । एव । सुवर्गमिति सुवः—गम् । लोकम् । यन्ति । पराञ्चः । वै । एते । सुवर्गमिति सुवः—गम्। लोकम् । अभ्यारोहन्तीत्यभि—आरोहन्ति । ये । पराचीनानि । पृष्ठानि । उपयन्तीत्युप—यन्ति । प्रत्यङ् । त्र्यह इति त्रि—अहः । भवति । प्रत्यवरूढ्या इति प्रति—अवरूढ्यै । अथो इति । प्रतिष्ठित्या इति प्रति—स्थित्यै । उभयोः । लोकयोः । ऋध्वा । उदिति । तिष्ठन्ति । [6]चतुर्द-

---

स्वः । तस्मात्प्रत्यङ् प्रतीचीनगतिः द्वितीयस्त्र्यहो भवति, आयुर्गौर्ज्योतिरिति । प्रत्यवरूढ्यै प्रत्यवरोहणाय आत्मनो भवति । पृथिव्यामवरोहणाय प्रतिष्ठार्थं च भवति । उभयत्र 'तादौ च' इति गतेः प्रकृतिस्वरत्वम् । एवमुभयोर्लोकयोः ऋद्धिं प्राप्य उत्तिष्ठन्ति ॥

[6]चतुर्दशैता इत्यादि ॥ एताश्चतुर्दशरात्र्यः तासां मध्ये या

तुर्दशैतास्तासां या दश दशांक्षरा विराडन्नं विराड्विराजैवान्नाद्यमवं रुन्धते याश्चतंस्रश्चतंस्रो दिशों दिक्ष्वेव प्रतिं तिष्ठन्त्यतिरात्रावभितों भवतः परिंगृहीत्यै ॥ १३ ॥

शेति चतुः—दश । एताः । तासांम् । याः । दशं । दशांक्षरेति दशं—अक्षरा । विराडिति वि—राट् । अन्नंम् । विराडिति वि—राट् । विराजेति वि—राजा । एव । अन्नाद्यमित्यंन्न—अद्यंम् । अवेति । रुन्धते । याः । चतंस्रः । चतंस्रः । दिशंः । दिक्षु । एव । प्रतीति । तिष्ठन्ति । अतिरात्रावित्यंति—रात्रौ । अभितः । भवतः । परिंगृहीत्या इति परिं—गृहीत्यै ॥ १३ ॥

आर्ध्रुवन्त्यहाभ्यांमस्मिन्त्संविवधत्वाय प्रतिष्ठित्या एकंत्रिꣳशच्च ॥ ५ ॥

---

दश ताभिः दशत्वान्वयात् विराडात्मकान्नलाभः । यास्ततः पराश्चतस्रः ताभिश्चतुष्ट्वान्वयात् दिक्षु प्रतिष्ठिता भवन्ति । अतिरात्रावभितो भवतः उभयलोकवेदिभिः परिग्रहाय ॥

इति सप्तमे तृतीये पञ्चमोनुवाकः.

इन्द्रो वै सदृङ्देवताभिरासीथ्स न व्या-
वृतमगच्छथ्स प्रजापतिमुपाधावत्त-
स्मा एतं पञ्चदशरात्रं प्रायच्छत्तमाऽह-
रत्तेनायजत ततो वै सोऽन्याभिर्देवता-
भिर्व्यावृतमगच्छद्य एवं विद्वाꣳसः

[1]इन्द्रः । वै । सदृङिति स-दृङ् । देवताभिः । आसीत् । सः । न । व्यावृतमिति वि-आवृतम् । अगच्छत् । सः । प्रजापतिमिति प्रजा-पतिम् । उपेति । अधावत् । तस्मै । एतम् । पञ्चदशरात्रमिति पञ्चदश-रात्रम् । प्रेति । अयच्छत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । सः । अन्याभिः । देवताभिः । व्यावृतमिति वि-आवृतम् । अगच्छत् । ये । एवम् । विद्वाꣳसः ।

---

[1]अथ चत्वारः पञ्चदशरात्रा भवन्ति । तत्र द्वौ छन्दोमवन्तौ; तत्र छन्दोमवतोरप्येकः सत्राहीनात्मा पुनरतिरात्रादिः, यथा त्रिवृदग्निष्टोमो ज्योतिर्गौरायुस्त्रयो द्वादशाहस्य दशाहान्यतिरात्र इति । इतरः सत्रमेवोभयतोतिरात्रः; यथाऽतिरात्रो ज्योतिर्गौरायुस्त्रयो द्वादशाहस्य दशाहान्यतिरात्र इति । एतदिदानीं विदधाति—इन्द्रो वा इत्यादि ॥ इन्द्रोऽन्याभिः देवताभिः सदृङ् सम आसीत् । ‘ दृक्सवस्स्वतवसाम् ’ इति नुमि ‘ क्विन्प्रत्ययस्य कुः ’ इति कुत्वम् । स व्यावृतं व्यावृत्ति वैलक्षण्यं नागच्छत् ।

पञ्चदशरात्रमासते व्यावृतमेव पा-
प्मना भ्रातृव्येण गच्छन्ति ज्योति-
र्गौरायुरिति त्र्यहो भवतीयं वाव
ज्योतिरन्तरिक्षम् ॥ १४ ॥ गौरसा-
वायुरेष्वेव लोकेषु प्रति तिष्ठन्त्यस-
त्त्रं वा एतद्यदछन्दोमं यच्छन्दोमा
भवन्ति तेन सत्त्रं देवता एव पृष्ठै-

पञ्चदशरात्रमिति पञ्चदश—रात्रम् । आसते । व्या-
वृतमिति वि—आवृतम् । एव । पाप्मना । भ्रातृ-
व्येण । गच्छन्ति । ज्योतिः । गौः । आयुः । इति ।
त्र्यह इति त्रि—अहः । भवति । इयम् । वाव ।
ज्योतिः । अन्तरिक्षम् ॥ १४ ॥ गौः । असौ ।
आयुः । एषु । एव । लोकेषु । प्रतीति । तिष्ठ-
न्ति । [2]असत्रम् । वै । एतत् । यत् । अछन्दो-
ममित्यछन्दः—मम् । यत् । छन्दोमा इति छन्दः—
माः । भवन्ति । तेन । सत्रम् । देवताः । एव । पृष्ठैः ।

वृतेस्सम्पदादिलक्षणः क्विप् । स प्रजापतिमित्यादि । गतम्* । ज्योति-
रित्यादि । व्याख्यातम्† ॥

[2]असत्रमित्यादि ॥ नेदमछन्दोमस्य सत्रस्य प्रतिषेधार्थं, अपि
तु छन्दोमवतः प्रशंसार्थं, छन्दोमवतस्सकाशे अछन्दोमं सत्र-

*सं. ७-२-५[3]. †सं. ७-१-५[3-4].

रवं रुन्धते पशूञ्छन्दोमैरोजो वै वी-
र्यं पृष्ठानि पशवश्छन्दोमा ओज-
स्येव वीर्ये पशुषु प्रति तिष्ठन्ति प-
ञ्चदशरात्रो भवति पञ्चदशो वज्रो व-
ज्रमेव भ्रातृव्येभ्यः प्र हरन्त्यतिरा-
त्रावभितो भवत इन्द्रियस्य परिगृ-
हीत्यै ॥ १५ ॥

अवेति । रुन्धते । पशून् । छन्दोमैरिति छन्दः—मैः । ओजः । वै । वीर्यम् । पृष्ठानि । पशवः । छन्दोमा इति छन्दः—माः । ओजसि । एव । वीर्ये । पशुषु । प्रतीति । तिष्ठन्ति । पञ्चदशरात्र इति पञ्चदश—रात्रः । भवति । पञ्चदश इति पञ्च—दशः । वज्रः । वज्रम् । एव । भ्रातृव्येभ्यः । प्रेति । हरन्ति । अतिरात्रावित्यति—रात्रौ । अभितः । भवतः । इन्द्रियस्य । परिगृहीत्या इति परि—गृहीत्यै ॥ १५ ॥

अन्तरिक्षमिन्द्रियस्यैकं च ॥ ६ ॥

---

व्यपदेशं नार्हतीति । ओजसि वीर्ये पशुषु प्रतितिष्ठन्ति प्रतिष्ठां गच्छन्ति । पञ्चदशरात्र इति । छन्दोमविधिः । पञ्चदशो वज्र इति । वीर्यवत्त्वात् । अतिरात्रावित्यादि । गतम्* । इन्द्रियपरिग्रहो विशेषः ॥

इति सप्तमे तृतीये षष्ठोनुवाकः.

---

*सं. ७-३-५.६

इन्द्रो वै शिथिल इवाप्रतिष्ठित आ-
सीत्सोऽसुरेभ्योऽबिभेत्स प्रजापति-
मुपाधावत्तस्मा एतं पञ्चदशरात्रं व-
ज्रं प्रायच्छत्तेनासुरान्पराभाव्य वि-
जित्य श्रियमगच्छदग्निष्टुता पाप्मा-

[1]इन्द्रः । वै । शिथिलः । इव । अप्रतिष्ठित इ-
त्यप्रति-स्थितः । आसीत् । सः । असुरेभ्यः ।
अबिभेत् । सः । प्रजापतिमिति प्रजा-पतिम् ।
उपेति । अधावत् । तस्मै । एतम् । पञ्चदशरात्र-
मिति पञ्चदश-रात्रम् । वज्रम् । प्रेति । अयच्छत् ।
तेन । असुरान् । पराभाव्येति परा-भाव्य । वि-
जित्येति वि-जित्य । श्रियम् । अगच्छत् । [2]अ-
ग्निष्टुतेत्यग्नि-स्तुता । पाप्मानम् । निरिति । अद-

[1]अथ छन्दोमवान् पञ्चदशरात्रयोरेकतरः पृष्ठावृत्तिमानितरः त्र्यहावृत्तिमान् । तयोर्द्वितीयं विदधाति—इन्द्रो वै शिथिल इवेत्यादि ॥ इन्द्रः शिथिल इव वित्तेन दुर्बल इवासीत् । हेतुमाह—अप्रतिष्ठितः हतराज्यः । सोसुरेभ्य इत्यादि । गतम्* । पञ्चदशरात्रं वज्रमिति । वज्रसादृश्यमसुराणां मारणत्वात् । तेन असुरान् पराभाव्य अभिभूय विजित्य सेनादिकमपहृत्य तच्छ्रियं राज्यमपि तेषामगच्छत् प्राप्नोत् ॥

[2]अग्निष्टुतेति ॥ सर्वाग्नेयस्त्रिवृदेकाहविशेषो अग्निष्टुत् । तेन

*सं. ७.३.६.[1]

नं निरदहत पञ्चदशरात्रेणौजो बलं-
मिन्द्रियं वीर्यमात्मन्नधत्त य एवं वि-
द्वाꣳसः पञ्चदशरात्रमासंते भ्रातृं-
व्यानेव पराभाव्यं विजित्य श्रियं
गच्छन्त्यग्निष्टुता पाप्मानं निः॥१६॥
दहन्ते पञ्चदशरात्रेणौजो बलमिन्द्रियं

हत। पञ्चदशरात्रेणेति पञ्चदश–रात्रेण। ओजः। बलम्। इन्द्रियम्। वीर्यम्। आत्मन्। अधत्त। ये। एवम्। विद्वाꣳसः। पञ्चदशरात्रमिति पञ्च-दश–रात्रम्। आसते। भ्रातृव्यान्। एव। परा-भाव्येति परा–भाव्य। विजित्येति वि–जित्य। श्रियम्। गच्छन्ति। अग्निष्टुतेत्यग्नि–स्तुता। पा-प्मानम्। निरिति॥ १६ ॥ दहन्ते। पञ्चदशरात्रे-णेति पञ्चदश–रात्रेण। ओजः। बलम्। इन्द्रि-यम्। वीर्यम्। आत्मन्। दधते। एताः। एव।

---

द्वितीयेनाह्ना पाप्मानं निरदहत्। पञ्चदशरात्रेण समुदायेन तत्स-हितेन ओजआदिचतुष्टयं आत्मन्यधत्त अधारयत्। य एवमि-त्यादि। गतम्। एता एव पशव्याः इत्यादि। एताः पञ्चदश-रात्रयः ओजआदिप्रदत्वात् पशव्याः पशुभ्यो हिता भवन्ति।

वीर्यमात्मन्दधत एता एव पशव्याः पञ्चदश वा अर्धमासस्य रात्रयोऽर्धमासशस्संवत्सर आप्यते संवत्सरं पशवोऽनु प्र जायन्ते तस्मात्पशव्या एता एव सुवर्ग्याः पञ्चदश वा अर्धमासस्य रात्रयोऽर्धमासशस्संवत्सर

पशव्याः । [3]पञ्चदशेति पञ्च–दश । वै । अर्धमासस्येत्यर्ध–मासस्य । रात्रयः । अर्धमासश इत्यर्ध-मास–शः । संवत्सर इति सं–वत्सरः । आप्यते । संवत्सरमिति सं–वत्सरम् । पशवः । अनु । प्रेति । जायन्ते । तस्मात् । पशव्याः । एताः । एव । सुवर्ग्या इति सुवः–ग्याः । पञ्चदशेति पञ्च–दश । वै । अर्धमासस्येत्यर्ध–मासस्य । रात्रयः । अर्धमासश इत्यर्धमास–शः । संवत्सर इति सं–वत्स-

गवादिभ्यो यत् । यद्वा—पशूनां प्राप्तिनिमित्तानि । 'गोद्व्यचः' इति यत् ॥

[3]इदानीं सङ्ख्यातोपि स्तौति—पञ्चदशेत्यादि ॥ अर्धमासशः अर्धमासेनार्धमासेन । 'सङ्ख्यैकवचनाच्च' इति शस् । सुवर्ग्याः सुवर्गाय हिताः स्वर्गप्राप्तेर्वा निमित्तानि एताः पञ्चदश रात्रयः त्रिवृदादयः । पूर्ववद्यत् । ज्योतिरित्यादि । व्याख्यातम्* । अत्रेय-

*सं. ७-१-९,३

आप्यते संवत्सरस्सुवर्गो लोकस्त-
स्मात्सुवर्ग्यां ज्योतिर्गौरायुरिति त्र्य-
हो भवतीयं वाव ज्योतिरन्तरिक्षम्
॥ १७ ॥ गौरसावायुरिमानेव लो-
कानभ्यारोहन्ति यदन्यतः पृष्ठानि
स्युर्विविवधः स्यान्मध्ये पृष्ठानि
भवन्ति सविवधत्वायौजो वै वीर्यं

रः । आप्यते । संवत्सर इति सं—वत्सरः । सुवर्ग इति सुवः—गः । लोकः । तस्मात् । सुवर्ग्या इति सुवः—ग्याः । ज्योतिः । गौः । आयुः । इति । त्र्यह इति त्रि—अहः । भवति । इयम् । वाव । ज्योतिः । अन्तरिक्षम् ॥ १७ ॥ गौः । असौ । आयुः । इमान् । एव । लोकान् । अभ्यारोहन्तीत्यभि—आरोहन्ति । [4]यत् । अन्यतः । पृष्ठानि । स्युः । विविवधमिति वि—विवधम् । स्यात् । मध्ये । पृष्ठानि । भवन्ति । सविवधत्वा-

महःक्लृप्तिः—अतिरात्रस्त्रिवृदग्निष्टुत् ज्योतिर्गौरायुः पृष्ठ्यष्षडहः प्रत्यङ् त्र्यहः आयुर्गौर्ज्योतिरतिरात्र इति ॥

[4]यदन्यत इत्यादि ॥ तस्मात् त्र्यहयोर्मध्ये पृष्ठ्यष्षडहः ॥

पृष्ठान्योजं एव वीर्यं मध्यतो दंधते
बृहद्रथन्तराभ्यां यन्तीयं वाव रंथ-
न्तरमसौ बृहदाभ्यामेव यन्त्यथो
अनयोरेव प्रति तिष्ठन्त्येते वै यज्ञ-
स्यांञ्जसायंनी स्रुती ताभ्यामेव सु-
वर्गं लोकम् ॥ १८ ॥ यन्ति परां-

येति सविवध–त्वायं । ओजंः । वै । वीर्यंम् । पृष्ठानिं । ओजंः । एव । वीर्यंम् । मध्यतः । दधते । [5]बृहद्रथन्तराभ्यामितिं बृहत्–रथन्तराभ्याम् । यन्ति । इयम् । वाव । रथन्तरमितिं रथं–तरम् । असौ । बृहत् । आभ्याम् । एव । यन्ति । अथो इतिं । अनयोः । एव । प्रतीतिं । तिष्ठन्ति । एते इतिं । वै । यज्ञस्यं । अञ्जसायंनी इत्यंञ्जसा–अयंनी । स्रुती इतिं । ताभ्याम् । एव । सुवर्गमितिं सुवः–गम् । लोकम् ॥ १८ ॥ यन्ति । [6]परांञ्चः । वै । एते । सुवर्गमितिं सुवः–गम् । लो-

[5]बृहद्रथन्तराभ्यामित्यादि ॥ व्याख्यातम्* ॥

[6]पराञ्च इत्यादि ॥ द्वितीयस्य त्र्यहस्य प्रत्यक्कविधानं व्याख्यातमेव* ॥

*सं. ७-३-५.[5]

त्र्यो वा एते सुवर्गं लोकमभ्यारोह-
न्ति ये पराचीनानि पृष्ठान्युपय-
न्ति प्रत्यङ्त्र्यहो भवति प्रत्यवरूढ्या
अथो प्रतिष्ठित्या उभयोर्लोकयोर्
ऋद्ध्वोत्तिष्ठन्ति पञ्चदशैतास्तासां या
दश दशाक्षरा विराडन्नं विराड्विरा-
जैवान्नाद्यमव रुन्धते याः पञ्च पञ्च
दिशो दिक्ष्वेव प्रति तिष्ठन्त्यतिरात्रा-

कम् । अभ्यारोहन्तीत्यभि-आरोहन्ति । ये । परा-
चीनानि । पृष्ठानि । उपयन्तीत्युप-यन्ति । प्रत्यङ् ।
त्र्यह इति त्रि-अहः । भवति । प्रत्यवरूढ्या इति
प्रति-अवरूढ्यै । अथो इति । प्रतिष्ठित्या इति प्र-
ति-स्थित्यै । उभयोः । लोकयोः । ऋध्वा । उदिति ।
तिष्ठन्ति । [7]पञ्चदशेति पञ्च-दश । एताः । तासाम् ।
याः । दश । दशाक्षरेति दश-अक्षरा । विराडिति
वि-राट् । अन्नम् । विराडिति वि-राट् । विराजे-
ति वि-राजा । एव । अन्नाद्यमित्यन्न-अद्यम् । अ-
वेति । रुन्धते । याः । पञ्च । पञ्च । दिशः । दिक्षु ।

[7]पञ्चदशैता इत्यादि ॥ इदानीं संख्याविशेषान्वयेन अवयव-

वभितो भवत इन्द्रियस्य वीर्यस्य
प्रजायै पशूनां परिगृहीत्यै ॥११॥ प्र-
जापतिरकामयतान्नादस्स्यामिति स
एतꣳ सप्तदशरात्रमपश्यत्तमाऽहर-

एव । प्रतीति । तिष्ठन्ति । अतिरात्रावित्यति-रा-
त्रौ । अभितः । भवतः । इन्द्रियस्य । वीर्यस्य । प्र-
जाया इति प्र-जायै । पशूनाम् । परिगृहीत्या इति
परि-गृहीत्यै ॥ ११ ॥

गच्छन्त्यग्निष्टुता पाप्मानं निरन्तरिक्षं
लोकं प्रजायै द्वे च ॥ ७ ॥

[1]प्रजापतिरिति प्रजा-पतिः । अकामयत । अ-
न्नाद इत्यन्न-अदः । स्याम् । इति । सः । एतम् ।

---

स्तुतिः । पञ्च दिश इत्यादि । ऊर्ध्वया सह । अतिरात्रावभितो भवतः इन्द्रियादिचतुष्टयस्य लाभाय भवतः ॥

इति सप्तमे तृतीये सप्तमानुवाकः

---

[1]अथ सप्तदशरात्रो विधीयते—प्रजापतिरकामयतेत्यादि ॥ गतम् । तस्य चैतान्यहानि—अतिरात्रो ज्योतिर्गौरायुः पञ्चाहो द्वादशाहस्य दशाहान्यतिरात्र इति । पञ्चाह इति । कानि पुनरिमान्यहानि—'आभि-

तेनायजत ततो वै सोऽन्नादोऽभवद्य एवं विद्वाꣳसस्सप्तदशरात्रमासते ऽन्नादा एव भवन्ति पञ्चाहो भवति पञ्च वा ऋतवस्संवत्सर ऋतुष्वेव संवत्सरे प्रति तिष्ठन्त्यथो पञ्चाक्षरा

सप्तदशरात्रमिति–सप्तदश–रात्रम् । अपश्यत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । सः । अन्नाद इत्यन्न–अदः । अभवत् । ये । एवम् । विद्वाꣳसः । सप्तदशरात्रमिति सप्तदश–रात्रम् । आसते । अन्नादा इत्यन्न–अदाः । एव । भवन्ति । पञ्चाह इति पञ्च–अहः । भवति । पञ्च । वै । ऋतवः । संवत्सर इति सं–वत्सरः । ऋतुषु । एव । संवत्सर इति सं–वत्सरे । प्रतीति । तिष्ठ-

श्राविकानामयमविच्छेदः ' इत्याचार्यः । तत्र वचनसामर्थ्यात्प्राकृतान्यपि पृष्ठ्याहानि गृह्यन्ते । अभिप्लवषडहस्याद्यानि पञ्च गृह्यन्ते । कानि पुनस्तानि—ज्योतिरग्निष्टोमो रथन्तरसामा प्रथमः, गौरुक्थ्यो बृहत्सामा द्वितीयः, आयुरुक्थ्यो रथन्तरसामा तृतीयः, गौरुक्थ्यो बृहत्सामा चतुर्थः, आयुरुक्थ्यो रथन्तरसामा पञ्चमः इति । ज्योतिरग्निष्टोमो बृहत्सामा षष्ठः, स तु त्यज्यते । पञ्च वा इत्यादि । गतम् ।* हेमन्तशिशिरयोरेकत्वात् पञ्चत्वम् । अथो अपि च पञ्चत्वा-

*सं. ७-१-१०.५

पङ्क्तिः पाङ्क्तो यज्ञो यज्ञमेवाव रुन्धतेऽसत्त्रं वा एतत् ॥ २० ॥ यदछन्दोमं यच्छन्दोमा भवन्ति तेन सत्त्रं देवता एव पृष्ठैरव रुन्धते पशूञ्छन्दोमैरोजो वै वीर्यं पृष्ठानि पशवश्छन्दोमा ओजस्येव वीर्यं पशुषु

न्ति । अथो इति । पञ्चाक्षरेति पञ्च–अक्षरा । पङ्क्तिः । पाङ्क्तः । यज्ञः । यज्ञम् । एव । अवेति । रुन्धते । [2]असत्रम् । वै । एतत् ॥ २० ॥ यत् । अछन्दोममित्यछन्दः–मम् । यत् । छन्दोमा इति छन्दः–माः । भवन्ति । तेन । सत्रम् । देवताः । एव । पृष्ठैः । अवेति । रुन्धते । पशून् । छन्दोमैरिति छन्दः–मैः । ओजः । वै । वीर्यम् । पृष्ठानि । पशवः । छन्दोमा इति छन्दः–माः । ओजसि । एव ।

न्वयेन पाङ्क्तयज्ञावरोधः । पङ्क्तिप्रभवत्वाद्वा* धानादिदञ्चकसाधनत्वाद्वा पाङ्क्तत्वं यज्ञस्य । पङ्क्तिशब्द उत्सादिरित्युक्तम् ॥

[2]असत्त्रं वा इत्यादि व्याख्यातम्† । तेन पञ्चाहादुपरि द्वादशाहीयो दशरात्रो गृह्यते‡ ॥

*पङ्क्तिप्रधानत्वात्. †सं. ७-३-६.[2] ‡रात्रो विधीयते.

प्रति तिष्ठन्ति सप्तदशरात्रो भवति सप्तदशः प्रजापतिः प्रजापतेराप्त्यै अतिरात्रावभितो भवतोन्नाद्यस्य परिगृहीत्यै ॥ २१ ॥

सा विराड्विक्रम्यातिष्ठद्ब्रह्मणा देवे-

वीर्यं । पशुषु । प्रतीति । तिष्ठन्ति । [3]सप्तदशरात्र इति सप्तदश–रात्रः । भवति । सप्तदश इति सप्त–दशः । प्रजापतिरिति प्रजा–पतिः । प्रजापतेरिति प्रजा–पतेः । आप्त्यै । अतिरात्रावित्यति–रात्रौ । अभितः । भवतः । अन्नाद्यस्येत्यन्न–अद्यस्य । परिगृहीत्या इति परि–गृहीत्यै ॥ २१ ॥

एतत्सप्तत्रिंशञ्च ॥ ८ ॥

[1]सा । विराडिति वि–राट् । विक्रम्येति वि–क्रम्य । अतिष्ठत् । ब्रह्मणा । देवेषु । अन्नेन । अ-

[3]सप्तदशरात्र इत्यादि ॥ सप्तदशस्य प्रजासाधनत्वात् सप्तदशः प्रजापतिः । अतिरात्राभ्यां अन्नाद्यस्य परिग्रहः, अन्नाद्यकामो हि प्रजापतिः अन्नाद्दतेति ?* ॥

इति सप्तमे तृतीये अष्टमोनुवाकः.

[1]अथ विंशतिरात्र आरभ्यते—सा विराडित्यादि ॥ या द्वा-

*अन्नाद्यहतेति [अन्नाद्यहेतुरिति ?]

ष्वन्नेनासुरेषु ते देवा अकामयन्तो-
भयꣳ सं वृञ्जीमहि ब्रह्म चान्नं चेति
त एता विꣳशतिꣳ रात्रीरपश्यन्त-
तो वै त उभयꣳ समवृञ्जत ब्रह्म
चान्नं च ब्रह्मवर्चसिनोऽन्नादा अभ-
वन् य एवं विद्वाꣳसं एता आसंत
उभयमेव सं वृञ्जते ब्रह्म चान्नं च

सुरेषु । ते । देवाः । अकामयन्त । उभयम् । स-
मिति । वृञ्जीमहि । ब्रह्म । च । अन्नम् । च । इति ।
ते । एताः । विꣳशतिम् । रात्रीः । अपश्यन् ।
ततः । वै । ते । उभयम् । समिति । अवृञ्जत ।
ब्रह्म । च । अन्नम् । च । ब्रह्मवर्चसिन इति ब्र-
ह्म-वर्चसिनः । अन्नादा इत्यन्न-अदाः । अभवन् ।
ये । एवम् । विद्वाꣳसः । एताः । आसंते । उभ-
यम् । एव । समिति । वृञ्जते । ब्रह्म । च । अ-

दशाहीया दशाक्षरा विराट् विक्रम्य विविधां क्रान्तिं आस्थायाऽ-
तिष्ठत् । कथं? देवेषु ब्रह्मणा ब्रह्मवर्चसेनातिष्ठत् असुरेष्व-
न्नेन । तत्तत्साधनभावेन तेषुतेषु नि*यतमवर्तत इत्यर्थः । ततस्ते
देवा अकामयन्त ब्रह्म चान्नं चोभयं संवृञ्जीमहि । वयमेव स-

*भनि.

॥ २२ ॥ ब्रह्मवर्चसिनोन्नादा भवन्ति द्वे वा एते विराजौ तयोरेव नाना प्रति तिष्ठन्ति विꣳशो वै पुरुषो द-

शम् । च ॥ २२ ॥ ब्रह्मवर्चसिन इति ब्रह्म–वर्च-सिनः । अन्नादा इत्यन्न–अदाः । भवन्ति । [2]द्वे इति । वै । एते इति । विराजाविति वि–राजौ । तयोः । एव । नाना । प्रतीति । तिष्ठन्ति । [3]विꣳशः । वै । पुरुषः । दश । हस्त्याः । अङ्गुलयः । दश ।

---

म्यक् लभेमहीति । त एता इत्यादि । गतम् । ब्रह्मवर्चसिनः महाब्रह्मवर्चसा अभवन् । अन्नादाः अन्नादनसमर्थाश्चाभवन् । य एवमित्यादि । गतम् ॥

[2]द्वे वा इत्यादि ॥ एकविंशतिरात्रे दशरात्राविलर्थः । दशक-योस्तु विराट्त्वेन स्तुतिः तयोर्विराजोर्नाना पृथक् पृथक् प्रतिष्ठिता भवन्ति । विराडन्नम् । यद्वा—दशकाभ्यां तयोः ब्रह्मवर्चसाना-द्ययोः पृथक्प्रतिष्ठिता भवन्ति ॥

[3]विंश इति ॥ विंशतेः पूरणो विंशः 'तस्य पूरणे डट्' इति डट्, 'विंशतेर्डिति' इति टिलोपः । दश हस्त्याः हस्त-योर्भवाः पद्याः पद्योर्भवाः । 'शरीरावयवाच्च' इति यत् । 'पद्यत्यतदर्थे' इति पद्भावः । एताः पृथग्वीर्याः विंशतिरङ्गुलयः पुरुषजाः तदधीनप्रवृत्तित्वात् । तत्रावयवापेक्षया विंशत्वम्, अव-

श हस्त्या अङ्गुल्यो दश पद्या या-
वानेव पुरुषस्तमाप्त्वोत्तिष्ठन्ति ज्यो-
तिर्गौरायुरिति त्र्यहा भवन्तीयं वा-
व ज्योतिरन्तरिक्षं गौरसावायुरिमा-
नेव लोकानभ्यारोहन्त्यभिपूर्वं त्र्य-
हा भवन्त्यभिपूर्वमेव सुवर्गम्॥२३॥

पद्याः । यावान् । एव । पुरुषः । तम् । आप्त्वा । उदिति । तिष्ठन्ति । [4]ज्योतिः । गौः । आयुः । इति । त्र्यहा इति त्रि-अहाः । भवन्ति । इयम् । वाव । ज्योतिः । अन्तरिक्षम् । गौः । असौ । आयुः । इमान् । एव । लोकान् । अभ्यारोहन्तीत्यभि-आरोहन्ति । अभिपूर्वमित्यभि-पूर्वम् । त्र्यहा इति त्रि-अहाः । भवन्ति । अभिपूर्वमित्यभि-पूर्वम् । एव । सुवर्गमिति सुवः-गम्॥

---

यन्यपेक्षया एकत्वम् । यावानित्यादि । यत्परिमाणं पुरुषसामर्थ्यं तत्सर्वमाप्त्वा उत्तिष्ठन्ति लोके उच्छ्रितं भजन्ते । सत्राद्वा उत्तिष्ठन्ति उदवस्यन्ति ॥

[4]अथाहानि विदधाति—ज्योतिरित्यादि ॥ अयं तावदहःक्रमः—अतिरात्रः ज्योतिर्गौरायुरिति त्र्यहस्त्रिरभ्यस्तो नवपृष्ठ्यषडहः पुनरपि त्र्यहः प्रतीचीन आयुर्गौर्ज्योतिरतिरात्र इति । एष

लोकमभ्यारोहन्ति यदन्यतः पृष्ठा-
नि स्युर्विविवधꣳ स्यान्मध्ये पृष्ठा-
नि भवन्ति सविवधत्वायौजो वै
वीर्यं पृष्ठान्योज एव वीर्यं मध्यतो
दधते बृहद्रथन्तराभ्यां यन्तीयं वाव
रथन्तरमसौ बृहदाभ्यामेव यन्त्य-
थो अनयोरेव प्रति तिष्ठन्त्येते वै य-
२३ ॥ लोकम् । अभ्यारोहन्तीत्यभि-आरोहन्ति।
[5]यत् । अन्यतः । पृष्ठानि । स्युः । विविवधमिति वि-
विवधम् । स्यात् । मध्ये । पृष्ठानि । भवन्ति । सविवध-
त्वायेति सविवध-त्वाय । ओजः । वै । वीर्यम् ।
पृष्ठानि । ओजः । एव । वीर्यम् । मध्यतः । दधते।
बृहद्रथन्तराभ्यामिति बृहत्-रथन्तराभ्याम् । य-
न्ति । इयम् । वाव । रथन्तरमिति रथं-तरम् ।
असौ । बृहत् । आभ्याम् । एव । यन्ति । अथो
इति । अनयोः । एव । प्रतीति । तिष्ठन्ति । एते

प्रतिपाद्यते—त्र्यहा इति । त्रय एव बहुत्वस्य कृतार्थत्वात्तद्व्यति-रेकेण च एकादशानामह्नां प्रतिपादनात् । अभिपूर्वमिति । आनु-पूर्व्येणाविच्छेदेन ॥

[5]यदन्यत इत्यादि ॥ गतम्* । प्रत्यङ्गिति पृष्ठेभ्यः पर एकस्त्र्यहः

*सं. ७-१-७४

ज्ञस्याञ्जसायनी स्रुती ताभ्यामेव सुवर्गं लोकं यन्ति पराञ्चो वा एते सुवर्गं लोकमभ्यारोहन्ति ये पराचीनानि पृष्ठान्युपयन्ति प्रत्यङ्क्र्यहो भवति प्रत्यवरूढ्या अथो प्रतिष्ठित्या उभयोर्लोकयोर् ऋद्ध्वोत्तिष्ठन्त्यतिरात्रावभितो भवतो ब्रह्मवर्चसस्यान्नाद्यस्य

इति । वै । यज्ञस्य । अञ्जसायनी इत्यञ्जसा—अयनी । स्रुती इति । ताभ्याम् । एव । सुवर्गमिति सुवः—गम् । लोकम् । यन्ति । पराञ्चः । वै । एते । सुवर्गमिति सुवः—गम् । लोकम् । अभ्यारोहन्तीत्यभि—आरोहन्ति । ये । पराचीनानि । पृष्ठानि । उपयन्तीत्युप—यन्ति । प्रत्यङ् । त्र्यह इति त्रि—अहः । भवति । प्रत्यवरूढ्या इति प्रति—अवरूढ्यै । अथो इति । प्रतिष्ठित्या इति प्रति—स्थित्यै । उभयोः । लोकयोः । ऋध्वा । उदिति । तिष्ठन्ति । अतिरात्रावित्यति—रात्रौ । अभितः । भवतः । ब्रह्मवर्चसस्येति ब्रह्म—वर्चसस्य । अन्नाद्यस्येत्यन्न—

---

प्रतीचीनो भवति । अतिरात्राभ्यां ब्रह्मवर्चसान्नाद्ययोः परिग्रहः ॥

परिंगृहीत्यै ॥ २४ ॥

असावादित्योस्मिन्लोक आसीत्तं दे-
वाः पृष्ठैः परिगृह्य सुवर्गं लोकमंग-
अयंस्य । परिंगृहीत्या इति परिं—गृहीत्यै ॥ २४ ॥

वृञ्जते ब्रह्म चान्नं च सुवर्गमेते सुवर्गं
त्रयो विंशतिश्च ॥ ९ ॥

[1]असौ । आदित्यः । अस्मिन् । लोके । आ-
सीत् । तम् । देवाः । पृष्ठैः । परिगृह्येति परि—गृह्य ।
सुवर्गमिति सुवः—गम् । लोकम् । अगमयन् । परैः ।

---

इति सप्तमे तृतीये नवमोनुवाकः

---

[1]अथैकविंशतिरात्रः प्रस्तूयते—असावित्यादि ॥ असौ इदानी-मुपरि वर्तमानः असौ आदित्यः पूर्वस्मिन् मनुष्यलोके आसीत् । अथ देवाः तं पृष्ठैः पृष्ठस्थानीयैष्षड्भिरहोभिः परिगृह्य अस्माल्लोकात् स्वर्गं लोकमगमयन् दिवाकीर्त्येन प्रत्यस्थापयन् प्रतिष्ठापितवन्तः । दिवाकीर्त्यं नाम सामविशेषः । तत्सामकमहरपि दिवाकीर्त्यम् । यत्रोदित आदित्ये प्रातरनुवाकमुपाकरोति । अथ पुनरपि परैः परस्सामभिः त्रिभिरहोभिः तं परस्तादुपरि पर्यगृह्णन् । अथ पृष्ठैरुपरि तैष्षड्भिरहोभिः आवृत्तैरुपावारोहन् स्वर्गलोकात्पृथिवी-

मयन्परैरवस्तात्पर्यगृह्णन्दिवाकीर्त्येन
सुवर्गे लोके प्रत्यस्थापयन्परैः पर-
स्तात्पर्यगृह्णन्पृष्ठैरुपावारोहन्त्स वा
असावादित्योऽमुष्मिँल्लोके परैरुभ-
यतः परिगृहीतो यत्पृष्ठानि भव-
न्ति सुवर्गमेव तैर्लोकं यजमाना

अवस्तात् । परीति । अगृह्णन् । दिवाकीर्त्येनेति दि-वा-कीर्त्येन । सुवर्ग इति सुवः-गे । लोके । प्रतीति । अस्थापयन् । परैः । परस्तात् । परीति । अगृह्णन् । पृष्ठैः । उपावारोहन्नित्युप-अवारोहन् । सः । वै । असौ । आदित्यः । अमुष्मिन् । लोके । परैः । उभयतः । परिगृहीत इति परि-गृहीतः । [2]यत् । पृष्ठानि । भवन्ति । सुवर्गमिति सुवः-गम् । एव । तैः । लोकम् । यजमानाः । यन्ति ।

---

मुपावारोहन् तस्मात्सोऽयमसावादित्यो अमुष्मिन् लोके परैः परस्सामभिरुभयतः परस्तादवस्ताच्च परिगृहीतः ॥

[2]यत्पृष्ठानीत्यादि ॥ गतम् । यत्पर इत्यादि । यदि परस्सामानः परस्तादुपरिष्टान्न स्युः । संज्ञायां व्यत्ययेन सर्वनामत्वम् । पराञ्चः परागताः स्वर्गान्निष्टद्येरन् निर्गच्छेरन् स्वर्गमतीत्योपरि गच्छेयुः । अथ यद्यवस्तादधस्तात् परस्सामानो न स्युः प्रजाः

यन्ति परैरवस्तात्परि गृह्णन्ति दिवाकीर्त्येन ॥ २५ ॥ सुवर्गे लोके प्रति तिष्ठन्ति परैः परस्तात्परि गृह्णन्ति पृष्ठैरुपावरोहन्ति यत्परे परस्तान्न स्युः पराञ्चस्सुवर्गाल्लोकान्निष्पद्येरन् यदवस्तान्न स्युः प्रजा निर्दहेयुरभितो दिवाकीर्त्यं परस्सामानो भवन्ति

परैः । अवस्तात् । परीति । गृह्णन्ति । दिवाकीर्त्येनेति दिवा-कीर्त्येन ॥ २५ ॥ सुवर्ग इति सुवः-गे । लोके । प्रतीति । तिष्ठन्ति । परैः । परस्तात् । परीति । गृह्णन्ति । पृष्ठैः । उपावरोहन्तीत्युप-अवरोहन्ति । यत् । परे । परस्तात् । न । स्युः । पराञ्चः । सुवर्गादिति सुवः-गात् । लोकात् । निरिति । पद्येरन् । यत् । अवस्तात् । न । स्युः । प्रजा इति प्र-जाः । निरिति । दहेयुः । अभितः । दिवाकीर्त्यमिति दिवा-कीर्त्यम् । परस्सामान इति परः-सामानः । भवन्ति । सुवर्ग इति सुवः-गे ।

पृथिवीस्थानं निर्दहेयुः आदित्यनामानो यजमानाः तस्मादभितो दिवाकीर्त्यं विषुवन्तं उभयतः परस्सामानः स्वर्गस्थितान् यजमा-

सुवर्ग एवैनांल्लोक उभयतः परि गृह्णन्ति यजमाना वै दिवाकीर्त्यꣳ संवत्सरः परस्सामानोभितो दिवाकीर्त्यं परस्सामानो भवन्ति संवत्सर एवोभयतः ॥ २६ ॥ प्रति तिष्ठन्ति पृष्ठं वै दिवाकीर्त्यं पार्श्वे पर-

एव । एनान् । लोके । उभयतः । परीति । गृह्णन्ति । [3]यजमानाः । वै । दिवाकीर्त्यमिति दिवा–कीर्त्यम् । संवत्सर इति सं–वत्सरः । परस्सामान इति परः–सामानः । अभितः । दिवाकीर्त्यमिति दिवा–कीर्त्यम् । परस्सामान इति परः–सामानः । भवन्ति । संवत्सर इति सं–वत्सरे । एव । उभयतः ॥ २६ ॥ प्रतीति । तिष्ठन्ति । पृष्ठम् । वै । दिवाकीर्त्यमिति दिवा–कीर्त्यम् । पार्श्वे इति । प-

---

नान् उभयतः परिगृह्णन्ति ऊर्ध्वाधः पातभीतान् धारयन्ति । 'अभितः परितः' इति द्वितीया ॥

[3]यजमाना इत्यादि ॥ गतम् । पृष्ठं वा इत्यादि । पृष्ठं पार्श्वस्थानीयत्वात् तस्मात्पृष्ठमभितः पार्श्वे क्लृप्ते प्रजानाम् । भूयिष्ठा इत्यादि । बहुतमा अतिग्राह्यमध्यमेषु सप्तस्वहस्सु गृह्यन्ते । भूयां-

स्सामानोभितो दिवाकीर्त्यं परस्सा-
मानो भवन्ति तस्मादभितः पृष्ठं पार्श्वे
भूयिष्ठा ग्रहा गृह्यन्ते भूयिष्ठꣳ शस्यते
यज्ञस्यैव तन्मध्यतो ग्रन्थिं ग्रथ्नन्त्य-
विस्रꣳसाय सप्त गृह्यन्ते सप्त वै शी-
र्षण्याः प्राणाः प्राणानेव यजमा-

रस्सामान इति परः—सामानः । अभितः । दिवा-कीर्त्यमिति दिवा—कीर्त्यम् । परस्सामान इति प-रः—सामानः । भवन्ति । तस्मात् । अभितः । पृ-ष्ठम् । पार्श्वे इति । भूयिष्ठाः । ग्रहाः । गृह्यन्ते । भू-यिष्ठम् । शस्यते । यज्ञस्य । एव । तत् । मध्यतः । ग्रन्थिम् । ग्रथ्नन्ति । अविस्रꣳसायेत्यवि—स्रꣳसा-य । [4]सप्त । गृह्यन्ते । सप्त । वै । शीर्षण्याः । प्रा-

---

सोस्य यज्ञस्य मध्ये ग्रन्थिं ग्रथ्नन्ति कुर्वन्ति यज्ञस्याविस्रंसा-य अनधःपतनाय ॥

[4]सप्त गृह्यन्त इति ॥ त्रिषु परस्सामसु त्रीनतिग्राह्यान् गृह्णाति 'उपयामगृहीतोस्यग्नये त्वौषधीभ्यः '* इत्यादिभिः त्रिभिः एतानेवावृत्तानर्वाक् सामसु तानूर्ध्वानावृत्तांश्च विषुवति† । तेषां मध्ये सूर्यमुदु त्यं जातवेदसमिति । शीर्षण्याः शिरसि भवाः । 'शरीरा-

---

*सं ७-१-११. †..त्तांश्चाविष्मति.

नेषु दधति यत्पराचीनानि पृष्ठानि भवन्त्यमुमेव तैर्लोकमभ्यारोहन्ति यदिमं लोकं न ॥ २७ ॥ प्रत्यवरोहेयुरुद्वा माद्येयुर्यजमानाः प्र वा मीयेरन् यत्प्रतीचीनानि पृष्ठानि भव-

णा इति प्र-अनाः । प्राणानिति प्र-अनान् । एव । यजमानेषु । दधति । [5]यत् । पराचीनानि । पृष्ठानि । भवन्ति । अमुम् । एव । तैः । लोकम् । अभ्यारोहन्तीत्यभि-आरोहन्ति । यत् । इमम् । लोकम् । न ॥ २७ ॥ प्रत्यवरोहेयुरिति प्रति-अवरोहेयुः । उदिति । वा । माद्येयुः । यजमानाः । प्रेति । वा । मीयेरन् । यत् । प्रतीचीनानि । पृष्ठानि । भवन्ति ।

---

वयवाच्च' इति यत्, 'ये च तद्धिते' इति शीर्षन्भावः ॥

[5]यत्पराचीनानीत्यादि ॥ पराचीनानि ऊर्ध्वान्येव यद्युभयतोपि पृष्ठानि भवन्ति अमुमेव लोकं अभ्यारोहन्ति तैः तथाविधैः । ततश्च यदिमं लोकं न प्रत्यवरोहेयुः उन्माद्येयुर्वा प्रमीयेरन्वा यजमानाः तस्माद्यत्प्रतीचीनानि आवृत्तानि पृष्ठानि भवन्ति तेनेमं लोकं यजमानाः प्रत्यवरोहन्ति । अपि च अमुष्मात् प्रत्यवरुह्य अस्मिन् लोके प्रतितिष्ठन्ति । तच्चानुन्मादाय भवति । 'विभाषाञ्चेः' इति खः । 'गतिर्गतौ' इति पूर्वस्य

न्तीममेव तैर्लोकं प्रत्यवरोहन्त्यथो
अस्मिन्नेव लोके प्रति तिष्ठन्त्यनु-
न्मादायेन्द्रो वा अप्रतिष्ठित आसीत्स
प्रजापतिमुपाधावत्तस्मा एतमेकवि॒ꣳ-
शतिरात्रं प्रायच्छत्तमाऽहरत्तेनायजत
ततो वै स प्रत्यतिष्ठद्ये बहुयाजिनो-

इमम् । एव । तैः । लोकम् । प्रत्यवरोहन्तीति प्रति—अवरोहन्ति । अथो इति । अस्मिन् । एव । लोके । प्रतीति । तिष्ठन्ति । अनुन्मादायेत्यनुत्—मादाय । [6]इन्द्रः । वै । अप्रतिष्ठित इत्यप्रति—स्थितः । आसीत् । सः । प्रजापतिमिति प्रजा—पतिम् । उपेति । अधावत् । तस्मै । एतम् । एकविꣳशतिरात्रमित्येकविꣳशति—रात्रम् । प्रेति । अयच्छत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । सः । प्रतीति । अतिष्ठत् । [7]ये । बहुया-

गतेर्निघातः, 'तिङि चोदात्तवति' इति परस्य तिङ उदात्तत्वम् ॥

[6]इन्द्रो वा इत्यादि । गतम् ॥

[7]ये बहुयाजिन इत्यादि ॥ ये बहुभिः यज्ञैः इष्टवन्तोपि अप्रतिष्ठिता एव स्युः । त इत्यादि । मासर्तुलोकादयः

प्रतिष्ठिताः ॥ २८ ॥ स्युस्त एक-
विꣳशतिरात्रमासीरन्द्वादश मासाः
पञ्चर्तवस्त्रय इमे लोका असावादि-
त्य एकविꣳश एतावन्तो वै देवलो-
कास्तेष्वेव यथापूर्वं प्रति तिष्ठन्त्य-
सावादित्यो न व्यरोचत स प्रजा-
पतिमुपाधावत्तस्मा एतमेकविꣳश-

जिन इति बहु-याजिनः । अप्रतिष्ठिता इत्यप्रति-स्थिताः ॥ २८ ॥ स्युः । ते । एकविꣳशतिरात्र-मित्येकविꣳशति-रात्रम् । आसीरन् । द्वादश । मासाः । पञ्च । ऋतवः । त्रयः । इमे । लोकाः । असौ । आदित्यः । एकविꣳश इत्येक-विꣳशः । एतावन्तः । वै । देवलोका इति देव-लोकाः । तेषु । एव । यथापूर्वमिति यथा-पूर्वम् । प्रतीति । तिष्ठन्ति । [8]असौ । आदित्यः । न । वीति । अरोचत । सः । प्रजापतिमिति प्रजा-पतिम् । उपेति । अधावत् । तस्मै । एतम् । एकविꣳशति-

---

आत्मनो योगस्थानानि एतावन्तो देवलोकाः तेषु सर्वेषु यथा पूर्वमनुक्रमेण प्रतिष्ठां गच्छन्ति ॥

[8]असौ इत्यादि ॥ गतम् ॥

ति रात्रं प्रायच्छत्तमाऽहरत्तेनायज-
त ततो वै सोऽरोचत य एवं विद्वा-
ँसं एकविँशतिरात्रमासते रो-
चन्त एवैकविँशतिरात्रो भवति
रुग्वा एकविँशो रुचमेव गच्छ-
न्त्यथो प्रतिष्ठामेव प्रतिष्ठा ह्येक-
विँशोऽतिरात्रावभितो भवतो ब्रह्म-

रात्रमित्येकविँशति-रात्रम् । प्रेति । अयच्छत् । तम् । एति । अहरत् । तेन । अयजत । ततः । वै । सः । अरोचत । ये । एवम् । विद्वाँसः । एकविँशति-रात्रमित्येकविँशति-रात्रम् । आसते । रोचन्ते । एव । एकविँशतिरात्र इत्येकविँशति-रात्रः । भवति । [9]रुक् । वै । एकविँश इत्येक-विँशः । रुचम् । एव । गच्छन्ति । अथो इति । प्रतिष्ठामिति प्रति-स्थाम् । एव । प्रतिष्ठेति प्रति-स्था । हि । एकविँश इत्येक-विँशः । अतिरात्रावित्यति-रात्रौ । अभितः । भवतः । ब्रह्मवर्चसस्येति ब्रह्म-

---

[9]रुगित्यादि ॥ रोचनशीलत्वात् तस्माद्रुचं दीप्तिं प्राप्नुवन्ति। अपि च एकविंशस्य प्रतिष्ठात्वात् प्रतिष्ठामपि गच्छन्त्येव । अतिरात्रावित्यादि । गतम् । ब्रह्मवर्चसपरिग्रहो विशेषः । यथा

वर्चसस्य परिगृहीत्यै ॥ २१ ॥

अर्वाङ्यज्ञस्सं क्रामत्वमुष्मादधि

वर्चसस्यं । परिगृहीत्या इति परि–गृहीत्यै ॥२१॥

गृह्णन्ति दिवाकीर्त्यंनैवोभयतो नाप्रतिष्ठिता

आसंत एकविंꣳशतिश्च ॥ १० ॥

[1]अर्वाङ् । यज्ञः । समिति । क्रामतु । अमुष्मात् । अधीति । माम् । अभि । ऋषीणाम् ।

त्रिरात्रः पृष्ठ्यष्षडहः परस्सामानस्त्रयः विषूवान् आवृत्ताः परस्सामानः प्रतीचीनाः पृष्ठ्यष्षडहोतिरात्रः इति ॥

सप्तमे तृतीये दशमोनुवाकः.

---

[1]अथाश्वमेधे अष्टावाहुतीः* जुहोति—अर्वाङित्यादि ॥ प्रथमा गायत्री त्रिपदा । अर्वाङितो मुखो यज्ञः संक्रामतु यजमानं समागच्छतु । कीदृशः? ऋषीणां ज्ञानवतां यजमानानां यः पुरोहितः सर्वार्थेषु साधनभावेन पुरस्तान्निहितः । 'पुरोव्ययम्' इति गतित्वात् 'गतिरनन्तरः' इति प्रकृतिस्वरत्वम् । सोयं यज्ञो मामभि मामेव लक्षीकृत्य अधिकमर्वाक् संक्रामतु आगच्छतु । अर्वागञ्चतीति 'ऋत्विक्' इत्यादिना क्विन्, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम् । अमुष्माद्देवदत्तादेरपक्रम्य यो मां द्वेष्टि तं हित्वा मामभि संक्रामतु ॥

---

*अश्वमेधे आशीः.

मामभि । ऋषीणां यः पुरोहितः ।
निर्देवं निर्वीरं कृत्वा विष्कन्धं त-
स्मिन् हीयतां योस्मान्द्वेष्टि । शरीरं
यज्ञशमलं कुसीदं तस्मिन्थ्सीदतु

यः। पुरोहित इति पुरः—हितः । [2]निर्देवमिति निः—देवम् । निर्वीरमिति निः—वीरम् । कृत्वा । विष्कन्धमिति वि—स्कन्धम् । तस्मिन्न् । हीयताम् । यः। अस्मान् । द्वेष्टि । शरीरम् । यज्ञशमलमिति य-ज्ञ—शमलम् । कुसीदम् । तस्मिन्न् । सीदतु । यः।

[2]अथ द्वितीया—निर्देवमिति ॥ पङ्क्तिविशेषः । निर्देवं निर्गता देवा यस्मात्तं निस्स्वाहाकारवषट्कारतया देवैर्बहिष्कृतं निर्वीरं निर्गतवीरं दैवेन पुरुषकारेण च विरहितं कृत्वा विष्कन्धं विविधशोषणं शरीरं कृपणं तस्मिन् हीयतां स्थाप्यताम् । हि गतौ । दधातेर्वा छान्दसो हिभावः । उत्तरार्धर्चे स्थितं शरीरग्रहणमिह संबध्यते । यद्वा—द्वेष्टरि निर्देवादिगुणे कृते तस्मिन् तस्य शरीरं विविधशोषं हीयतां क्षीयताम् । जहातेर्घुमास्थादिना ईत्वम् । स्कन्धेर्घञ् । 'वेस्कन्देरनिष्ठायाम्' इति षत्वम् । व्यत्ययेन षत्वम् । सर्वत्राव्ययपूर्वपदप्रकृतिस्वरत्वम् । यद्वा—विरूपस्कन्धावयवं शरीरम् । सुषामादित्वात् षत्वम् । तद्द्वेष्टरि स्थाप्यताम् । तादृशं वा तत्क्षीयतां प्रवृत्त्यभावेन । तदेवाह—यज्ञशमलं शमेरौणादिको लप्रत्ययः । अगागमश्च । कुसीदं वृद्धिप्रयोगजीवनं यज्ञशमलं यज्ञानर्हत्वनिमित्तं तस्मिन् सीदतु जीविकात्वेन वर्तताम् ।

योऽस्मान्द्वेष्टि । यज्ञ यज्ञस्य यत्तेज-
स्तेन सं क्राम मामभि । ब्राह्मणा-
नृत्विजो देवान् यज्ञस्य तपसा ते
सवाहमा हुवे । इष्टेन पक्कमुप ॥

अस्मान् । द्वेष्टि । [3]यज्ञ । यज्ञस्य । यत् । तेजः ।
तेन । समिति । क्राम । माम् । अभि । ब्राह्म-
णान् । ऋत्विजः । देवान् । यज्ञस्य । तपसा । ते ।
सव । अहम् । एति । हुवे । [4]इष्टेन । पक्कम् । उ-

ततश्चायज्ञीयत्वं 'यज्ञेन देवेभ्यः'* इति वचनात् न कदाचिदप्य-
नृणस्स्यात् । यज्ञनिमित्तानि च श्रेयांसि न प्राप्नुयात् । यो-
स्मान् द्वेष्टीति ॥

[3]अथ तृतीया—यज्ञ यज्ञस्येति ॥ उपरिष्टाद्बृहती चतुर्थस्य द्वाद-
शाक्षरत्वात् अन्येषां चाष्टाक्षरत्वात् । उक्तं यज्ञो मामभिसं-
क्रामत्विति; अधुना यज्ञं प्रत्यक्षवदाह—हे यज्ञ! यज्ञस्य सम्यग-
नुष्ठितस्य तव यत्तेजः तेन मामभिसंक्राम यथा मय्यपि तेजः
स्यात्, यथा चाहं ब्राह्मणान् ऋत्विजो देवांश्च यज्ञस्य तव तप-
सा इह अस्मिन् प्रयोगे आह्वये आह्वयामि; तव हि तेजसा
निर्भयोऽहं इमान् आह्वातुमर्हामि । हे सव! महायज्ञ! । ह्वयते-
र्लटि शपो लुक् । 'बहुलं छन्दसि' इति संप्रसारणम् ॥

[4]अथ चतुर्थी—इष्टेनेति ॥ द्विपदा जगती द्व्यक्षराधिका ।
अहमादिः द्वितीयः पादः । पादमध्येवस्यति छन्दोविचितिव्य-

*सं. ६-३-१० †चतुर्थस्यासमाना

३० ॥ ते हुवे सवाहम् । सं ते वृञ्जे
सुकृतꣳ सं प्रजां पशून् । प्रैषा-
न्थ्सामिधेनीराघारावाज्यभागावाश्रु-
तं प्रत्याश्रुतमा शृणामि ते । प्रया-

पेति ॥ ३० ॥ ते । हुवे । सव । अहम् । समिति । ते । वृञ्जे । सुकृतमिति सु-कृतम् । समिति । प्रजामिति प्र-जाम् । पशून् । [5]प्रैषानिति प्र-एषान् । सामिधेनीरिति सां-इधेनीः । आघारावित्या-घारौ । आज्यभागावित्याज्य-भागौ । आश्रुतमित्या-श्रुतम् । प्रत्याश्रुतमिति प्रति-आ-श्रुतम् । एति । शृणामि । ते । प्रयाजानूयाजा-

---

त्ययोऽयम् । हे सव त्वयि मयि संक्रान्ते अहं तव इष्टेन त्वत्संबन्धिना यजमानेन पक्कमुपहुवे उपह्वयामि मम भोगार्थं आकाङ्क्षामि । किंच—तवेष्टेन सुकृतं प्रजां पशून् संवृञ्जे समाकर्षामि ॥

[5]अथ पञ्चमी—प्रैषानिति ॥ उपरिष्टाज्ज्योतिर्जगती, चतुर्थस्य पादस्याष्टाक्षरत्वात् । प्रैषादयः प्रसिद्धाः । तान् त्वदर्थमाशृणोमि आश्रयामि । श्रयतेर्विकरणव्यत्ययः, संप्रसारणं छान्दसम् । धात्वन्तरं वा द्रष्टव्यम् । प्रैष्यन्ते एभिरिति प्रैषाः 'प्रादूहोढोढ्येषैष्येषु' इति वृद्धिः, थाथादिनोत्तरपदान्तोदात्तत्वम् । 'समिधामाधाने षेण्यः' इति षित्त्वात् ङीष् । आघार्येते इत्याघारौ । आज्यं भागो ययोः । आश्रुतं आश्रावितम् । 'गति-

जानूयाजान्थ्स्विष्टकृतमिडांमाशिष
आ वृंञ्जे सुवंः । अग्निनेन्द्रेण सो-
मेन सरंस्वत्या विष्णुंना देवताभिः ।
याज्यानुवाक्याभ्यामुपं ते हुवे सवा-

नितिं प्रयाज-अनूयाजान् । स्विष्टकृतमितिं स्वि-
ष्ट-कृतंम् । इडांम् । आशिष इत्यां-शिषंः । ए-
ति । वृञ्जे । सुवंः । [6]अग्निना । इन्द्रेण । सोमेन ।
सरंस्वत्या । विष्णुंना । देवताभिः । याज्यानुवा-
क्याभ्यामितिं याज्या-अनुवाक्याभ्याम् । उपेति ।
ते । हुवे । सव । अहम् । यज्ञम् । एतिं । ददे ।

---

रनन्तरः ' इति गतेः प्रकृतिस्वरत्वम् । प्रत्याश्रुतं प्रत्याश्रावितम् । पूर्वेणानन्तरस्य गतेः स्वरः । प्रयाजाः प्रथमयागाः । 'प्रयाजानूयाजौ यज्ञाङ्गे ' इति कुत्वाभावः । स्विष्टं करोतीति स्विष्टकृत् । इडा प्रसिद्धा । एतानाश्रित्य आशिषः आशासनीयानि फलानि । ' आशासः कौ ' इतीत्वम् । सुवः स्वर्गं च आवृञ्जे आवृञ्जामि । स्वर्गस्य प्राधान्यात्पुनरुपादानम् यथा—' ब्राह्मणा आयाता वसिष्ठोप्यायातः ' इति ॥

[6]अथ षष्ठी—अग्निनेति ॥ पुरस्ताज्ज्योतिर्जगती; प्रथमस्याष्टाक्षरत्वात् । अहमादिश्चतुर्थः पादः । अग्न्यादिदिः हविर्भाग्भिः देवताभिः याज्यानुवाक्याभ्यां च हविषां विधिप्रधानाभ्यां च त्वदर्थमहमुपह्वे उपजुहोमि । हे सव! पूर्ववच्छपो लुक् । ततश्च

हं यज्ञमा दंदे ते वषट्कृतम् । स्तु-
तꣳ शस्त्रं प्रतिगरं ग्रहमिडामाशिषः
॥३१॥ आ वृञ्जे सुवः । पत्नीसंया-
जानुप ते हुवे सवाहꣳ समिष्टयजुरा
दंदे तव । पशून्थ्सुतं पुरोडाशान्त्स-

ते । वषट्कृतमिति वषट्-कृतम् । [7]स्तुतम् । शस्त्रम् । प्रतिगरमिति प्रति-गरम् । ग्रहम् । इडाम् । आशिष इत्या-शिषः ॥ ३१ ॥ एति । वृञ्जे । सुवः । पत्नीसंयाजानिति पत्नी-संयाजान् । उपेति । ते । हुवे । सव । अहम् । समिष्टयजुरिति समिष्ट-यजुः । एति । ददे । तव । [8]पशून् । सुतम् ।

यज्ञं वषट्कृतं कृतवषट्कारं विलक्षणं ते त्वत्प्रसादात् अहं आददे उत्पादयामि । वषट्छब्दस्यौर्यादित्वेन गतित्वात् 'गतिरनन्तरः' इति गतेः स्वरः ॥

[7]अथ सप्तमी—स्तुतमित्यादि ॥ इयमपि पुरस्ताज्ज्योतिर्जगती। पूर्ववत् अहमादिश्चतुर्थः पादः । स्तुतं स्तोत्रं तदादीनि इडान्तानि आवृञ्जे आकर्षामि । ततः एतैः आशिषः स्वर्गं च आवृञ्जे । किं च पत्नीसंयाजान् ते त्वदर्थं अहं उपहुवे उपजुहोमि । हे सव! किं च त्वदर्थं समिष्टयजुः आददे निर्वर्तयामि ॥

[8]अथाष्टमी—पशूनिति ॥ अस्तारपङ्क्तिः; प्रथमयोरष्टाक्षरत्वात्। उक्तः सामान्येन यज्ञः, अधुना तद्विशेषा उच्यन्ते—पशून्

वनान्योत यज्ञम् । देवान्थ्सेन्द्रानुप
ते हुवे सवाहमग्निमुखान्थ्सोमवतो
ये च विश्वे ॥ ३२ ॥
भूतं भव्यं भविष्यद्वषट्थ्स्वाहा नम
ऋक्साम यजुर्वषट्थ्स्वाहा नमो

पुरोडाशान् । सवनानि । एति । उत । यज्ञम् । देवान् । सेन्द्रानिति स–इन्द्रान् । उपेति । ते । हुवे । सव । अहम् । अग्निमुखानित्यग्नि–मुखान् । सोमवत इति सोम–वतः । ये । च । विश्वे ॥ ३२ ॥

उप ग्रहामिडामाशिषो द्वात्रिंशच्च ॥ ११ ॥

[1]भूतम् । भव्यम् । भविष्यत् । वषट् । स्वाहा । नमः । ऋक् । साम । यजुः । वषट् । स्वाहा । नमः । गायत्री । त्रिष्टुप् । जगती । वषट् । स्वा-

अग्नीषोमीयादीन् सुतं सोमं पुरोडाशान् सवनीयान् सवनानि प्रातस्सवनादीनि उत अपि च यज्ञं देवांश्च सेन्द्रान् ते त्वदर्थं उपहुवे तव समीपे आह्वयामि । हे सव! अग्निमुखान् देवान् सोमवतश्च ये च विश्वे देवाः तांश्चाहमाह्वयामि ॥

इति सप्तमे तृतीये एकादशोनुवाकः.

---

[1]अथ पर्याप्तीर्जुहोति—भूतमित्यादि ॥ वषट् स्वाहा नम इति ब्रह्मणो नामानि । एतैश्च भूतानां सत्वत्वमाख्यायते । एतानि

गायत्री त्रिष्टुब्जगती वषट्थ्स्वाहा
नमः पृथिव्यन्तरिक्षं द्यौर्वषट्थ्स्वा-
हा नमोग्निर्वायुस्सूर्यो वषट्थ्स्वाहा
नमः प्राणो व्यानोपानो वषट्थ्स्वा-
हा नमोन्नं कृषिर्वृष्टिर्वषट्थ्स्वाहा
नमः पिता पुत्रः पौत्रो वषट्थ्स्वाहा
नमो भूर्भुवस्सुवर्वषट्थ्स्वाहा नमः॥

हा । नमः । पृथिवी । अन्तरिक्षम् । द्यौः । वषट् । स्वाहा । नमः । अग्निः । वायुः । सूर्यः । वषट् । स्वाहा । नमः । प्राण इति प्र—अनः । व्यान इति वि—अनः । अपान इत्यप—अनः । वषट् । स्वाहा । नमः । अन्नम् । कृषिः । वृष्टिः । वषट् । स्वाहा । नमः । पिता । पुत्रः । पौत्रः । वषट् । स्वाहा । नमः । भूः । भुवः । सुवः । वषट् । स्वाहा । नमः ॥ ३३ ॥

भुवश्चत्वारि च ॥ १२ ॥

---

सत्यानीत्यर्थः । एतेभ्यः सत्येभ्यः स्वाहेति शेषः । सत्यविशेषाणां भूतादीनां वाचकविशेषा वषडादयः । विलक्षणवाचकाभिसंबन्धेन च एतेषां वैलक्षण्यं व्याख्यायते* । सर्वे निगदसिद्धाः । कालवेदच्छन्दोलोकदेवताप्राणजीवनात्मव्याहृतयः क्रमेण सत्याः प्रतिपाद्यन्ते ॥

इति सप्तमे तृतीये द्वादशोनुवाकः.

---

*व्याख्यास्यते.

आ मे गृहा भवन्त्वा प्रजा म आ
मा यज्ञो विशतु वीर्यावान् । आपो
देवीर्यज्ञिया माऽऽविशन्तु सहस्रस्य
मा भूमा मा प्र हासीत् । आ मे

[1]एति । मे । गृहाः । भवन्तु । एति । प्रजेति प्र-जा । मे । एति । मा । यज्ञः । विशतु । वीर्यावानिति वीर्य-वान् । आपः । देवीः । यज्ञियाः । मा । एति । विशन्तु । सहस्रस्य । मा । भूमा । मा । प्रेति । हासीत् । [2]एति । मे । ग्रहः । भवतु । एति । पुरोरुगिति पुरः-रुक् । स्तुतशस्त्रे

---

[1]अथ आभूतीर्जुहोति—आ मे गृहा इत्यादि ॥ तिस्रस्त्रिष्टुभः जगती प्रथमा । मे मम गृहाः आभवन्तु आभिमुख्येन मम भवन्तु मां प्राप्नुवन्तु । प्रजा च मे आभवतु आभिमुख्येन जायताम् । यज्ञो मां आविशतु वीर्यवान् फलदानसमर्थशक्तिमान् । 'अन्येषाम्,' इति दीर्घत्वम् । आपश्च देव्यः यज्ञिया यज्ञसंपादनार्थाः मां विशन्तु । 'यज्ञर्त्विग्भ्यां' इति घः । किं च—सहस्रस्य भूमा सहस्रसंबन्धि यद्बहुतरं सहस्रगृहात् अन्यूनपदपादादेः । स मा कदाचिदपि मा महासीत् मा त्याक्षीत् सहस्रादूनविभूतिः मा कदाचित् भूवम् । 'बहोर्लोपो भूच बहोः' ॥

[2]अथ द्वितीया—आ मे ग्रह इति ॥ ग्रहः ऐन्द्रवायवादिः मम आभवतु । स एवार्थः । पुरोरुक् ग्रहणमन्त्रश्च मामाविशतु ।

ग्रहौ भवत्वा पुरोरुक्स्तुतशस्त्रे माऽऽ-
विशताꣳ समीची । आदित्या
रुद्रा वसवो मे सदस्यांस्सहस्त्रस्य
मा भूमा मा प्र हासीत् । आ माऽग्नि-
ष्टोमो विशतूकथ्यश्चातिरात्रो माऽऽ-
विशत्वापिशर्वरः । तिरोअह्नियां मा

इति स्तुत–शस्त्रे । मा । एति । विशताम् । स-
मीची इति । आदित्याः । रुद्राः । वसवः । मे ।
सदस्याः । सहस्त्रस्य । मा । भूमा । मा । प्रेति ।
हासीत् । [3]एति । मा । अग्निष्टोम इत्यग्नि–स्तोमः ।
विशतु । उक्थ्यः । च । अतिरात्र इत्यति–रात्रः ।
मा । एति । विशतु । आपिशर्वर इत्यापि–शर्व-

---

स्तुतशस्त्रे च मामाविशताम् । समीची सम्यङ्निर्वृत्ते । सम्यादेशस्य 'चौ' इति दीर्घत्वम्, 'नपुंसकाच्च' इति शिः । आदित्यादयश्च मे मम सदस्या भवन्तु नित्यं यष्टा भूयासमित्यर्थः। यद्वा—आदित्यादयस्सर्वेऽपि मामाविशन्तु । सहस्रस्येत्यादि । गतम् ॥

[3]तृतीया—अग्निष्टोमो मामाविशतु । उक्थ्यश्च अतिरात्रश्च मामाविशत्वेव । अतिरात्रो विशेष्यते—आपिशर्वरः । अपिशर्वरी रात्रिपर्यायः, समुच्चितरात्रिपर्यायो वा । स्वार्थिकोण् । ति-

सुहुता आ विशन्तु सहस्रस्य मा भूमा मा प्र हासीत् ॥ ३४ ॥
अग्निना तपोऽन्वभवद्वाचा ब्रह्म मणिना रूपाणीन्द्रेण देवान् वातेन प्राणान्त्सूर्येण द्यां चन्द्रमसा नक्ष-

रः । तिरोअह्निया इति तिरः–अह्नियाः । मा । सुहुता इति सु–हुताः । एति । विशन्तु । सहस्रस्य । मा । भूमा । मा । प्रेति । हासीत् ॥ ३४ ॥

अग्निष्टोमो विंशत्यष्टादश च ॥ १३ ॥

[1]अग्निना । तपः । अन्विति । अभवत् । वाचा । ब्रह्म । मणिना । रूपाणि । इन्द्रेण । देवान् । वातेन । प्राणानिति प्र–अनान् । सूर्येण । द्याम् ।

---

रोअह्निया रात्रिः सा मामाविशतु । सुहुताः सुष्ठु हुताः । अह्नः तिरोहिताः तिरोअह्नियाः । 'अह्नोह्नः एतेभ्यः' इत्यह्नादेशः, स्वार्थिको यत् । सहस्रस्येत्यादि । गतम् ॥

इति सप्तमे तृतीये त्रयोदशोऽनुवाकः.

---

[1]अथानुभूतीर्जुहोति—अग्निनेत्यादि ॥ अग्निना तपः ऊष्म अन्वभवत् अनुभवतु स्वीकरोतु यजमानः अग्न्यात्मा भूत्वा स्व-

त्राणि यमेन पितॄन्राज्ञा मनुष्यान्फ़लेन नादेयानजगरेण सर्पान्व्याघ्रेणाऽऽरण्यान्पशूञ्छ्येनेन पतत्रिणो वृष्णाऽश्वानृषभेण गा बस्तेनाजा वृष्णिनाऽवीर्व्रीहिणाऽन्नानि यवेनौषधीर्न्यग्रोधेन वनस्पतीनुदुम्बरेणोर्जं गायत्रिया छन्दाꣳसि त्रिवृता स्तोमान्ब्राह्मणेन वाचम् ॥ ३५ ॥

चन्द्रमसा । नक्षत्राणि । यमेन । पितॄन् । राज्ञा । मनुष्यान् । फ़लेन । नादेयान् । अजगरेण । सर्पान् । व्याघ्रेण । आरण्यान् । पशून् । श्येनेन । पतत्रिणः । वृष्णा । अश्वान् । ऋषभेण । गाः । बस्तेन । अजाः । वृष्णिना । अवीः । व्रीहिणा । अन्नानि । यवेन । ओषधीः । न्यग्रोधेन । वनस्पतीन् । उदुम्बरेण । ऊर्जम् । गायत्रिया । छन्दाꣳसि । त्रिवृतेति त्रि–वृता । स्तोमान् । ब्राह्मणेन । वाचम् ॥ ३५ ॥

ब्राह्मणेनैकं च ॥ १४ ॥

---

सामर्थ्येन सर्वं तपो व्याप्नोतु । वाग्रूपो भूत्वा सर्वं ब्रह्म मन्त्रजातं अन्वभवदित्येव । एवं सर्वत्र । छान्दसो लङ् । मणिना

स्वाहाऽऽधिमाधीताय स्वाहा स्वाहाऽऽधीतं मनसे स्वाहा स्वाहा मनः प्रजापतये स्वाहा काय स्वाहा कस्मै स्वाहा कतमस्मै स्वाहाऽदित्यै स्वाहाऽदित्यै मह्यै स्वाहाऽदित्यै सु-

[1]स्वाहा । आधिमित्या–धिम् । आधीतायेत्या–धीताय । स्वाहा । स्वाहा । आधीतमित्या–धीतम् । मनसे । स्वाहा । स्वाहा । मनः । प्रजापतय इति प्रजा–पतये । स्वाहा । काय । स्वाहा । कस्मै । स्वाहा । कतमस्मै । स्वाहा । अदित्यै ।

---

रूपाणि रूपवन्ति । फलेन नादेयान् रसवतोऽर्थान् । नद्यादिभ्यो ढक् । उदुम्बरेण ऊर्जं क्षीरवन्ति वस्तूनि । ब्राह्मणेन वाचं वेदात्मिकाम् ॥

इति सप्तमे तृतीये चतुर्दशोनुवाकः.

---

[1]अथ वैश्वदेवानि जुहोति—स्वाहाधिमित्यादि ॥ अत्र त्रीणि पूर्वाणि दीक्षायां समस्तानि रात्रिहोमेषु । आधीयतेऽनेनेत्याधिः । बुद्धिः । 'उपसर्गे घोः किः' व्यत्ययेन द्वितीया । आधीताय आध्यानाय पर्याप्तो भवतु । ध्यायतेः छान्दसं संप्रसारणम् । किमर्थं अस्थाने इदं स्वाहाकारं करोति! उभयतस्स्वाहाकारा मन्त्राः । यद्वा—प्रथमे स्वाहाकारे जुहोतिः आदानार्थे वर्तते

मृडीकायै स्वाहा सरस्वत्यै स्वाहा सरस्वत्यै बृहत्यै स्वाहा सरस्वत्यै पावकायै स्वाहा पूष्णे स्वाहा पूष्णे प्रपथ्याय स्वाहा पूष्णे नरन्धिषाय स्वाहा त्वष्ट्रे स्वाहा त्वष्ट्रे तुरीपाय

स्वाहा । आदित्यै । मह्यै । स्वाहा । अदित्यै । सुमृडीकाया इति सु-मृडीकायै । स्वाहा । सरस्वत्यै । स्वाहा । सरस्वत्यै । बृहत्यै । स्वाहा । सरस्वत्यै । पावकायै । स्वाहा । पूष्णे । स्वाहा । पूष्णे । प्रपथ्यायेति प्र-पत्थ्याय । स्वाहा । पूष्णे । नरन्धिषाय । स्वाहा । त्वष्ट्रे । स्वाहा । त्वष्ट्रे । तु-

---

सुष्ठु आददे इति । तेन कर्मण्येव द्वितीया । अयमर्थः— आधिं स्वाहा जुहोमि आधीतार्थं आधीतस्य सिद्ध्यै । जुहोतेः शपो लुक्, मिपो ढादेशः, 'गतिर्गतौ' इति निघातः, गतिना च समासः । व्युत्पत्त्यनवधारणादनवग्रहः । द्वितीयस्वाहाकारः प्रदानार्थः । एवं सर्वत्र । आधीतं आध्यातं मनसे पर्याप्तं भवतु । मनश्च प्रजापतये यजमानाय वा पर्याप्तं भवतु। काय प्रजापतये । संज्ञात्वात्सर्वनामत्वाभावः । कस्मै अज्ञातस्वरूपाय । सार्वात्म्यात् सर्वनामत्वम् । कतमस्मै अनिर्धारितविशेषात्मने । अदित्यै पृथिव्यै देवमात्रे वा । मह्यै महत्यै सुमृडीकायै सुसुखायै सुष्ठु वा सुखयित्र्यै । पावकायै शोधयित्र्यै

स्वाहा त्वष्ट्रे पुरुरूपाय स्वाहा वि-
ष्णवे स्वाहा विष्णवे निखुर्यपाय
स्वाहा विष्णवे निभूयपाय स्वाहा
सर्वस्मै स्वाहा ॥ ३६॥

रीपाय । स्वाहा । त्वष्ट्रे । पुरुरूपायेति पुरु-रूपा-य । स्वाहा । विष्णवे । स्वाहा । विष्णवे । निखु-र्यपायेति निखुर्य-पाय । स्वाहा । विष्णवे । निभू-यपायेति निभूय-पाय । स्वाहा । सर्वस्मै । स्वा-हा ॥ ३६ ॥

पुरुरूपाय स्वाहा दर्श च ॥ १५ ॥

'पावकादीनां छन्दसि' इतीत्वाभावः । पूष्णे । उदात्तनिवृत्ति-स्वरेण विभक्तिरुदात्ता । प्रपथ्याय प्रकृष्टः पन्थाः प्रपथः त-स्मै हिताय । तत्र भवाय वा । नरन्धिषाय नराणां धार-यित्रे । दधातेः छान्दसः खच्, भष्भावश्च । पूर्वपदान्तोदात्तत्वं च । तुरीपाय तूर्णमाप्नुवते । पृषोदरादिः । पुरुरूपाय । 'परादिश्छन्दसि' इत्युत्तरपदाद्युदात्तत्वम् । निखुर्यपाय खुरच्छेदने नियमेन पापरोगादिभिः बाध्यमानानां जनानां पात्रे । छान्दसः क्यप् । निभूयपाय न्यग्भवनीयाः कर्मभिः निभूयाः तेषां पात्रे । पूर्ववत्क्यप् । गतमन्यत् ॥

इति सप्तमे तृतीये पञ्चदशोनुवाकः.

दुद्भ्यस्स्वाहा हनूभ्याꣳ स्वाहोष्ठाभ्याꣳ स्वाहा मुखाय स्वाहा नासिकाभ्याꣳ स्वाहाऽक्षीभ्याꣳ स्वाहा कर्णाभ्याꣳ स्वाहा पार इक्षवोऽवार्येभ्यः पक्ष्मभ्यस्स्वाहाऽवार इक्षवः पार्येभ्यः पक्ष्मभ्यस्स्वाहा शीर्ष्णे स्वाहा भ्रूभ्याꣳ स्वाहा लला-

[1]दुद्भ्य इति दत्–भ्यः। स्वाहा । हनूभ्यामिति हनु–भ्याम्। स्वाहा । ओष्ठाभ्याम् । स्वाहा । मुखाय। स्वाहा। नासिकाभ्याम् । स्वाहा । अक्षीभ्याम्। स्वाहा। कर्णाभ्याम्। स्वाहा । पारे । इक्षवः। अवार्येभ्यः। पक्ष्मभ्य इति पक्ष्म–भ्यः। स्वाहा। अवारे। इक्षवः। पार्येभ्यः। पक्ष्मभ्य इति पक्ष्म–भ्यः। स्वाहा। शीर्ष्णे। स्वाहा । भ्रूभ्याम् ।

---

[1]अथाश्वस्याङ्गानि जुहोति—दद्भ्यः स्वाहेत्यादि ॥ 'पद्दन्' इत्यादिना दद्भावः, 'ऊडिदम्' इत्यादिना विभक्तेरुदात्तत्वम् । हनूभ्यां, स्वाङ्गदीर्घत्वम् । अक्षीभ्याम् । 'ईच द्विवचने' इतीकारः स चोदात्तः । पार इक्षव इत्यादि । इक्षवः अक्षिरोमाणि पारे अक्ष्युपरिपुटे ये इक्षवः ते अवार्येभ्यः अधराक्षिपुटस्थेभ्यः पक्ष्मरोमभ्यः प्रवर्तन्ते तदर्थं तानि वा अपेक्ष्येत्यर्थः ।

टाय स्वाहा मूर्ध्ने स्वाहा मस्तिष्काय स्वाहा केशेभ्यस्स्वाहा वहाय स्वाहा ग्रीवाभ्यस्स्वाहा स्कन्धेभ्यस्स्वाहा कीकसाभ्यस्स्वाहा पृष्टीभ्यस्स्वाहा पाजस्याय स्वाहा पार्श्वाभ्याꣳ स्वाहा ॥३७॥ अꣳसाभ्याꣳ स्वाहा दोषभ्याꣳ स्वाहा बाहुभ्याꣳ

स्वाहा । ललाटाय । स्वाहा । मूर्ध्ने । स्वाहा । मस्तिष्काय । स्वाहा । केशेभ्यः । स्वाहा । वहाय । स्वाहा । ग्रीवाभ्यः । स्वाहा । स्कन्धेभ्यः । स्वाहा । कीकसाभ्यः । स्वाहा । पृष्टीभ्य इति पृष्टि-भ्यः । स्वाहा । पाजस्याय । स्वाहा । पार्श्वाभ्याम् । स्वाहा ॥३७॥ अꣳसाभ्याम् । स्वाहा । दोषभ्यामिति दोष-भ्याम् । स्वाहा । बाहुभ्यामिति बाहु-भ्याम् ।

तेभ्यः स्वाहेति । एवं अधरे अधरपुटे ये इक्षवः ते पार्येभ्यः उत्तराक्षिपुटस्थेभ्यः पक्ष्मरोमभ्यः प्रवर्तन्ते तदर्थं तानि वा अपेक्ष्य तेभ्यः स्वाहेति । एवं परस्परोपकारित्वमुभयेषां पक्ष्मणामुक्तम्, पक्ष्मनिमित्तत्वादक्ष्णोरीक्षणसामर्थ्यस्य । उभयत्रापि दिगादित्वाद्यत् । द्वितीये व्यत्ययेन 'यतोऽनावः' इत्याद्युदात्तत्वाभावः । शीर्ष्णे उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वम् । भ्रूभ्याम् । उक्तं विभ-

स्वाहा जङ्घाभ्याꣳ स्वाहा श्रोणी-
भ्याꣳ स्वाहोरुभ्याꣳ स्वाहाऽष्ठीव-
द्भ्याꣳ स्वाहा जङ्घाभ्याꣳ स्वाहा
भसदे स्वाहा शिखण्डेभ्यस्स्वाहा वा-
लधानाय स्वाहाऽण्डाभ्याꣳ स्वाहा
शेपाय स्वाहा रेतसे स्वाहा प्रजा-
भ्यस्स्वाहा प्रजननाय स्वाहा पद्भ्य-

स्वाहा । जङ्घाभ्याम् । स्वाहा । श्रोणीभ्यामिति श्रोणि-भ्याम् । स्वाहा । ऊरुभ्यामित्यूरु-भ्याम् । स्वाहा । अष्ठीवद्भ्यामित्यष्ठीवत्-भ्याम् । स्वाहा । जङ्घाभ्याम् । स्वाहा । भसदे । स्वाहा । शिखण्डेभ्यः । स्वाहा । वालधानायेति वाल-धानाय । स्वाहा । अण्डाभ्याम् । स्वाहा । शेपाय । स्वाहा । रेतसे । स्वाहा । प्रजाभ्य इति प्र-जाभ्यः । स्वाहा । प्रजननायेति प्र-जननाय । स्वाहा । पद्भ्य इति पत्-भ्यः । स्वाहा । शफेभ्यः । स्वाहा ।

---

क्त्युदात्तत्वं 'सावेकाचः' इति । मूर्ध्ने । पूर्ववदुदात्तनिवृत्तिस्वरत्वम् । मस्तिष्काय शिरोमांसाय । वहाय वहनदेशाय । ग्रीवाभ्यः धमनीभ्यः । कीकसाभ्यः ग्रीवाया आरभ्य पृष्ठवंशास्थिगुळिकाभ्यः । पृष्टीभ्यः हस्तयोरुपरि पृष्ठवंशस्योभयतः

स्स्वाहा शफेभ्यस्स्वाहा लोमभ्यस्स्वाहा त्वचे स्वाहा लोहिताय स्वाहा माꣳसाय स्वाहा स्नावभ्यस्स्वाहाऽस्थभ्यस्स्वाहा मज्जभ्यस्स्वाहाऽङ्गेभ्यस्स्वाहाऽऽत्मने स्वाहा सर्वस्मै स्वाहा ॥ ३८ ॥

लोमभ्य इति लोम–भ्यः । स्वाहा । त्वचे । स्वाहा । लोहिताय । स्वाहा । माꣳसाय । स्वाहा । स्नावभ्य इति स्नाव–भ्यः । स्वाहा । अस्थभ्य इत्यस्थ–भ्यः । स्वाहा । मज्जभ्य इति मज्ज–भ्यः । स्वाहा । अङ्गेभ्यः । स्वाहा । आत्मने । स्वाहा । सर्वस्मै । स्वाहा ॥ ३८ ॥

पार्श्वाभ्याꣳस्वाहा मज्जभ्यस्स्वाहा षट् ॥ १६ ॥

---

स्थितानि अस्थीनि पृष्टयः । सांहितिकं दीर्घत्वं छान्दसम् । पाजस्याय पाजो बलं तत्र भवाय हृदयाय । दोषाभ्याम् । 'पद्दन्' इत्यादिना दोषन्भावः । जङ्घाभ्यां श्रोणीभ्यां छान्दसं संहितायां दीर्घत्वम् । जङ्घाभ्यामपराभ्याम् । भसदे अपानप्रदेशाय । शिखण्डेभ्यः चूडेभ्यः । वालधानाय पुच्छाय । अण्डाभ्याम् । प्रजननाय शफस्यैवैकदेशाय । पद्भ्यः पूर्ववत् पद्भावस्स्वरश्च ॥

इति सप्तमे तृतीये षोडशोनुवाकः.

अ॒ञ्ज्ये॑ता॒य॒ स्वाहा॑ऽञ्जिस॒क्था॒य॒ स्वा-
हा॑ शि॒ति॒प॒दे॒ स्वाहा॑ शि॒तिक॑कु॒दे॒ स्वा-
हा॑ शि॒ति॒रन्ध्रा॑य॒ स्वाहा॑ शिति॒पृ॒ष्ठा-
य॒ स्वाहा॑ शि॒त्यꣳसा॑य॒ स्वाहा॑ पु॒ष्प॒-
कर्णा॑य॒ स्वाहा॑ शि॒त्यो॑ष्ठा॑य॒ स्वाहा॑

[1]अ॒ञ्ज्ये॒ता॒येत्य॑ञ्जि–ए॒ता॒यं । स्वाहा॑ । अ॒ञ्जि॒स॒-क्था॒येत्य॑ञ्जि–स॒क्था॒यं । स्वाहा॑ । शि॒ति॒प॒द इति॑ शि॒ति–प॒दे । स्वाहा॑ । शि॒तिक॑कु॒द इति॑ शि॒ति–क॒कु॒दे । स्वाहा॑ । शि॒ति॒रन्ध्रा॒येति॑ शि॒ति–रन्ध्रा॑य । स्वाहा॑ । शि॒ति॒पृ॒ष्ठा॒येति॑ शि॒ति–पृ॒ष्ठा॒यं । स्वाहा॑ । शि॒त्यꣳसा॒येति॑ शि॒ति–अꣳसा॑य । स्वाहा॑ । पु॒ष्प॒-क॒र्णा॒येति॑ पु॒ष्प–कर्णा॑य । स्वाहा॑ । शि॒त्यो॒ष्ठा॒येति॑ शि॒ति–ओ॒ष्ठा॑य । स्वाहा॑ । शि॒ति॒भ्र॒व॒ इति॑ शि॒ति–

[1]अथाश्वरूपाणि जुहोति—अञ्ज्येतायेत्यादि ॥ अञ्ज्येताय केचिदाहुः—अञ्जिः शुक्लः एतः सन्ध्यावर्ण इति । अन्ये आहुः—आञ्जिः कृष्णः एतः शुक्लः इति । अञ्जिश्चासौ एतश्च अञ्ज्येतः । 'वर्णो वर्णेन' इति समासः, 'वर्णो वर्णेषु' इति पूर्वपदप्रकृतिस्वरत्वस्य 'अनेतः' इति पर्युदासात् । समासान्तोदात्तत्वमेव भवति । अञ्जिसक्थाय शुक्लसक्थाय । ऊरुमूलस्थानि अस्थीनि सक्थीनि । 'बहुव्रीहौ सक्थ्यक्ष्णोः' इति षच्, 'सक्थं चाक्रान्तात्' इत्युत्तरपदान्तोदात्तत्वम् । शितिपदे

शितिभ्रवे स्वाहा शितिभसदे स्वाहा श्वेतानूकाशाय स्वाहाऽञ्जये स्वाहा ललामाय स्वाहाऽसितज्ञवे स्वाहा कृष्णैताय स्वाहा रोहितैताय स्वाहाऽरुणैताय स्वाहेदृशाय स्वाहा

भ्रवे । स्वाहा । शितिभसद इति शिति भसदे । स्वाहा । श्वेतानूकाशायेति श्वेत-अनूकाशाय । स्वाहा । अञ्जये । स्वाहा । ललामाय । स्वाहा । असितज्ञव इत्यसित-ज्ञवे । स्वाहा । कृष्णैतायेति कृष्ण-एताय । स्वाहा । रोहितैतायेति रोहित-एताय । स्वाहा । अरुणैतायेत्यरुण-एताय । स्वाहा । ईदृशाय । स्वाहा । कीदृशाय । स्वाहा । ता-

---

शुक्लपादाय 'पादस्य लोपः' इति लोपः समासान्तः, 'पादः पत्' इति पद्भावः, 'शितेर्नित्या बह्वच्' इत्युत्तरपदप्रकृतिस्वरत्वम् । शितिककुदे शुक्लककुदाय । ककुदस्यावस्थायां लोपः । कदाचित् बह्वच्त्वान् शितिस्वराभावः । शितिरन्ध्रादिषु स एव च स्वरः प्रवर्तते । पुष्पकर्णाय पुष्पाकारलक्षणं कर्णयोर्यस्य । 'कर्णो वर्णलक्षणात्' इत्युत्तरपदाद्युदात्तत्वम् । शितिभसदे । भसत् अपानप्रदेशः, 'अभसत्' इति पर्युदासात् शितिस्वराभावः । श्वेतानूकाय श्वेताक्षायेति केचित् । श्वेतशरीरप्रकाशायेत्यन्ये । अञ्जये सर्वशुक्लाय । ललामाय ललामवते । असितज्ञवे, छा-

कीदृशाय स्वाहा तादृशाय स्वाहा
सदृशाय स्वाहा विसदृशाय स्वाहा
सुसदृशाय स्वाहा रूपाय स्वाहा स-
र्वस्मै स्वाहा ॥ ३१ ॥

कृष्णाय स्वाहा श्वेताय स्वाहा पि-

दृशाय । स्वाहा । सदृशाय । स्वाहा । विसदृशायेति वि—सदृशाय । स्वाहा । सुसदृशायेति सु—सदृशाय । स्वाहा । रूपाय । स्वाहा । सर्वस्मै । स्वाहा ॥ ३१ ॥

रूपाय स्वाहा द्वे च ॥ १७ ॥

[1]कृष्णाय । स्वाहा । श्वेताय । स्वाहा । पिश-

---

न्दसो ह्युभावो जानुनः । कृष्णैताय कृष्णश्चासावेतश्च, स्वर-समासौ पूर्ववेव । एवमुत्तरयोरपि लोहितः शुक्लाधिको रक्तः । ईदृशाय इदमिव पश्यत्यात्मानमिति 'त्यदादिषु दृशः' इति कन्प्रत्ययः, 'इदंकिमोरीश्की' । एवं कीदृशाय । सदृशाय 'समानान्ययोश्च' इति कन् । योगविभागात् अन्यत्रापीष्यते इति समानस्य सभावः । रूपाय रूपमात्राय । सर्वस्मै अनुक्तायापि ॥

इति सप्तमे तृतीये सप्तदशोनुवाकः.

---

[1]पुनरप्यश्वरूपाणि जुहोति—कृष्णायेति ॥ अवयवरूपाणि प्रायशः

शङ्गाय स्वाहा सारङ्गाय स्वाहाऽरु-
णाय स्वाहा गौराय स्वाहा बभ्रवे
स्वाहा नकुलाय स्वाहा रोहिताय
स्वाहा शोणाय स्वाहा श्यावाय
स्वाहा श्यामाय स्वाहा पाकलाय
स्वाहा सुरूपाय स्वाहाऽनुरूपाय
स्वाहा विरूपाय स्वाहा सरूपाय

ङ्गाय। स्वाहा। सारङ्गाय। स्वाहा। अरुणाय। स्वाहा। गौराय। स्वाहा। बभ्रवे। स्वाहा। नकुलाय। स्वाहा। रोहिताय। स्वाहा। शोणाय। स्वाहा। श्यावाय। स्वाहा। श्यामाय। स्वाहा। पाकलाय। स्वाहा। सुरूपायेति सु-रूपाय। स्वाहा। अनुरूपायेत्यनु-रूपाय। स्वाहा। विरूपायेति वि-रूपाय। स्वाहा। सरूपायेति स-रूपाय। स्वाहा। प्रतिरू-

पूर्वत्र, इह तु अवयविरूपाणीति पृथगारम्भः। कृष्णादयः प्रसिद्धाः। पिशङ्गाय गोरोचनवर्णाय। सारङ्गाय चातकवर्णाय। अरुणाय अरुणवर्णाय। गौराय शुक्लाय। बभ्रवे कपिलपाण्डराय। नकुलाय नकुलवर्णाय। रोहिताय लोहितवर्णाय। अतिरक्ताय। शोणाय पीतलोहिताय। श्यावाय पीतकृष्णाय। श्यामाय नीलाय। पाकलाय अव्यक्तकृष्णा[illegible] [illegible]कृष्णा[illegible]-

स्वाहा प्रतिरूपाय स्वाहा शबलाय
स्वाहा कमलाय स्वाहा पृश्नये स्वाहा
पृश्निसक्थाय स्वाहा सर्वस्मै स्वा-
हा ॥ ४० ॥
ओषधीभ्यस्स्वाहा मूलेभ्यस्स्वाहा
तूलेभ्यस्स्वाहा काण्डेभ्यस्स्वाहा व-

पायेति प्रति-रूपाय । स्वाहा । शबलाय । स्वाहा । कमलाय । स्वाहा । पृश्नये । स्वाहा । पृश्निसक्थायेति पृश्नि-सक्थाय । स्वाहा । सर्वस्मै । स्वाहा ॥ ४० ॥

कृष्णाय षट्चत्वारिंशत् ॥ १८ ॥

[1]ओषधीभ्य इत्योषधि-भ्यः । स्वाहा । मूलेभ्यः । स्वाहा । तूलेभ्यः । स्वाहा । काण्डेभ्यः ।

र्णायेति केचित् । सुरूपाय शोभनरूपाय । शबलाय व्यामिश्ररूपाय । कमलाय कमलवर्णाय । पृश्नये चित्रवर्णाय । पृश्निसक्थाय, उक्तौ स्वरसमासान्तौ । सर्वस्मै अनुक्तायापि रूपाय ॥

इति सप्तमे तृतीये अष्टादशोनुवाकः.

[1]अथ ओषधिहोमाः—ओषधीभ्य इत्याद्याः ॥ ओषधीभ्यः फलपाकावसानाभ्यः । 'ओषधेश्च विभक्तावप्रथमायाम्' इति दी-

ल्शेभ्यस्स्वाहा पुष्पेभ्यस्स्वाहा फ-
लेभ्यस्स्वाहा गृहीतेभ्यस्स्वाहाऽगृ-
हीतेभ्यस्स्वाहाऽवंपन्नेभ्यस्स्वाहा श-
यानेभ्यस्स्वाहा सर्वस्मै स्वाहा॥४१॥
वनस्पतिभ्यस्स्वाहा मूलेभ्यस्स्वाहा

स्वाहा । वल्शेभ्यः । स्वाहा । पुष्पेभ्यः । स्वाहा । फलेभ्यः । स्वाहा । गृहीतेभ्यः । स्वाहा । अगृहीतेभ्यः । स्वाहा । अवपन्नेभ्य इत्यव–पन्नेभ्यः । स्वाहा । शयानेभ्यः । स्वाहा । सर्वस्मै । स्वाहा॥४१॥

ओषधीभ्यश्चतुर्विंꣳशतिः ॥ १९ ॥

[1]वनस्पतिभ्य इति वनस्पति–भ्यः । स्वाहा । मूलेभ्यः । स्वाहा । तूलेभ्यः । स्वाहा । स्कन्धोभ्य

---

धैत्वम् । मूलानि प्रसिद्धानि । तूलेभ्यः अग्रेभ्यः । वल्शेभ्यः प्ररोहेभ्यः । गृहीतेभ्यः प्राणिभिरुपयुक्तेभ्यः पुष्पफलेभ्यः । अगृहीतेभ्यः स्वयंनिपतितेभ्यः । अवपन्नेभ्यः विपन्नेभ्यः । शयानेभ्यः स्तम्बशुष्केभ्यः ॥

इति सप्तमे तृतीये एकोनविंशोनुवाकः.

---

[1]अथ वनस्पतिहोमाः—वनस्पतिभ्य इत्याद्याः ॥ वनस्पतयः फलिनः, उपलक्षणत्वात् सर्वेऽपि शाखिनो गृह्यन्ते, पारस्करादि-

तू॒लेभ्य॒स्स्वाहा॒ स्कन्धो॑भ्य॒स्स्वाहा॒ शा-
खाभ्य॒स्स्वाहा॑ प॒र्णेभ्य॒स्स्वाहा॒ पु॒ष्पे-
भ्य॒स्स्वाहा॒ फ॒लेभ्य॒स्स्वाहा॑ गृ॒ही॒तेभ्य॒-
स्स्वाहा ऽगृ॑ही॒तेभ्य॒स्स्वाहा॒ऽव॑पन्नेभ्य॒-
स्स्वाहा॒ श॒याने॑भ्य॒स्स्वाहा॑ शि॒ष्टाय॒
स्वाहा॒ऽति॑शिष्टाय॒ स्वाहा॒ परि॑शि-

इति॒ स्कन्धः-भ्य॒ः । स्वाहा॑ । शाखाभ्यः । स्वा-
हा॑ । प॒र्णेभ्य॑ः । स्वाहा॑ । पु॒ष्पेभ्यः । स्वाहा॑ ।
फ॒लेभ्यः । स्वाहा॑ । गृ॒ही॒तेभ्य॑ः । स्वाहा॑ । अगृ॑ही-
तेभ्यः । स्वाहा॑ । अव॑पन्नेभ्य॒ इत्यव॑-प॒न्ने॒भ्य॒ः । स्वा-
हा॑ । श॒याने॑भ्यः । स्वाहा॑ । शि॒ष्टाय॑ । स्वाहा॑ ।
अति॑शि॒ष्टायेत्यति॑-शि॒ष्टाय॒ । स्वाहा॑ । परि॑शि॒ष्टा-
येति॒ परि॑-शि॒ष्टाय॒ । स्वाहा॑ । सꣳशि॑ष्टायेति॒ सं-
शि॒ष्टाय॒ । स्वाहा॑ । उच्छि॑ष्टायेत्युत्-शि॒ष्टाय॒ ।
स्वाहा॑ । रि॒क्ताय॑ । स्वाहा॑ । अरि॑क्ताय । स्वाहा॑ ।

---

त्वात्सुट्, 'उभे वनस्पत्यादिषु युगपत्' इति पूर्वोत्तरयोर्युगपत्प्रकृतिस्वरत्वम् । स्कन्धोभ्यः । वर्णव्यत्ययः, सकारान्त एव वा । गृहीतादीनि व्याख्यातानि* । शिष्टाय क्रियासूपयुक्ताय । अतिशिष्टाय उपयुज्य स्थापितैकदेशाय । परिशिष्टाय उपयोगातिरि-

---

*सं. ७-३-१९.

ष्टाय स्वाहा सꣳशिष्टाय स्वाहोच्छि-
ष्टाय स्वाहा रिक्ताय स्वाहाऽरिक्ताय
स्वाहा प्ररिक्ताय स्वाहा सꣳरिक्ता-

प्ररिक्तायेति प्र-रिक्ताय । स्वाहा । सꣳरिक्तायेति सं-रिक्ताय । स्वाहा । उद्रिक्तायेत्युत्-रिक्ताय । स्वाहा । सर्वस्मै । स्वाहा ॥ ४२ ॥

वनस्पतिभ्यष्षट्चत्वारिꣳशत् ॥२०॥

प्रजवै ब्रह्मवादिनः किमेष वा आप्त आदित्या उभयोः प्रजापतिरन्वायन्निन्द्रो वै सदृङ्ङिन्द्रो वै शिथिलः प्रजापतिरकामयतान्नादस्सा विराडसावादित्योऽर्वाङ्भूतमा मेऽग्निना तपस्स्वाहाऽऽधिदद्भ्योऽर्चेतायं कृष्णायौषधीभ्यो वनस्पतिभ्यो विꣳशतिः ॥ २० ॥

---

क्ताय । संशिष्टाय संपूर्णमुपयुज्य त्यक्ताय । रिक्ताय पुष्पफलैर्वर्जिताय । अतिरिक्ताय अन्यतर*युक्ताय । प्ररिक्ताय पुष्पफलैः सर्वथा वर्जिताय । संरिक्ताय पर्णैश्च वर्जिताय । उद्रिक्ताय सर्वैस्समृद्धाय । अत्र प्रादिसमासे व्यत्ययेन अव्ययपूर्वपदप्रकृतिस्वरत्वम् । गतिसमासे 'गतिरनन्तरः' इति गतेः प्रकृतिस्वरत्वम् ॥

---

*अन्यत्रोप.

य स्वाहोद्रिक्ताय स्वाहा सर्वस्मै
स्वाहा ॥ ४२ ॥

प्रजवं प्रजापतिर्यदछन्दोमं ते हुवे सवाहमोष-
धीभ्यो द्विचत्वारिꣳशत् ॥ ४२ ॥

हरिः ओम्—श्रीकृष्णार्पणमस्तु.

कृष्णयजुर्वेदे सप्तमकाण्डे

तृतीयः प्रश्नस्समाप्तः.

इति भट्टभास्करमिश्रविरचिते ज्ञानयज्ञाख्ये यजुर्वेदभाष्ये
सप्तमे काण्डे तृतीयप्रश्ने विंशोनुवाकः.

समाप्तश्च प्रपाठकः.

4



# शुद्धिपत्रिका.

| पृष्टे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| ७ | ५ | यह्वुव | यह्वुव |
| २१ | ३ | जायांत | जायांता |
| ३६ | १० | पुजा | प्रजा |
| ३७ | १४ | विश्वे ॥ | [3]विश्वे ॥ |
| ३८ | ७ | [8]देवाः । | देवाः । |
| ४५ | १३ | यामः । | यामः । |
| ४६ | ६ | ह्यग्निर्व | ह्यग्निर्वै |
| ५७ | ७ | वद्या | वेद्या |
| ५९ | ६ | द्यथा | द्यथा |
| ८५ | ९ | वर्त्मैवा | वर्त्मैना |
| ९५ | ७ | व– | वि– |
| ९८ | १० | [0]असुराः । | [6]असुराः । |
| १३१ | ६ | साम | साम् |
| १३२ | ११ | नैवा | नैव |
| १७२ | ८ | रथन्त | [4]रथन्त |
| ,, | १३ | [4]तत् । | तत् । |

| पृष्ठे. | पङ्क्तौ. | अशुद्धम्. | शुद्धम्. |
|---|---|---|---|
| १७५ | ७ | ह्रायुः । | वायुः । |
| १७७ | ६ | असृक्षि । | असृक्षि । |
| १८० | १ | रिक्षम् ॥ | रिक्षम् ॥ |
| १८५ | १० | [1]अर्थ । | [11]अर्थ । |
| १८६ | १३ | एनीत्यु | एनीर्त्यु |
| १९३ | ,, | एत् । | ऐत् । |
| २३३ | ,, | द्विव। | द्विवे । |
| २९९ | २ | युक्ते | युङ्क्ते |
| ३०३ | १ | द्वितीये | द्वितीये |
| ३१५ | ४ | येऽन्तरेष्टा | येऽन्तरेऽष्टा |
| ३१६ | ३ | येऽन्तरेष्टा | येऽन्तरेऽष्टा |
| ३३६ | ९ | दृशास्य | दृशाभ्य |
| ३५१ | १ | मेन | मेने |
| ३६४ | ६ | शाति | शोति |
| ३९२ | ,, | अर्वाङ् । | अर्वाङ् । |
| ४०१ | ३ | रुद्रा | रुद्रा |
| ४०९ | ५ | ह्राऽण्डा | ह्राऽऽण्डा |
| ,, | १३ | अण्डाभ्याम् । | आण्डाभ्याम् । |
| ४१५ | १२ | इत्यार्षधि | इत्योर्षधि |

—+‡+—

# भाष्यस्य शुद्धपाठः पाठान्तरं च.

| पृष्ठे. | पङ्क्तौ. | मुद्रितपाठः | शुद्धपाठः, पाठान्तरं च. |
|---|---|---|---|
| ३ | ५ | तेन | तेन च |
| ३० | ९ | वध्यं | वध्यमपि |
| ३४ | १ | परिशेते | पशुवत् शेरते |
| ६१ | ७ | अविज्ञातगर्भस्य(तद्वदस्यापि) | अविज्ञातस्य |
| ६६ | १ | यानि | यानि तु |
| ८६ | ,, | निधनं | ऽन्तो निधनं तं |
| ९५ | ६ | दक्षिणं | दक्षिण- |
| १०१ | ४ | दशयूपा | दश यूपाः |
| ,, | ८ | पटादेः | पटलादेः |
| ११३ | २ | समत्कृत्वहो(?) | समत् कलहः । |
| १२१ | १ | त्व हिंसायां | शॄ हिंसायां |
| १२७ | ३ | ननेन देवा अदभ्रु | अनेन देवा अभव |
| ,, | ७ | पाप्मनाम् । | पाप्मानं |
| १३७ | १ | दयो पक्षयज्ञ | दयः पक्ष |
| १३८ | ,, | खादि | खादिरी |
| १४० | ,, | एकविंशं | तत्र एकविंशं |
| १४५ | ६ | त्वात्तेषामह्ना | त्वात्सर्वेषां साह्नाना |
| १४७ | २ | स्तोत्रस्य* | स्तोत्रस्य* पराक्वावृत्तिभेदेन |
| ,, | ३ | ताश्च दश | ताश्चतुर्दश |
| ,, | ,, | त्तिः, नै | त्तिस्संयुज्यत इति । नै |
| १४८ | ८ | रीयपाठे च | रे |

| पृष्टे. | पङ्क्तौ. | मुद्रितपाठः. | शुद्धपाठः, पाठान्तरं च. |
|---|---|---|---|
| १४८ | ११ | तथा अ | तथा हि |
| १५१ | ६ | दश्वतरो न प्रजायते इति | दात्तरेता हि |
| १५५ | ,, | अश- | अशि- |
| १५६ | १ | नानि | तानि |
| १५८ | ४ | नवत्वा | नवत्वाद्यं |
| ,, | ६ | दशा | दशाक्षरा |
| १६१ | १० | दिनाऽव | दीन्यव |
| १६४ | ३ | मानो | मानोऽनेन |
| १६६ | ४ | त्रिवत् | त्रिवृत् |
| १६८ | ५ | द्विरात्रा | एवं द्विरात्रा |
| ,, | ६ | भवन्ति । | भवन्ति । उभयतोतिरा-त्राणि सत्राणि भवन्ति । |
| १६९ | ५ | क्रतु | क्रतुकर्म |
| ,, | ७ | तस्मात्स्थाना | तस्मात्सत्रात्सार्थां |
| १७० | २ | इप्टं | इष्टं |
| ,, | ७ | तयोः | तयोरह्नोः |
| १७३ | १ | चत | च ति |
| १७४ | २ | क्तौ | क्ते भवतः । ततश्च ना-नावीर्ये नानाफले |
| १७५ | ,, | छन्दोमन | छन्दोम |
| १७६ | ३ | वृद्धिः । विश्वं कर्मा | वृद्धिः शपश्कुः । विश्वं कर्म करणीयम |
| ,, | ६ | ‘ प्रथे | ‘त्वे च ’ इति ह्रस्वत्वम् । ‘ प्रथे |
| १७७ | ६ | न्तेन | न्ते तेन |

| पुटे. | प. श्लो. | मुद्रितपाठः. | शुद्धपाठः, पाठान्तरं च. |
| --- | --- | --- | --- |
| १७९ | २ | जयन् | सृजन्त |
| ,, | ३ | त्रयं | त्रयसंख्यं |
| १८२ | ,, | नाहं | नाहं अनूचीनमहः |
| १८३ | ४ | मपि | मपि गवा |
| १८५ | ५ | क्यप्च' | 'कृञः श च' |
| १८६ | ६ | 'तत्पुरुषे' | 'तत्पुरुषे तुल्यार्थ' इति |
| १८७ | ४ | भवन्ति, | भवन्ति, कथं ? |
| ,, | ७ | गर्गा | गहा |
| ,, | १० | वाति | वन्ति |
| १९२ | ४ | 'षपूर्वस्य' | 'षपूर्वे' |
| १९४ | ५ | एको | विभक्तैको |
| १९५ | १ | सहस्राद्धा | सहस्राद्धा व्रा |
| २०४ | ,, | निति। | निति |
| २०५ | ४ | सद | साद |
| २०८ | १ | र्वान्ते नीयते | र्वास्ता नीयन्ते |
| २०९ | ८ | आभि | आङाभि |
| २१२ | ३ | दिभिः | दिभिश्चतूरात्रैः |
| ,, | ५ | गत | गतार्थ |
| ,, | ६ | संहारा | संग्रहा |
| २१४ | १ | संजयाख्यौ | संजयाख्यौ चतूरात्रौ |
| ,, | ४ | एता....पुष्टे....पुष्टिः | एतान्प्रसिद्धा....पुषे.... पुषिः |
| २१५ | ४ | वारुणं | वारुणो |
| ,, | ,, | कपालमै | कपाल ऐ |

| पुटे. | पङ्क्तौ. | मुद्रितपाठः. | शुद्धपाठः, पाठान्तरं च. |
|---|---|---|---|
| २१५ | ६ | मौषध्य | मौत्तर्य |
| २१६ | २ | भ्यासंगो | भ्यासंग्यो |
| ,, | ४ | भ्यासंगा | भ्यासंग्या |
| २२२ | ,, | धर्मा | धर्मः सर्वपृष्ठः |
| २२५ | ,, | पृथिव्यां | पृथिव्यां दिवि |
| ,, | ९ | स्वरः वि | वि |
| २२७ | ४ | क्रम | क्रमण |
| २२९ | १ | ‘ दी | ‘ न किंचि दी |
| ,, | ४ | भावयिता विश्वस्यापि | भावयिता त्वं विश्वस्यासि |
| ,, | ११ | भूतेभ्यस्त्वामु | भूतेभ्य उ |
| २३१ | ,, | वल्गनं | आवल्गनं |
| २३३ | १ | पर्णा | पूर्णा |
| २३९ | २ | भवतेर्लुटि | भवतेर्लेटि |
| २४१ | ३ | प्रवृद्धबलां | प्रवृद्धबलमिनां |
| २४२ | ८ | उच्चैर्हे | उच्चैर्घो |
| २४६ | २ | शित्वा | ङिन्त्वा |
| २५५ | ,, | अभ्यासश्च | अभ्यासाग्यावान् च |
| २५६ | १ | देवाः | । तदेवाह |
| २७१ | ७ | अह्रुता | अह्रुताः |
| २८५ | २ | ष्टाश्च | ष्टाच्च |
| २८७ | ,, | अरणा | अरणात् |
| २९२ | १ | यथा | यद्वा— |
| ३२७ | ५ | । प्रयुत | प्रयुतम् । |

